THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

1



# PURANAPARYALOCHANAM

## ( *Samikshatmaka Bhaga* )


*By*

Dr. Shrikrishnamani Tripathi

**Acharya, M. A., Ph. D., Sahityaratna**

*Prof & Head of the Deptt of Puranetihas*

*Shri Sampurnananda Sanskrit Vishwavidyalaya*

VARANASI.

*Edited by*

Sripati Awasthi & Vishwanath Pandey







THE

CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI–221001

1975




सरयूपारीणब्राह्मणवंशावतंसानां सदाचारपूतानां
प्रख्यातपण्डितकुलप्रसूतानां श्रीतातपादानां
( स्वर्गीय पं० नागेश्वरमणित्रिपाठिनां )
पुण्यस्मृतौ प्रस्तुतोऽयं
पुराणपर्यालोचनस्य
समीक्षात्मको
भाग ।

श्रीकृष्णमणित्रिपाठी

# विषय-सूची

पृष्ठ संख्या

# किञ्चित् प्रास्ताविकम्

वस्तुतो भारतीयमध्ययनं वेदत एवारभ्यते, यतो हि वेदाः सन्ति भारतीयसंस्कृतेर्मूलमाधारः। विश्ववाङ्मये वेदात् प्राक्तनं किमपि साहित्यं नोपलभ्यत इति सर्वैः पौर्वात्यैः पाश्चात्यैश्च विपश्चिद्भिर्मन्यते। अतः श्रद्धालवो हिन्दवः सर्वतोऽधिकं वेदप्रामाण्यमेवाभ्युपगच्छन्ति, तन्मूलकस्मृतिपुराणानुसारमाचरन्ति, व्यवहरन्ति च निरन्तरम्। संस्कृतवाङ्मये पुराणानामस्ति एक विशिष्टं स्थानम्। वेदस्मृत्योरनन्तरं पुराणानामेवास्मिन् जगति प्रामाण्यमङ्गीक्रियते। यतोऽत्र वेदार्थमेव स्पष्टीकर्तुं ज्ञानकर्मोपासनानां सिद्धान्ता अतिसरलया भावगम्यया प्राञ्जलया भाषया विविधाभिर्भक्तशिरोमणीनां मानवमणीनां कथाभिः सम्यगवबोधिताः सन्ति, येषां मननद्वारा साधारणबुद्धयोऽपि जना व्यावहारिकीं स्थितिं सम्पादयन्तो वेदोपनिषत्प्रतिपाद्यं मानवानां प्रधानं लक्ष्यं परमात्मानं प्राप्य मुक्ता भवितुमर्हन्ति। वेदानां यथार्थमवगन्तुं पुराणानामस्ति पूर्णः सहयोगः। अतो वेदार्थानां विस्ताराय पुराणानुशीलनस्यावश्यकता प्रदर्शिता महाभारतस्यादिपर्वणि—

इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्। १।२६७

अतो भगवन्निःश्वासरूपापौरुषेयवेदवत् पुराणानामपि प्रामाण्यं सिध्यति। वस्तुतोऽनादिपरम्परातः प्रचलितायाः भारतीयसंस्कृतेः सदाचारस्य वर्णाश्रमधर्मस्य समस्तस्य समाजस्य सम्पूर्णस्य राष्ट्रस्य च मर्यादासंरक्षणं यथा वेदैर्विधीयते, तदनु स्मृतिभिः सम्पाद्यते, तथैव पुराणैरपि क्रियत इति न संशयग्रस्तम्। वेदानां दुरूहतया तदीयतत्त्वसाक्षात्कारो यादृक् काठिन्यमावहति, न तादृक् सरलातिसरलभाषानिबद्धानां पुराणानामस्ति काठिन्यम्।

साधारणेष्वपि जनेषु वेदरहस्यज्ञानस्यावश्यकत्वमनुभूय भगवान् कृष्णद्वैपायनो महर्षि र्व्यासदेवः। पुराणानि रचितवान्, कृतवांश्च तत्र ज्ञानकर्मोपासनापेक्षया ऋजुभिरुपायैर्मानवमात्रेणाचरणीयस्य भक्तिमार्गस्याविष्कारम्। अतो निखिलानां जनानां कल्याणकारिभिरुपायैः परिपूर्णानां पुराणानामनुशीलनेन भवति मानवताया जागर्तिः, सम्यक् सञ्जायते धर्मस्य संरक्षणम्, मानवजन्मनः साफल्यं च सिध्यति।

यथा दिवसे प्रकाशो भगवता भास्करेण भवति, रात्रौ प्रकाशश्चन्द्रमसा जायते, गृहान्धकारो दीपेनापनीयते, तथैव परमात्मस्वरूपप्रदर्शनार्थं ज्ञानं तु पुराणवचनैरेव सम्भवितुमर्हति। विविधाभिर्वासनाभिर्भूयो भूयो भवाटव्यामस्यां बंभ्रम्यमाणानां जीवानां कृते पुराणमस्ति सरल आलोकमार्गः। अत एव लोकपितामहेन ब्रह्मणा सर्वासां विद्यानामादौ पुराणविद्यैव स्मृता, ततो वेदा आविर्भूताः[1]।

सर्वशास्त्राणां ज्ञातृत्वेऽपि पुराणज्ञानाभावत् कस्यापि पुरुपस्य विचक्षणत्वं न सम्भवतीति विष्णुपुराणस्यास्ति डिण्डिमघोपः[2]।

पद्मपुराणे तु प्रोक्तमस्ति यद् यैर्वेदास्तदितराणि च शास्त्राणि सम्यगधीतानि, परन्तु तैर्यदि पुराणानामध्ययनं न कृतं चेत्, तर्हि तेपामुत्तमज्ञानप्राप्तिर्न जायते[3]। धार्मिकसन्देहानां निवृत्तये प्रवृत्तये चाध्यात्मिक-परलोकमार्गे पुराणानामनुशीलनं नितान्तमस्त्यावश्यकम्। इदं हि विरुद्धैर्हेतुभिर्न हातव्यम्। शास्त्रेषु अप्रतर्क्यपुराण-मानवधर्मशास्त्र-साङ्गवेद-चिकित्सासु पुराणस्यैव प्रथमं स्थानं निर्दिष्टमस्ति महाभारते, यतो हीमानि भगवत आज्ञारूपाणि सन्ति[4]।

पुराणं मानवजातेर्हृदयान्धकारस्यापाकरणाय सर्वथा मणिमयं प्रकाशकमस्ति। परमतत्त्वदृष्ट्या पुराणं हि नूनमस्ति श्रद्धेयं शास्त्रम्। पुराणेषु विविधैर्भावैर्विभिन्नैर्नामभिर्विविधेभ्योऽधिकारिभ्यो विविधैः प्रकारैः परमं पुरुपार्थमवगन्तुमुपायाः प्रदर्शिताः सन्ति। अद्यत्वे पुराणानां सम्यगध्ययनाभावादेव तत्र निर्मूला अनेके आक्षेपा भवन्ति। गभीरतया तदनुसन्धाने क्रियमाणे तेपामाक्षेपाणामनायासेन निराकरणं जायते।

---

१. पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥ = म० पु० ५३।३

२. यो विद्याच्चतुरो वेदान् साङ्गोपनिपदो द्विजः।
न चेत् पुराणं संविद्यान्नैव स स्याद् विचक्षणः॥ = ३।५।१

३. बहुशास्त्रं समभ्यस्य बहून् वेदान् सविस्तरम्।
पुंसोऽश्रुतपुराणस्य न सम्यग् याति दर्शनम्॥ = ४।१०५।१३

४. पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः॥

यदि पुराणान्याक्षेपपूर्णानि स्युः, तर्हि महादार्शनिकाना परमतत्त्व-विचारकाणां कुमारिलभट्ट-श्रीशङ्कराचार्य-रामानुजाचार्यप्रभृतीनां महानुभावाना निर्भ्रान्तप्रमाणानि पुराणानि कथङ्कार स्वीकृतानि स्युः ?

पुराणानामन्तस्तलं प्रविश्य समीक्षायां क्रियमाणां स्फुटमवगम्यते,यत् पुराणेषु देशकालस्थित्यनुसारं सर्वानुकूलं कर्तव्यमुपदिष्टं वर्तते, येन मानवानां सर्वथा कल्याणमेव जायेत । अतः पुराणपारायणशीलैर्विद्वद्भिर्भारतीयजनताया महते उपकाराय राष्ट्रसमुन्नतये च पुराणज्ञानराशिर्नूनं प्रसारणीयः प्रचारणीयश्च । अद्यत्वे स्वतन्त्रताया उषःकाले नित्यनवीनैरुत्साहैरभिनवचाक्यचिक्ययुगेऽपि पुराणानि महान्तमुपकारं कर्तुं प्रभवन्ति । भारतीयपथप्रदर्शनाय पुराणानि, महाभारतं रामायणञ्च सर्वतोऽधिकं साहाय्यं विधातुं शक्नुवन्ति । यतो हि पुराणादीनां भूमिः समस्तं भूमण्डलं वर्तते, न च केवलं भारतवर्षमात्रम् । पुराणव्यवस्थायां विश्वबन्धुत्वस्यादर्शो निहितोऽस्ति, येनान्ताराष्ट्रियसमस्याया समाधानेऽपि पर्याप्तं साहाय्यं भवितुमर्हति ।

लौकिकविषयाणामिव पारलौकिकविषयाणामपि पुराणेषु पर्याप्तं विवेचनं विद्यते । यतो हि पुराणानां दृष्टिपथे न केवलं भारतवर्षस्यापितु तत्रोर्ध्वाधोभागे वर्तमानानां चतुर्दशभुवनानामपि पदार्थाः सम्यग् विवेचिता सन्ति । एवं सार्वजनीनं हितमुपदेष्टुं प्रवृत्तानां पुराणानां समीक्षा कस्य सचेतसो मानवस्य न प्रियकरी कल्याणकरी च स्यात् ?

पुराणं हि हिन्दुजातेः सर्वस्वं भारतीयसंस्कृते पोषकं मानवसमाजस्य पथप्रदर्शकमार्यसाहित्यस्य चाधारस्तम्भो विद्यते, येन सर्वविधं धार्मिकनैतिक-सामाजिक सद्व्यवहारादीना सौविध्यमवाप्यते । भारतीयप्राचीनेतिहासस्यान्धकारे युगेऽपि पुराणप्रभया प्रकाशः प्राप्यते । अत एव महर्षिणा याज्ञवल्क्येन विद्यागणनाया पुराणस्य प्राथम्यमुपात्तम्[१] ।

यथा वेदा ईश्वरानुग्रहेण पूर्वं ब्रह्मणो हृदि आविर्भूता ततो विभिन्नानां महर्षिणां हृदाकाशे प्रकाशिताः, तदनन्तरं च मानवसमाजे विस्तृताः तथैव सर्वप्रथमं पुराणविद्या ब्रह्मद्वारैव स्मृता, तदनु देवर्षिहृदयेषु

१. पुराण न्यायमीमांसा धर्मशास्त्राङ्गमिश्रिता ।
वेदाः स्थानानि विद्याना धर्मस्य च चतुर्दश ॥ = या० स्मृ०

परमिदानीं दीर्घकालव्यवधानात्, प्रकृतिपरिवर्तनात्, अनेकाक्रान्तेः, राजनीतिविप्लवाच्चांशिकरूपेण पुराणनिर्दिष्टानां नदी-जनपदादीनां यथार्थतः परिचयोऽद्यत्वेऽतिकठिनो जातः। परं प्रसन्नतायाविषयोऽस्ति यत् पुरातत्त्वानुशीलननिरतानां गवेषकाणां परिश्रमेण पुराणभौगोलिक-विवरणसत्यता शनैः शनैः प्रमाणीभवति।

अथर्ववेदस्य पृथ्वीसूक्ते मातृभूमिं प्रति भारतीयभावनाया अत्यन्त-मुदात्तं वर्णनं विद्यते। यथा माता स्वकीयं तनयं वात्सल्येन दुग्धं पाययति तथैवास्माकं मातृभूमिरपि विभिन्नाभिः पयस्वतीभिः भारतीयां जनतामाप्याययति। अत एवेयं विश्वम्भरा धात्री चोच्यते। माता भूमिः पुत्रो अहं पृथिव्याः (१२।१।१२) अस्मिन् मन्त्रे मातृभूमेः स्वरूपस्य तया तया सह मानवहृदयस्य चैकताया यादृशमुत्कृष्टं रूपं वर्तते, तादृशमन्यत्रास्ति दुर्लभम्। भारतीयसंस्कृतौ सत्यस्य यः प्रकाश उपलभ्यते, तस्योद्गमो मातृभूमिरेवास्ति[1]। वायुपुराणेनापि पृथिव्या अनन्तेति नाम निर्दिशता सा सर्वभूताश्रया जननी प्रोक्ताऽस्ति—

> जननी सर्वभूतानां सर्वभूतधरा धरा।
> नानाजनपदाकीर्णा नानाधिष्ठानपत्तना॥
> नानानदनदीशैला नैकजाति - समाकुला।
> अनन्ता गीयते देवी पृथ्वी बहुविस्तरा॥ = ५।२३

पृथ्वीसूक्ते राष्ट्रं त्रिविधं निर्दिष्टमास्ते-निकृष्टं मध्यमुत्तमं च। तत्र निकृष्टकोटिके राष्ट्रे भौतिकसम्पत्तेः पूर्णतया विकाशो दृश्यते। मध्यमे राष्ट्रे जनताया वृद्धौ सर्वदा चाञ्चल्यमवतिष्ठते। उत्तमस्य राष्ट्रस्य वैशिष्ट्यं तत्रत्या संस्कृतिः भवति। अतो वेदमन्त्रद्वारा उत्तमराष्ट्रे मानसिकस्य तेजसः शारीरिकबलप्राप्तेश्च प्रार्थना कृता विद्यते[2]। पृथ्वी हि राष्ट्रस्य शरीरम्, जनता प्राणः, संस्कृतिश्चास्ति मनः। एषां त्रयाणां सम्मेलनेनैव राष्ट्रस्यात्मनो भवति निर्माणम्। अतो यस्मिन् कस्मिन्नपि राष्ट्रे समुत्पद्य तत्रत्यायाः संस्कृतेः समुन्नतिकरणं तत्रत्यायाः प्रत्येकव्यक्तेः भवति, परमं कर्तव्यम्। वस्तुतः स्वसंस्कृतेः समुन्नतिद्वारैव मानवो राष्ट्रे जन्मग्रहणस्य ऋणान्मुक्तो भवितुमर्हति। यथा प्रत्येकव्यक्तिः स्वकीय-

---

१. यस्य हृदयं परमे व्योमन् सत्येनावृतममृतं पृथिव्याः।

२. स नो भूमिस्त्विषिं राष्ट्रे दधातूत्तमे।

नैजं वैशिष्ट्यं विभर्ति तथैव प्रत्येकराष्ट्रस्य नैजी विशेषता भवति, यया तद्राष्ट्रमपरराष्ट्रापेक्षया समुन्नतं प्रतीयते। तत्र भारतस्य वैशिष्ट्यमस्माभिर्वेदपुराणद्वारैवावगन्तुं शक्यते। अन्यराष्ट्रापेक्षया भारतस्य वैशिष्ट्यमत्रैवास्ते यत्तत्राध्यात्मिके ज्ञाने, स्वधर्मपालने, परोपकारकरणे संयमे राष्ट्रस्योद्धारे सर्वं समुन्नतौ च बलं दत्तमस्ति।

यदि वेदा भारतीयसंस्कृतेः सर्वोच्चमुद्गमं स्थानमस्ति तर्हि पुराणानि सन्ति भारतीयसंस्कृतेः शाश्वतानि स्रोतांसि। हिन्दुजातिसंस्कृतिसम्बन्धिनः कदाचिदेव केचन एवम्विधा विषयाः सम्भवेयुः, येषु प्रकाशः पुराणैः न दत्तः स्यात्। वेदानन्तरं भारतीयसंस्कृते र्वास्तविकं स्वरूपमस्माभिः पुराणैरेवावगन्तुं शक्यते। पुराणानुसारं पुराणानि हि धार्मिक-सामाजिक-सांस्कृतिक-राजनीतिक-आर्थिकादिषु क्षेत्रेषु लोकवर्गस्य विचाराणां कार्याणां च यथार्थं चित्रमुपस्थापयन्ति। पुराणानामनुशीलनेनास्मभिः स्वजीवनोद्देश्यपूर्त्तये आदर्शमयः सदुपदेशो लभ्यते। यतो हि पुराणेष्वेकत्र वाहिकामुष्मिकहितसिद्धये उदाहरण-प्रत्युदाहरण-कथानकोपकथानकद्वारा शुभकर्मणि प्रवृत्तयेऽशुभकर्मभ्यश्च निवृत्तये सदुपदेशो दत्तोऽस्ति–रामादिवत् वर्तितव्यं न रावणादिवत्। पुराणनुसारमस्माकं देशस्य नामास्ति भारतवर्षम्। तथात्र निवासिन्याः प्रजाया नामास्ति भारती। पुराणेषु भारतवर्षस्य भौगोलिको विस्तारः समुद्रादुत्तरे हिमालयाच्च दक्षिणे प्रोक्ताऽस्ति[1] तथा कन्याकुमारीतो हिमालये गङ्गाया उद्गमस्थानपर्यन्तं विस्तृतो भूभागो भारते सम्मिलितोऽभिमतोऽस्ति[2]। निरुक्तशास्त्रदृष्ट्या वायु-मत्स्यपुराणयो र्भारतवर्षस्य निर्वचनं कृतमस्ति यत् प्रजानां भरण-पोषणकारणादेका सज्ञा भरत इत्यस्ति[3]। एतन्निरुक्तेराधारेणायं देशो भारतमित्युच्यते। इदमस्य रहस्यम्-भरण-पोषणात्मकेन गुणेन मनुर्भरतः प्रोक्तोऽस्ति, तथा यत्र भूभागे मनु-

---

१ उत्तरं यत् समुद्रस्य हिमवद्दक्षिणं च यत्।
वर्षं तद् भारतं नाम यत्रेयं भारती प्रजा ॥=वा० पु० ४५।७५

२. आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै।
तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ॥=४५।८१

३. भरणाच्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् ॥=४५।७६

पद्धत्यनुसारं तत्सन्ततयो निवसन्ति, तन्नाम भारतमिति जातम् । यद्वा राज्ञो ऋषभदेवतनयस्य भरतस्य नाम्नाऽयं देशो भारतमित्युच्यते, अथवा दौष्यन्तेर्भरतस्य (सर्वदमनस्य) नाम्नाऽस्माकं देशो भारतमिति निगद्यते । एतत्समीक्षा ग्रन्थे १६० पृष्ठे द्रष्टव्या ।

पुराणेतिहासयोः या भारतवर्षस्य वन्दना विद्यन्ते, तासु महाभारतस्य भीष्मपर्वणि भारतवन्दना भावदृष्ट्या अत्यन्तमुत्कृष्टाऽस्ति[1] । तेषु पद्येषु येषां चक्रवर्तिनां राज्ञां नामानि गणितानि सन्ति, तेषां धार्मिको भाव, प्रजावात्सल्यम्, सत्यपालनम्, परोपकारमयं जीवनम्, निरन्तरं लोककल्याणकामना, तैः स्थापिता आदर्शमयी व्यवस्था च भारतीय-गौरवस्यास्ति विषय । ये महापुरुषाः स्वदेशस्य कालस्य च प्रतिनिधियो भवन्ति तेषामेव वृत्तान्तोपस्थापनं पुराणेतिहासयोरनिवार्यं जायते । एतदनुसारमेव तत्र तेषां चरित्रचित्रण कृतमस्ति । पुराणेषु भारतवर्षं स्वर्गादप्युत्कृष्टं वर्णितमस्ति । तत्र सिद्धान्तितं वर्तते यद् देवा स्वर्गे गीतं गायन्ति यत्ते मानवा सन्ति धन्यतमा ये भारते जन्म गृह्णन्ति । भारत-वसुन्धरा हि स्वर्गादपि उत्कृष्टास्ति, यतो हि तत्रत्या जनाः स्वर्गं मोक्ष चोभय लब्धु शक्नुवन्ति । ये स्वर्गे भुक्तदेवत्वभोगास्ते मोक्षाय भूयो भारते जन्म गृह्णन्ति । सुरत्व प्राप्तानस्मानपेक्ष्याधिक सुकृतिनस्ते । अतो भारतवर्षे जन्मग्रहणं नास्ति साधारणस्य पुण्यस्य फलम्[2] ।

अपि च जम्बूद्वीपे वर्तमानेभ्योऽन्यवर्षेभ्यो भारतवर्षं सर्वश्रेष्ठं ज्येष्ठं चाभिमतम्, यतो हि अन्यानि वर्षाणि केवलं भोगस्थानानि सन्ति, किन्तु भारतं कर्मभूमिः प्रोक्ताऽस्ति । अत्र सत्कर्मानुष्ठानद्वारा मानवो भोग मोक्षं चोभयमपि लब्धुं शक्नुयात् । तथाहि विष्णुपुराणे[3] । इदमस्य-

---

१. प्रियमिन्द्रस्य देवस्य मनर्वैवस्वतस्य च ।
पृथोस्तु राजन् वैन्यस्य तथेक्ष्वाको महात्मन ॥
अन्येषां च महाराज ! क्षत्रियाणां बलीयसाम् ।
सर्वेषामेव राजेन्द्र ! प्रियं भारत ! भारतम् ॥=६।९।६

२. गायन्ति देवाः किल गीतकानि धन्यास्तु भारतभूमिभागे ।
स्वर्गापवर्गास्पदहेतुभूते भवन्तिभूय पुरुषा सुरत्वात् ॥=२।३।२४

३. अत्रापि भारत श्रेष्ठ जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः ॥
इत सम्प्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति वै ।
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा. मुने ॥=२।३।४।२२

रहस्यम्-भारतभूरेव सदसत्कर्मानुष्ठानयोग्या भूमिः। भारतादन्या भूमयो हि सुखदुःखसाक्षात्काररूपस्य भोगस्य स्थानानानि। अत्र चानुष्ठितेन विहितकर्मणा धर्मः, निषिद्धेन च कर्मणाधर्मो जायते, ताभ्यां च यथाक्रमं सुखदुःखे तद्भोगाश्च जायन्ते, नत्वन्यत्र समनुष्ठितेन कर्मणा तथेति भावः।

यदा काचिज्जातिः परस्परविद्वेषवशात् स्वकीयमादर्शमयं चरित्रं विस्मृत्यात्मनः स्वरूपं परित्यजति, अन्याधीना च भवति तदा विश्वस्य इतरजातयः तस्या उपेक्षणं कर्तुं प्रारभन्ते। तद्धार्मिका ग्रन्था· पोपकल्पना, तत्पूर्वजा असभ्याः, तद्भाषा अव्यवहार्या, तद्वेशभूषादिकं लज्जाजनकम्, तदाचार-विचार-व्यवहारादिकं च बालानां क्रीडनकम्, इत्याद्युक्त्वा तां जातिं सर्वथाऽयोग्यामुद्घोष्टुं चेष्टन्ते। एतन्नैसर्गिकनियमानुसारं विविधा जातयोऽन्येषां कुचक्रे समागत्य स्वकं स्वरूपं परिहरन्ति। तासामस्तित्वं केवलमितिहासपृष्ठेष्वेवाङ्कितमवतिष्ठते।

विश्वस्येतिहासोऽस्ति साक्षी यद् हिन्दुजातिः विश्वस्मिन् सर्वतः प्राचीनतमा। अस्याः पवित्रतममुद्देश्यानि सन्ति, स्वधर्माचरणम्, परोपकारकरणम्, स्वार्थत्यागः, ईश्वरं प्रति अनन्यप्रेमप्रतिष्ठापनम्, समस्तं विश्वं विष्णुमयं मत्वा तत्र श्रद्धाचारणं च। अतस्तत्र विश्व-बन्धुत्वभावनया वसुधैव कुटुम्बकम् इति पुनीतो भावः सर्वदा तिष्ठति। या हिन्दुजातिः प्रारम्भतः अन्यासु जातिषु शासनं करोतिस्म, सैव दैववशाद् अन्याधीना भूत्वा शासिता शोषिता चाभवत्। सर्वप्रथमं हिन्दुजातौ बौद्धानां शासनमजायत, ततो यवनानामक्रमणमभूत्। अनयोः शासनाधीनयाऽपि हिन्दुजात्या शिक्षापद्धतिः स्वाधीनैव रक्षिता। एतत्परिणामस्वरूपेण कुमारिलभट्ट-स्वामिशङ्कराचार्यसदृशा अद्भुतप्रति-भाशालिनो मनीषिणोऽस्यां जातावुत्पद्य बौद्धसाम्राज्यं समूलमुन्मूल्य बौद्धान् भारताद्बहिः कृतवन्तः। यवनशासनकालेऽपि शिक्षापद्धतिः हिन्दु-नामधीनैव सुरक्षिताऽवर्तत। येनानेके धर्मवीरा हिन्दवः स्वजातेः धर्मस्य च संरक्षणे कृतसङ्कल्पा आसन्। महाराणाप्रताप-छत्रपतिशिवाजी-गुरुगोविन्दसिंह-हकीकतरायप्रभृतिभिर्महापुरुषैश्छिन्ना भिन्ना वा हिन्दु-जातिः प्रणाशात् संरक्षिता, राजस्थानीयाभिः पद्मिनीप्रभृतिभिः सतीना-रीभिश्च जौहरव्रतं स्वीकृत्य प्रज्वलितेऽग्नौ स्वानि शरीराणि भस्म-सात्कृत्वा भारतीयकुलयोषितामादर्शभूतः पातिव्रत्यधर्मः परिरक्षितः।

परिणामस्वरूपे यवनसाम्राज्यस्य सत्ता शिथिला जाता। अस्मिन्नेवासरे योरपनिवासिन्या आंग्लजातेर्भारतवर्षे प्रवेशोऽभवत्। शनैः शनैः शासनस्याधिकारः तस्या हस्तगतो जातः। तत्प्रमुखेन शासकेन लार्ड-मेकालेमहोदयेन यदा दृष्टं यद् भारतीयाः पाश्चात्यानुपेक्षन्ते घृणादृष्ट्या च तान् पश्यन्ति, तदा तेन शिक्षापद्धतिं स्वाधिकारे कृत्वा एवंविधानि पाठ्यपुस्तकानि निर्मापितानि, यान्यधीत्य हिन्दुजातिः स्वं वास्तविक-मितिहासं विस्मृत्यांग्लजात्या सह सम्मिलिता स्यात्। तेषु पुस्तकेषु स्थले स्थलेऽङ्कितमासीद् यदार्या न सन्ति भारतस्यादिनिवासिनः, किन्तु मध्यएशियातस्तत्रत्यानां दलद्वयं प्रचलितम्। तत्रैकं दलं यूरोपाभिमुखं प्रस्थितं द्वितीयं च भारते आगत्य न्यवसत्। अतो योरपवासिनी आंग्ल-जातिस्तथा भारतनिवासिनी हिन्दुजातिश्च द्वे अपि एकस्य पितुः स्तः सन्तत्यौ उभयत्र भेदभावोऽनुचितः। प्रथमं ये आर्या भारते आगतास्ते विद्याविहीना गुणहीना असभ्या आरण्यका इव महामूर्खाः कृषकाश्चासन्। ते कृषिं कर्तुं जानन्तिस्म, पशून् पालयन्तिस्म, गोचारणसमये यानि गीतानि गायन्तिस्म, तानि एकत्र संगृह्य वेदनाम्ना व्यवहर्तुं प्रारभन्। अतो न वेदः कस्यचन महत्त्वस्य पुस्तकमस्ति, आर्याणां संस्कृतभाषा, मृतभाषाऽस्ति, हिन्दी चाल्पसंख्यकानां भाषा वर्तते, हिन्दूनां वेषभूषादिकं घृणास्पदं तथा तेषां भोजनं बलहीनं विद्यते, एषां व्यवहारो लोकविरुद्धः आचार-विचाराश्चासभ्यानां चिह्नानि सन्ति, इत्यादि, इत्यादि।

पाश्चात्यैरनुभवः कृतो यद् भारतवर्षे यावद् विधिवद् वेदपाठो भविष्यति, तथा पुराणानां प्रवचनं चलिष्यति तावद् हिन्दुधर्मस्य, हिन्दु-जातेः, हिन्दुसंस्कृतेश्च न कापि क्षतिर्भविष्यति। एनमनुभवं लक्ष्यीकृत्य तैः लेखनी गृहीता, अनेकानि पुस्तकानि च रचितानि, येषु पुराणा-*नामसत्यतां तत्कथासु परस्परं विरुद्धतां, असंभवता, अदूरदर्शितां* मूर्खतां च साधयितुं महती कुचेष्टा कृता, यानि पठित्वा अभिनवशिक्षित-वर्गः साधारणजनता च व्यामोहिता सती पुराणानि उपेक्षितवती। एवं विधाया दूषितशिक्षापद्धतिदृष्टेः परिणामोऽभवद् यद् आंग्लशिक्षित-समुदायस्य मानसिकः स्तर एव परिवर्तितः। आंग्लशिक्षादीक्षिताः स्वान् भारतीयान् कथयितुं संकोचं तथा आंग्लानामनुकरणे गौरवं चानुभवन्। एवंविधां शिक्षामनुभूय लार्डमेकालेमहोदय आत्मानं कृत-कृत्यं मत्वा महत्या प्रसन्नतया स्वपितुः पार्श्वे एवमाशयकमेकं पत्रं

भ्यलिखत्—तात ! ये हिन्दवः आंग्लशिक्षां प्राप्नुवन्ति, ते स्वधर्मन्नि सहानुभूतिं कुर्वन्ति। कियन्तस्तु नास्तिका भवन्ति, केचन च ख्रीष्टधर्मं मन्तुं प्रवर्तन्ते। अहमेकं वर्गमेवंविधं निर्मातुमिच्छामि, योऽस्माकं तेषां च मध्येऽनुवादककार्यं कर्तुं शक्नुयात्। वर्गोऽयं रक्त-रङ्गयो भारतीयो विष्यति, परन्तु विचारेषु नूनमांग्लवद् भविष्यति[1]।

अनया लार्डमेकालेविपाक्तशिक्षया शिक्षितसमुदायो हिन्दुधर्म-न्दुसंस्कृति-हिन्दुजातीनां प्रबलः शत्रुरभवत् तथा स्वमतीतं गौरवं स्मृत्य अवतारवाद-वर्णाश्रमव्यवस्था-मूर्तिपूजन-मृतश्राद्धादीन् वैदिक-राणिकविषयान् खण्डयितुं प्रवृत्तः। अस्या अभिनवशिक्षाया भारतीयेषु र्थिषु महान् कुप्रभावो जातः। अवरङ्गजेबप्रभृभिर्यवनैर्यावती हानि जायत, तावती हानिरनया शिक्षया शिक्षितैर्हिन्दुनामधारिभिर्जाता।

कस्या अपि जातेरुत्थानं पतनं च तज्जातीयसाहित्येऽवलम्बितं भवति। यस्या जातेः स्वधार्मिकसाहित्यतो घृणा जायते, तस्याः पतन-मनिवार्यतया भवति। इयमेव दशाऽद्यत्वे हिन्दुजातेरुपस्थिताऽस्ति। साम्प्रतमस्या जातेर्विश्वासो निजधार्मिकग्रन्थेभ्यो विच्छिद्यते। आंग्लानां यवनानां च स्वधार्मिकग्रन्थेषु यावान् विश्वासो वर्द्धते, तावती एव हिन्दुजातिः स्वधार्मिकग्रन्थानामध्ययनाद् विमुखा भवति। एतस्य मुख्यं कारणमस्ति धार्मिकशिक्षायाः प्रचार-प्रसारयोरभाव एव।

यस्यां शिक्षायां धर्मस्य न भवति स्पर्शः, तया शिक्षया युवकेषु-युवतीषु च सद्गुणानां प्रादुर्भावस्य स्वप्नदर्शनमुपहासास्पदातिरिक्तं किमपि न संभवति। सुशिक्षाद्वारैव विवेकशीलाया वृद्धे विकाशो भवति,

---

1. **Macauley's Letters to his father.**
No Hindu who has received education ever remains sincerly attached to his religion. Some continue to profess it as a matter of policy, but others profess themselves pure atheist and some embrace christianity. We desire to form a class who may be interpretors between us and the millions we govern, a class of persons Indian in blood and colour, but English in taste, in opinion, in morals and in intellect. (Puranavarma).

ज्ञानस्य वृद्धि र्जायते, कर्तव्यपालनस्य रुचिरुत्पद्यते, ईश्वरीयालौकिकशक्तिषु विश्वासः सम्भवति, महत्सु सम्मानभावो जागर्ति, सद्गुणार्जने उत्साहो वर्द्धते, स्वधर्मपालने प्रवृत्तिर्भवति, मानव सत्कर्मसु सदा प्रवर्तते तथा दुष्कर्मणो निवर्तते, स्वदेशगौरवरक्षणे च मनो लगति।

विश्वस्मिन् प्रत्येकदेशस्य कृते स्वसाहित्यस्यावश्यकता भवति, यतो हि साहित्यमेव सभ्यता-संस्कृत्यो परिचायकं भवति। यस्य देशस्य सभ्यतासंस्कृत्यो यावत्यो समुन्नतिशिखरारूढे भवत तस्य साहित्यं तावदेव समुन्नतिशीलं भवति। हिन्दूनां संस्कृतसाहित्येन समं समृद्धं विकासशीलं च साहित्यं नास्ति विश्वस्य कस्या अपि जातेः सविधे। यदि भाषा-भावदर्शन-आचार विचार-रीति-नीति-शिल्प कला-पुरावृत्त-विविधज्ञान विज्ञानादीनि एकत्र द्रष्टुं समीहा स्यात्तर्हि संस्कृतसाहित्यस्य वेद-स्मृति-पुराणानि द्रष्टव्यानि, यतो हि सन्त्येतानि एषामागाराणि। नमेषु तेषु चतुर्णां वर्णानामाश्रमाणाञ्च रीति नीति-आचार-विचारादीनां विस्तृतस्तत्वपूर्णश्चोल्लेखो विद्यते। पुराणद्वारा प्राचीनेतिवृत्त-सृष्टि प्रलय-वंश-वंशावली-युग मन्वन्तर कल्पादीनां सम्यग् ज्ञानमुपजायते तथा पुराणानामाख्यानोपाख्यानगाथाभि वेदानां वास्तविकोऽर्थोऽवगन्तु शक्यते। पुराणे स्वपूर्वजानां निर्मलो विचारो ज्ञायते, तथा पुराणानामनुशीलनेनैव विभिन्नजातीनामुत्पत्ति, समस्तस्य विश्वस्य विभिन्नभागानां भिन्नभिन्ननियमाश्च ज्ञायन्ते। पुराणज्ञानं विना संसारोऽन्धकारमयो भवति। उपासनाया मार्गद्वारम्, मुक्तेर्द्वारम्, ज्ञानस्याधारः, भक्ते साधनम् धर्मस्य प्रदीपश्च पुराणमेवास्ति। भगवदवतारवैशिष्ट्यं वर्णयन्त्यः पुराणानां गाथाः जीवमीश्वरशरणे समुपस्थापयितुमत्यन्तमुपयोगिन्यः सन्ति। किमधिकं वक्तव्यम्, ये ये विषया अन्वेष्टुमिष्टा स्युस्ते सर्वेऽपि पुराणेषु प्राप्तुं शक्यन्ते। महाभारतसम्बन्धे भगवता व्यासेन तु स्पष्टमुद्घोषितमस्ति यद् ये हि विषया महाभारते वर्णिता सन्ति, त एव सर्वत्र विवेचिता विद्यन्ते, यश्चात्र विषयो न विवेचितोऽस्ति स पुनरन्यत्र न दृश्यते[1]। तदनुसारं राजधर्माणां मन्त्रशास्त्रस्य नीतेः सदाचारस्य गृहस्थधर्मस्य-समदार कल्याणकारिशासनव्यवस्थायाः सङ्केतोऽपि मिलति। ईशापूर्व पञ्चशताब्द्याः प्रागपि भारत राजनीतिविचारधारा प्राप्यते। पुराणेषु

---

१. धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ [illegible]

गणतान्त्रिक-साम्राज्यवादिन्यौ राजनीतिकप्रवृती समानान्तरे प्रचलिते आस्ताम् । राजसंस्थायाः सम्बन्धे महाभारतस्य शान्तिपर्वणि प्रोक्तमस्ति यत् समस्तस्य जीवलोकस्याधारो राजधर्मोऽस्ति यतो योग-क्षेम-सुवृष्टि-व्याधि-मरण-भयानि राजन्येवावलम्बितानि भवन्ति[1] ।

तत्रैव पुनरुद्योगपर्वणि शान्तिप्रयासाय दूत भूत श्रीकृष्णद्वारा युधिष्ठिरं सन्दिशन्त्या देव्या कुन्त्या वचनं,यथा-वत्स ! कालो राज्ञः कारणं भवति, आहोस्वित् राजा कालस्य कारणं जायते। इत्यत्र त्वया सन्देहो न विधेयः । वस्तुतो राजैव कालस्य कारणमस्ति[2] ।

राजा हि सत्ययुग-त्रेता-द्वापर-कलियुगानां स्रष्टास्ति, तस्मात् सत्कर्मद्वारा त्वया सत्ययुगमुपस्थाप्य स्वर्गप्राप्तिर्विधेयेति मम निश्चिता मतिरस्ति ।

महान्तोऽपि वैज्ञानिका भूगर्भविद्याविशारदा विद्वांसोऽकथेन परिश्रमेण असंख्यं द्रव्यराशिं व्ययीकृत्वाऽपि यदन्वेषणं कर्तुं न पारयन्ति, तानि पुराणानि अनायासेनोपदर्शन्ति । पुराणानां विभिन्नेषु प्रसङ्गेषु यानि तीर्थ-पीठ-क्षेत्र वन-पर्वत-नद-नदी-सरोवराणां विवरणानि प्रदत्तानि सन्ति, तैरनुसन्धानकर्तृणा महत् साहाय्यमवाप्यते ।

न केवलं कविकुलकलाधरकालिदास-भास-माघ-भारवि-भवभूति-श्रीहर्ष-प्रभृतिभिर्भारतीयैरमरमहाकविभिरेव विभिन्नानि पुराणानि स्वस्वमहाकाव्याधारीकृतानि,प्रत्युत टालस्टाय-होमर-मिल्टन-शेक्सपीयर-प्रभृतीनां पाश्चात्यलेखकानां ग्रन्थावलोकनेन स्पष्टं प्रतीयते यत्तैरपि यत्र तत्र पौराणिकैराख्यानकैः स्वग्रन्थानां सज्जीकरणे न संकोचः कृतोऽस्ति । एवं निःसंशयं वक्तुं शक्यते यद् विश्ववाङ्मये पुराणानाम-प्रतिमं स्थानमस्ति । कालक्रमेणाद्यत्वे संस्कृतवाङ्मयस्य पठन-पाठनयोः ह्रासात् पुराणानुशीलन-श्रवण-मनन-प्रचार-प्रसाराणामुत्तरोत्तरं ह्रासो जायते । यत्र विद्यावतां भागवते परीक्षा इत्यनुसारं पुराणं विद्वत्ताया निकषा अभिमताऽऽसीत्, तत्र सदैव संस्कृतज्ञानशून्यानामल्पज्ञानामुपहास-

---

१. राजमूला महाभाग ! योग-क्षेम-सुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥

२. कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥=१२।१७

पात्रं जायते। अद्यत्वे विविधाभिः कुतर्कपूर्णाभिः व्यर्थशङ्काभिः पुराणानि व्यर्थीक्रियन्ते, परं पुराणं हि एका विशिष्टा विद्या वर्तते। पुराणविद्या हि गुरुमन्तरा सम्यक् नावगन्तुं शक्या। सद्गुरुद्वारा एषां शङ्कायाः समाधानं कर्तुं शक्यते तथा तेषां वास्तविकोऽर्थस्तद्रहस्यं चावगन्तुं शक्यते, नान्यथा।

संस्कृतवाङ्मये पुराणानामेकं विशिष्टं स्थानमस्ति तथा तेषां महन्महत्त्वमपि विद्यते सर्वसाधारणजनेषु सभ्यता-संस्कृत्योः प्रचारः प्रसारश्च पुराणानां प्रधानं कार्यमस्ति। पाश्चात्या इतिहासवेत्तारोऽपि पुराणानि भारतीयानाममूल्यं निधिं मन्यन्ते। यद्यपि भारतीयसाहित्ये पुराणैः सहेतिहासस्यापि नाम समागच्छति, तथापीतिहासे तासामेव घटनानां वर्णनं विद्यते, या भूतकाले व्यतीता, किन्तु पुराणानि भविष्यद् घटनानामपि संकेतं कुर्वन्ति। अतः पुराणानां विषयः इतिहासादपि अधिको व्यापको विस्तृतश्च विद्यते। वास्तविक इतिहासो न काव्यवत् कल्पनामाश्रयते, नवा स धर्मशास्त्रवदादर्शोन्मुखो भवति, किन्तु स तात्कालिकं यथार्थं चित्रमुपस्थापयति। कस्या अपि मानवजातेरितिहासः तदैव पूर्णो भवितुमर्हति, यदा तस्य कथानकं सृष्टेरारम्भतः क्रमबद्धरूपेण लिखितं स्यात्। इदं हि रूपं पुराणेषु पूर्णतया प्राप्यते। आधुनिकैरितिहासकारैरस्या शैल्या उपेक्षा कृता, परन्तु इङ्गलैण्डस्य प्रसिद्धेन विचारशीलविदुषा एच्० जी० विल्सनेन स्वकीयायामितिहासस्य रूपलायां पौराणिकप्रणाल्या एवानुकरणं कृतमस्ति। तेन तत्र मानवसमाजस्येतिहासलेखनात् पूर्वं सृष्टिप्रारम्भतो मनुष्यविकासस्येतिहासोऽपि लिखित। मानवजन्मग्रहणात् पूर्वं जीवः किं किं रूपं धत्ते तथा तस्य क्रमिको विकासः कथं जायते, इत्यादेरपि मनोरमं विवेचनं कृतमस्ति। प्राचीनभारतस्येतिहां पुराणेष्वेव निहितं सुरक्षितं चास्ते। सौभाग्येनास्माकमधुनातना अपि केचनैतिह्यविदो भारतस्येतिहासनिर्माणे सांप्रतं पाश्चात्यानां मुखापेक्षितां विहाय पुराणसाहाय्यं गृह्णन्ति। पुराणेषु विविधानां विषयाणां साकल्येनैकत्र समवायात्- श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्। इत्यनुसारं पुराणं हृदयं निगद्यते। एवं नेत्रं विना मानवो जीवितुं शक्नोति परं हृदयं विना न कोऽपि जीवितुं पारयति। अतः आत्मा पुराणं वेदानामिति स्कन्दपुराणीयं वचनं संगच्छते।

हिन्दुशास्त्रेषु वस्तुकथनस्य त्रयः प्रकारा उक्ताः सन्ति-तथ्यकथनम्, रूपककथनम्, अतिशयोक्तिकथनं च। तत्र यद् वस्तु यादृशं स्यात्तस्य तादृगेव वर्णनं तथ्यकथनमस्ति। प्रकारोऽयं वैज्ञानिकानां कृते उपयोगी वर्तते। यत्र रूपकालङ्कारमाश्रित्य किञ्चिदुच्यते तद् रूपककथनं विद्यते। प्रणालीयं प्रायः वेदेषूपलभ्यते। यथा-सूर्यकिरणेषूपलभ्यमानानि सप्त रङ्गानि अनुवत्वाऽश्वानां रूपकं प्रदत्तमस्ति। पुराणेषु वस्तुवर्णनार्थमतिशयोक्त्यलङ्कारस्याश्रयो गृहीतोऽस्ति। यथा इन्द्रवृत्रासुरयुद्धे इन्द्र-वृत्रासुरौ राजरूपेणाङ्कितौ स्तः। एवं वर्षावर्णनं त्रिषु साहित्येषु विशेषदृष्ट्या कृतमस्ति-ज्यौतिषविज्ञानं हि कस्मिन् नक्षत्रे कीदृग्वायुर्वहति, कथं मेघ उत्पद्यते, कियती वृष्टिर्भविष्यति, वृष्टेरवरोधकः कोऽस्ति, कथं च भवति तस्य विनाश इति तथ्येन विचारयति। वेदो वृत्रं वृष्टिनिरोधकं तत्त्वमिन्द्रं च वृष्टिकारकं मन्वानोऽनयोः तत्त्वयोरुत्पन्नं संघर्षमिन्द्रवृत्रयुद्धद्वारा निरूपयति। पुराणसाहित्यं चातिशयोक्त्या इन्द्रं देवानां राजानं वृत्रं चासुराणामधिपतिमुक्त्वा देवासुरसंग्रामं वर्णयति। अतः पौराणिककथानां सम्बन्धे तदीयप्रणाल्यां ध्यानं दत्त्वैव तदध्ययनं विधेयम्। मानवानां कल्याणार्थं स्वयं नारायणेन व्यासात्मना पृथिव्यामवतीर्य पुराणानि रचितानि। वेदविज्ञानस्य मनोरञ्जकोपाख्यानरूपेणोपस्थापनं पुराणानामस्ति अद्भुता विशेषता। पुराणानां पवित्रे प्राङ्गणे एकतो भक्तेर्भागीरथी प्रवहति, तर्हि अपरत्र विज्ञानस्य स्रोतो निःसरद्दृश्यते। वेदेषु यस्य सूचनामात्रमस्ति पुराणेषूपाख्यानादिद्वारा तस्यैव विस्तारोऽस्ति। वेदेषु यासामाभासमात्रमस्ति पुराणेषु ता एव कथा मनोरञ्जकरूपेण विस्तृताः सत्यः एकं नवीनं रूपं धृतवत्यः। यथा विष्णु विचक्रमे त्रेधाऽनिदधे पदम्। इतीदमृग्वेदीयं वामनोपाख्यानं वामनादिपुराणेषु त्रिविक्रमनामकस्य वामनावतारस्य प्रसंगे विस्तृतरूपेण वर्णितमस्ति। वस्तुतस्तु पुराणं विना वेदार्थोपबृंहणमेव न सम्भवति, यतो हि वेदेषु निर्दिष्टानामाख्यानानां व्याख्या पुराणेष्वेवोपलभ्यते। यथा— अहल्यायै जारः, इत्यस्य तात्पर्यं पुराणवर्णितमिन्द्रकृतमहल्याधर्षणं विना न स्फुटतां प्रयाति। अत एव वाल्मीकिरामायणेऽग्निप्रभृतीन् देवान् प्रति स्वयमिन्द्रेणाभिहितम्[1]।

---

१. कुर्वता तपसो विघ्नं गौतमस्य महात्मनः।
क्रोधमुत्पाद्य तु मया सुरकार्यमिदं कृतम्॥—४६।२

वेदा न सन्त्युपाख्यानमूलका ग्रन्थाः। तत्र तु स्थलविशेषे उदाहरण-रूपेणोपाख्यानानि वर्णितानि सन्ति। परं पुराणेषूपाख्यानानामेकत्र समावेशोऽस्ति। अतः तत्रोपाख्यानबाहुल्यं विस्तारश्च दृश्यते। कस्याप्युपाख्यानस्य विस्तरतो वर्णनं वेदस्य नोद्देश्यम्, किन्तु तत्रत्यात्यन्तसंक्षिप्ताः केनचिद् विशेषेणोद्देश्येन वर्णिता याः कथाः सन्ति, ता एव पुराणेषु आख्यायिकारूपं धृतवत्यः। यतो हि साधरणेषु मनुष्येषु कौतुहलपूर्वकं भगवद्भक्त्युत्पादनमाख्यायिकानामस्ति मुख्यमुद्देश्यम्। वेदपुराणयोरिदमेवास्ति विशेषतोऽन्तरम्, यद् वेदस्यातिसंक्षिप्ताः प्रसङ्गाः पुराणेषु स्वतन्त्रतया समुपबृंहिताः सन्ति। अत एव वेदवत् पुराणानामपि प्रामाण्यमभिमतमस्ति, तथा तानि, असामान्यदृष्ट्या दृश्यन्ते, श्रूयन्ते च। एतदतिरिक्तस्य वेदानुकूलस्य ज्ञानस्य कर्मण उपासनायाश्च विवेचनमपि पुराणेषु स्पष्टतयोपलभ्यते। येन समेषां भवति महानुपकारः तथा तैः पुराणैः धर्मसम्बन्धिनां विविधा उपदेशा अपि प्राप्यन्ते।

अत्र नास्ति कश्चन सन्देहलेशो यद् भारते भूयो भूय आक्रमणेन राज्यविप्लवैः, अनेकविधपरिवर्तनेन च पुराणानां वास्तविकस्थितावद्यत्वे महदन्तरमुपस्थितमस्ति, न किन्त्वपि पुराणानि पूर्णानि मिलन्ति, कतिपयानि स्वसंख्ययाऽधिकानि रूपाणि अधारयन्. प्रक्षिप्तैरंशैः कियतां कलेवरमपि परिवर्तितम्, एकस्य पुराणस्य विषयाः क्वचन अन्यपुराणेषु प्रविष्टाः। विदुषामनुमानमस्ति यत् सम्प्रदायवादिनां पारस्परिकेन संघर्षेण स्वसम्प्रदायेतरान् हीनतरान् घोषयितुं पश्चात् यत्र कुत्रचित् पुराणेषु प्रक्षिप्ता अंशाः मेलिताः। अस्तु—यदि येनचित् कारणेन पुराणेषु कुत्रचित् प्रक्षिप्ता अंशाः समागतास्तर्हि पुराणमात्रमप्रामाणिकं मन्तुं न युक्तमस्ति, यदि बहुमूल्येषु रत्नेषु कश्चन काचं मेलयेत्तर्हि किं तानि हेयानि जायन्ते? न हि कथमपि न संभवति तेषां रत्नानां हेयता, किन्तु नीरक्षीरविवेकिनो हंसा इव विचारशीला विद्वांसः सदसतो विचार्य हेयस्यांशस्य त्यागः उपादेयस्यांशस्य च ग्रहणमेव बुद्धिमत्ता मन्यन्ते। यदि विवेकपूर्वकं मनोयोगेन पुराणानि पठ्येरन् तर्हि प्रक्षिप्ता अंशा अवश्यं परिज्ञातुं शक्यन्ते। यत्र कुत्रापि भस्म-रुद्राक्ष-तिलक-तुलसीमालादीनां निन्दा तथा देवतानां परस्परं विरोधपरकाणि वचनानि स्युः तर्हि तानि सम्प्रदायवादिनां दुराग्रहिणां

कुपुरुषाणां बुद्धेः परिणामस्वरूपाणि ज्ञेयानि। एतादृशा अंशाः समन्वयवादिनो महर्षे व्यासस्य लेखनीतो न प्रसूता भवितुमर्हन्ति। तेऽशास्तु सम्प्रदायवादस्य तरङ्गैः समुद्गता अवगन्तव्याः। भगवान् व्यासदेवस्तु समेषामैक्यप्रतिपादयितास्ति। पुराणेषु विभिन्ना भक्ता भिन्नभिन्नदेवतानामुपासका दृश्यन्ते, यतो हि हिन्दुशास्त्राणां विभिन्ना देवता एकस्यैव परब्रह्मणो रूपान्तराणि सन्ति, येषां केषामप्युपासनया स्वेष्टसिद्धिर्भवत्येवेति गीतायामपि भगवता श्रीकृष्णेन स्पष्टमुद्घोषितमस्ति[1]।

प्रायो लोके दृश्यते यद् यो मनुष्यो येन साकं प्रेम प्रकुरुते, स वाञ्छति यद् मत्समः सर्वेऽपि अनेन सह प्रेम कुर्वन्तु नाम। एवं यो ऋषिः यस्या देवताया आराधनेनात्मनोऽभीष्टसिद्धिमकामयत, तेन तस्या देवताया विशिष्टा भक्तिः कृता। तदनुगामिना शिष्यवर्गेणापि तस्या एव देवताया उपासनाप्रचारो विहितः। तदनुसारमेव तद्देवतोपासनायाः फलप्रतिपादकानामुपाख्यानानामेकस्मिन्नेव पुराणे सङ्कलनं कर्तुं चेष्टाऽजायत। एवं यो मानवो यस्या देवताया भक्तोऽस्ति, स स्वेष्टदेवतामाहात्म्यप्रकाशकमेव पुराणमाद्रियते,। एतेनैव कारणेन प्राचीनान्युपाख्यानानि नैकरूपाणि प्राप्यन्ते। वेदमन्त्रेषु देवतानां स्तुतिमात्रं विद्यते। ब्राह्मणग्रन्थेषु यज्ञादीनां प्रसंगे यत्र तत्र कथानामपि संक्षेपत उल्लेखो विद्यते, किन्तु विस्तरत एकत्र कथाख्यानोपाख्यानानां संग्रहः आवश्यक आसीत्। एतत्पूर्तये एव महर्षिणा व्यासेन पुराणानि प्रणीतानि। संस्कृतवाङ्मयसिद्धान्तानुसारं मानवजीवनस्यास्ति प्रधानं लक्ष्यमाध्यात्मिकजीवनसमुन्नतिद्वारा मोक्षप्राप्तिः। ज्ञान-कर्मोपासनामाध्यमेन मानवमात्रस्य सुमार्गे नयनपूर्वकं मोक्षाधिकारित्वसम्पादनं पुराणानां रचनाया मुख्यमुद्देश्यमस्ति। विभिन्नेषु पुराणेषु भिन्नभिन्नकल्पानां कथाः सन्ति। पौराणिककथासु कुत्रचिदस्ति साम्यं वचन च वैषम्यमपि। तत्परिहारे विद्वांसः कल्पभेदमेवाश्रयन्ति[2]।

---

1. यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
   तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ ७।२१

2. क्वचित् क्वचित् पुराणेषु विरोधो यदि दृश्यते।
   कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते॥

पुराण-रामायण महाभारत-तन्त्रशास्त्राणि विश्वकोशकार्यं कुर्वन्ति। अद्यत्वेऽस्माकमुत्तरोत्तरमवनतेः कारणं सुशिक्षाया अभावोऽस्ति। शिक्षाया उद्देश्यं न केवलमुदरपूर्तिरेव मन्यते। अतोऽस्माकं धार्मिक-आर्थिक-सामाजिक-नैतिक-शारीरिक-मानसिक-वाचनिकाध्यात्मिको ह्रासः शनैः शनैः वर्द्धते। कस्यापि देशस्य धर्मस्य जातेश्चोन्नतिमूल-कारणं तत्रत्या शिक्षैवास्ते। अत आलोचकानां मतमस्ति, यत्-कस्यापि देशस्य जातेश्च धार्मिक-सामाजिक-आर्थिक समुन्नतिः द्रष्टुमिष्टा स्यात्तर्हि तदीयशिक्षाप्रणाल्या निरीक्षणं कर्तव्यम्। बालका एव देशस्य धर्मस्य जातेश्च सन्ति विभूतयः। तेषां यादृशं चरित्रं सञ्चितं भविष्यति तादृशमेव देशस्य धर्मस्य जातेश्च भविष्यमपि सञ्चितं भविष्यति। अतो बालकानां चरित्रसञ्चये विशेषतो ध्यानं प्रदाय तेभ्यो धार्मिकशिक्षाप्रदानस्य महत्यावश्यकतास्ति। यवनखीष्टीयबालकानां कृते तु तत्संस्थास्थापितेषु शिक्षालयेषु प्रवर्तते तदीयधार्मिकशिक्षाप्रदानस्य व्यवस्था, किन्तु हिन्दुबालकानां कृते धर्मनिरपेक्षसर्वकारद्वारा सञ्चालितेषु शिक्षालयेषु धार्मिकशिक्षाप्रदानस्य वार्ता तु दूरे तिष्ठतु धार्मिक ग्रन्थानां नामापि न बालकैः ज्ञायते। परिणामेऽस्माकं बालका ध्रुव-प्रह्लाद-लव-कुश-भरत-अभिमन्युप्रभृतीनां वीरबालकानां स्वप्नमपि न पश्यन्ति। इदं हिन्दूजातेः ह्रासस्य न कारणं तर्हि किं सम्भवेत् ?

भारतीय शिक्षाया उद्देश्यं न केवलं धनोपार्जनमात्रमेवास्ति, प्रत्युत धर्मार्थकामानां समानतया सेवनमनिवार्यं विद्यते। अर्थात्—त्रयाणां धर्मार्थकामानां समानरूपेण समादरो विधेयः। यो हि त्रिष्वेतेषु कस्मिंश्चिदेकस्मिन् व्यासज्जते स निकृष्टकोटिकः पुरुषो निगद्यते। यो द्वयोर्निरतो भवति, सोऽस्ति मध्यमकोटिको नरः। यश्च त्रिषु समान-रूपेण प्रवर्तते स उत्तमकोटिको मानवो गण्यते[1]। एवं भारतीया धर्म-दर्शनाभ्यां सहैव जीवनस्य भौतिकेष्वङ्गेषु अपि पर्याप्तां रुचिं दधतेस्म। तेषां पुरुषार्थेषु धर्म-मोक्षातिरिक्तावर्थ-कामावप्यास्ताम्, याभ्यां जीवनस्य प्रवृतिमार्गे उचितं स्थानं प्राप्तमासीत्। या हि धर्मप्राणा हिन्दुजातिरन्यजातिषु शिरोमणिः, मानवमणिः आदिगुरुः, शिक्षिका, पथप्रदर्शिका चासीत्। अद्यत्वे तस्या एव बालका धर्महीना अन्यानु-करणकुशला विस्मृतपूर्वजपुरुषार्था उच्छृंखलाचाराश्च भवन्ति निरन्तर-

१. धर्मार्थकामाः सममेव सेव्या यो ह्येकसेव्यः स नरो जघन्यः।
द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं स उत्तमो यो निरतस्त्रिवर्गे॥

मित्यहो दौर्भाग्यम्। यदि हिन्दुभि निजबालकेभ्यः पूर्ववर्तिनां स्वनिर्भीक-वीरबालकानां कथानकमुपदिष्टं स्यात्तर्हि नैवं दशा सम्भवेत्। अद्यत्वे धार्मिकशिक्षाया अभावस्य परिणामो जायते, यदाधुनिकनां बालकानां हृदयपटलेषु हिन्दुसंस्कृते रूपरेखा न विकाशिता भवति, येन ते स्वपूर्वजानां गौरवमनुकरणीयमादर्शं च सर्वथा विस्मृत्यनेकानर्थकरणे प्रवृता भवन्ति, प्राचीनस्य भारतस्य नैवदपि अभिमानं तेषु भवति। न ते जानन्ति यदस्माकं धर्म-साहित्य-पूर्वपुरुषाणां वास्तविकं स्वरूपं कीदृगासीत्, किञ्चास्ति कर्तव्यमस्माकम्।

तात्पर्यमिदमस्ति यद् बाल्यावस्थायां धार्मिकशिक्षाया अभावादद्यतनीया अस्माकं बालका हिन्दुधर्म साहित्य-सभ्यता-संस्कृति-सामाजिक-विषयाणां किमपि न जानन्ति, किन्तु पाश्चात्य धर्म-रीति नीति व्यवहारादिविषयेऽत्यधिकाः प्रवीणा जायन्ते। यस्य परिणामेऽस्माकं वैदिकधर्म-सदाचार-भारतीय नीति-रीति-विचार-व्यवहारादयो बालकानां हृदयेभ्य उत्तरोत्तरं निःसरन्ति, प्रविशन्ति च वैदेशिका आचार-विचार-व्यवहारादयः। अद्यत्वेऽस्माकं बालकाः स्वकीय स्वरूप-भाषा-भावादि-ग्रहणे संकुचन्ति, किन्तु विदेशीयभावना-भाषा-आचार-विचार-व्यवहारादीनामनुकरणे स्वकीय गौरवमनुभवन्ति। यत्रास्माकं शिक्षाया आदर्शः महाजनो येन गतः स पन्थाः इत्यासीत् तत्राद्यतनीया बालकाः स्वपूर्वजान् आरण्यकानसभ्यात् सङ्कीर्णविचाराननुदाराश्च मन्यन्ते।

इतिहासनाम्नाऽस्माक बालका यत् शिक्ष्यन्ते, किं तदेवास्ति वास्तविक इतिहासः? अद्यतनीये इतिहासे तु बालकाः शिक्ष्यन्ते यत् हिन्दु-सभ्यता साहित्यं चार्वाचीने स्त.। हिन्दुपूर्वजा मध्यएशियातो भारतमाक्रम्यात्रत्यानामादिनिवासिनमार्याणा सर्वस्वं लुण्ठितवन्तस्तथा तान् दूरे दक्षिणेऽपसारयन्। हिन्दवो भारतस्यादिनिवासिनो न सन्ति, किन्तु तेऽपि आग्लजातिवद् बाह्यप्रदेशादागताः। किं सर्वविधज्ञानभाण्डाराणां भारतीयेतिहासस्रोतसां वेदाना पुराणानामस्मत्पूर्वजानां च विषये असत्य-निर्मूल-भ्रमोत्पादिक-चर्चैवास्तीतिहासः? नहि, कदापि नैतत् सम्भवति। कथनस्येदमस्ति तात्पर्यं यद् या जातिः स्वान् धर्मग्रन्थान् आत्मनः पूर्वजांश्च विस्मरति, तान् प्रति दोषदृष्टि वा कुरुते, सा न स्थायिनी समुन्नतिं कर्तुं प्रभवति। अद्यतनशिक्षाया प्रभावेण भारतीयानामिय-

मेवास्ति दशा। पाश्चात्येन विचारकेण विदुषा मैक्शमूलरेण सत्य-मुक्तमस्ति—

या जाति. स्वकीयेन प्राचीनेन गौरवेण, इतिहासेन, साहित्येन च नात्मानं गौरवान्वितां मनुते, सा स्वजातीयजीवनस्य प्रधानमाश्रयं समुन्मूलयति।

वस्तुतोऽद्यत्वे शिक्षापद्धतावनेके दोषाः समागताः सन्ति-अनुशासन-हीनता दैनन्दिनं वर्द्धते, गुरुशिष्यसद्भावो दूरतरं गच्छति, कक्षा-वहिष्कारोऽहरहः क्रियते, कलहाग्निर्देदीप्यते, सङ्घर्षस्फुलिङ्गाः सर्वत. प्रसरन्ति, अभिभावकानां गुरूणामन्तेवसतां चैकमात्रं ध्येयमुपस्थितमस्ति यद् बालका. परीक्षासु येन केनापि प्रकारेणावश्यमुत्तीर्णाः स्यु । परी-क्षाकेन्द्रेषु अवैधाश्रयणम्, परीक्षकाणां भर्त्सनम्, अनुचितेन विधिनाङ्क-प्राप्तिप्रयास समेषां लक्ष्यं जातमस्ति। प्रश्नकाठिन्ये कोलाहलकरणं परीक्षाभवनत्यागः कर्तव्यत्वेनोपस्थित, केन्द्रव्यवस्थापकानां हत्याया निरीक्षकेष्वाघातस्य च कुचेष्टाः क्रियन्ते, कुलपते विश्वविद्यालये प्रवेशः कठिनो जातः कार्यालयस्य कार्यस्थगितीकरणमारब्धम् । तत्राग्निप्रज्वालनं वस्तुनां त्रोटनं भेदनञ्च प्रायः सर्वत्रैव क्षोभवोति। यत्रेदृशः शिक्षायाः कुपरिणामो दृश्यते, तत्र का सदाशा क्रियेत । अतो वर्तमानशिक्षापद्धता-वामूलं परिवर्तनमनिवार्यतया नितान्तमावश्यकं प्रतीयते। भारत-हितेच्छुभिः समस्तैः शिक्षाविद्भिः संभूय भाविन्याः सन्ततेर्वास्तविक-विकासशीलप्रवृत्तये सुशिक्षाया प्रयासोऽवश्यं विधेयः। यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्—इति हितोपदेशवचनानुसारं बाल्ये या शिक्षा दीयते, तस्या एव संस्कारो दृढतरो जायते, जीवनपर्यन्तं च तया लाभो भवति। अतो हि सुकोमलमतिभ्यो बालकेभ्य किंचित् तदुपयोगिनी पौराणिकी शिक्षामवश्यं प्रदातुं प्रयतनीयम्। यथा सुशिक्षया ते धर्म-देश-जातीनां समुन्नतये प्रयत्नशीलाः सन्तः सुखमयं जीवनं निर्मातुं शक्नुयुः। अतस्तैः स्वप्राचीनेतिहासस्य परम्पराया वा ज्ञानमवश्यं कर्तव्यम्, येन भारतीयसभ्यताया संस्कृतेश्च पूर्णज्ञानवन्तोऽस्माकं बालका समाजस्य पथप्रदर्शकाः सन्तः स्वदेश-धर्म-जातीनां सत्सेवका राष्ट्रहितेच्छवो वा भवेयुः, तथा स्वतन्त्रस्य भारतस्य गौरवरक्षणेन सह स्वं भविष्यं नूनं समुज्ज्वलमादर्शमयं च विदध्युः।

## पुराणकार्यम्

पाश्चात्यजगति संस्कृतसाहित्यस्यान्वेषिणो मर्मज्ञा अनेके विद्वांसोऽभूवन्। येषु मैक्समूलर-विलसन-पार्जिटर विन्टरनीत्स-किर्फेलप्रभृतय उदाहरणीया विद्यन्ते। संस्कृतसाहित्यस्य यावत् तथ्यपूर्णमनुसन्धानात्मकं कार्यमेभि विपश्चिद्भिः कृतम्, आनुपातिकदृष्ट्या तावत् कदाचिद् भारतीयैर्मनीषिभिर्न कृतम्। तेषु श्रीविलसनमहोदयः संस्कृतवाङ्मयस्य प्रत्येकशाखाया समुन्नायको भारतीयसंस्कृतिपक्षपाती मर्मस्पर्शी सत्यप्रेमी च विद्वानासीत्। तेन वेदसाहित्ययोः साङ्गोपाङ्गमितिहासो लिखितः। यदनेन पुराणानामैतिहासिकं शोधकार्यं कृतं तदद्वितीयं विद्यते। श्रीविलसनमहोदयेन विष्णुपुराणस्यांग्लभाषायां सारगर्भितोऽनुवादः कृतोऽस्ति, तथा सहैव तत्र दीर्घकलेवरा समालोचनात्मिका भूमिकाऽपि लिखिता, यत्र पुराणसम्बन्धिनि प्रत्येकाङ्गे प्रकाशोऽस्ति। तस्य कृतीनामनुशीलनेन तद्धृदयं भारतीयसंस्कृते र्दृढरङ्गैरभिरञ्जितं प्रतीयते।

स कलकत्तागवर्नमेन्टसंस्कृतकालेजस्य संस्थापकः सञ्चालकश्चासीत्। तेनान्विष्यान्विष्य कालेजे योग्यतमा विशिष्टा विद्वांसो नियुक्ताः। तस्मिन् स्वदेशे प्रत्यावर्तिते आंग्लभाषापक्षपाती लार्डमेकाले तत्रोच्चपदासीनः भारतीयसंस्कृतेः संस्कृतभाषायाश्च समूलमुच्छेनेच्छया सर्वप्रथमं कलकत्तास्थसंस्कृतकालेजमुच्छेत्तुं दृढप्रतिज्ञो भूत्वा यदा तत्रत्यानध्यापकान् कुदृष्ट्या पश्यन् तैः सहाभद्रं व्यवहारं कर्तुमारब्धवान्, तदा तत्रत्यानामध्यापकाना विलसनेन सह संस्कृतपद्यात्मको यः पत्राचारो जातस्तत्र भारतीयसंस्कृतिं प्रति विलसनमहोदयस्य स्वभाविकोहृदयोद्गारः सम्यग् हृदयाकर्षकोऽनुकरणीयश्चास्ति। लार्डमेकालेहृदयहीनतापूर्णकार्यकलापेन मर्माहतो भूत्वा कालेजस्यान्यतम आचार्यः श्रीजयगोपालतर्कालङ्कारो विलसनमहोदयस्य पार्श्वेऽधोङ्कित श्लोकं प्रेषितवान्—

> अस्मिन् संस्कृतपादपद्मसरसि त्वत्स्थापिता ये सुधी—
>
> हंसाः कालवशेन पक्षरहिता दूरं गते वै त्वयि।
>
> तत्तीरे निवसन्ति संहितशरा व्याधास्तदुच्छित्तये
>
> तेभ्यस्त्वं यदि पासि पालक तदा कीर्तिश्चिरं स्थास्यति॥

पद्येनानेन मर्माहतः श्रीविलसनमहोदयस्तदुत्तरे तर्कालङ्कारस्य सविधे ये चत्वारः श्लोकाः प्रहिताः तैः संस्कृतभाषां-भारतीयसंस्कृतिं च प्रति तस्य प्राकृतिकी आस्था व्यज्यते—

(१) विधाता विश्वनिर्माता हंसास्तत्प्रियवाहनम् ।
अतः प्रियतरत्वेन रक्षिष्यति स एव तान् ॥

(२) अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽधिकम् ।
देवभोग्यमिदं यस्माद्देवभाषेति कथ्यते ॥

(३) न जाने विद्यते किं तन् माधुर्यमत्र संस्कृते ।
सर्वदैव समुन्मत्ता येन वैदेशिका वयम् ॥

(४) यावद्भारतवर्षं स्याद् यावद् विन्ध्यहिमालयौ ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम् ॥

तदनन्तरं पुनरपरेणाध्यापकेन महाविद्यालस्य दुरवस्थायां विलसनस्य ध्यानमाक्रष्टुं पद्यमयं द्वितीयं पत्रं तत्पार्श्वे प्रहितं तेनाहतहृदयः स पुनस्तदुत्तरे ईश्वरस्य सर्वव्यापकताया न्यायप्रियतायाश्च सिद्धौ विश्वसन् समुच्छेत्तुमिष्टस्य दुर्वादलस्योदाहरणेनाश्वासितवान्

निष्पिष्टाऽपि परं पदाहतिशतैः शश्वद्बहुप्राणिनां
सन्तप्ताऽपि करैः सहस्रकिरणेनाग्निस्फुलिङ्गोपमैः ।
छागाद्यैश्च विचर्विताऽपि सततं मृष्टाऽपि कुद्दालकैः
दुर्वा न म्रियते कृशाऽपि सततं धातुर्दया दुर्बले ॥

पश्चात्तदुद्योगेन कालेजः कथञ्चित् सुरक्षितोऽद्यापि स्वकीयमुद्देश्यं सम्पादयन् निर्मलेन यशसा प्रकाशयति वङ्गदेशम् । भारतीयेषु विद्वत्सु डा० हाजरा-पुसालकरप्रभृतिभिः पुराणविषये यत् कार्यं कृतं तदांग्ल-भाषायामेव विद्यते, येन न भवति कश्चन लाभः विशुद्धसंस्कृतजगतः । अतोऽनुवादोऽपेक्षितोऽस्ति तादृशानां ग्रन्थानाम् । मुरादाबादस्थेन पं० ज्वालाप्रसादमिश्रेण—अष्टादशपुराणदर्पणम्, कानपुर-अमरौधा-निवासिना युक्तिविशारदेन पं० कालूरामशास्त्रिणा – पुराणवर्म, जयपुर-राज्यपण्डितेन समीक्षाचक्रवर्तिना म० म० पं० मधुसूदनौझा महोदयेन-पुराणनिर्माणाधिकरण-पुराणोत्पत्तिप्रसङ्ग नामकौ द्वावद्वितीयौ ग्रन्थौ,

म०म०पं० गिरिधरशर्मचतुर्वेदिना पुराणपारिजातं पुराणपरिशीलनं च शास्त्रार्थमहारथिना पं० माधवाचार्येण पुराणदिग्दर्शनम्, पं० बलदेवोपाध्यायेन च पुराणविमर्श-लिखित्वा पुरणासाहित्यशोधकार्यार्थं प्रशस्तो मार्गः प्रदर्शितोऽस्ति। अतो महानुभावाः एते सन्ति, धन्यवादार्हाः। बम्बई-कलिकाता-पुण्यपत्तनतश्च प्रायः पुराणानि, रामायणं, महाभारतं च प्रकाशितानि परमिदानीं तान्यलभ्यानि भवन्ति। पुण्यपत्तने महाभारतस्य बडौदायां वाल्मीकीयरामायणस्य च प्रामाणिकं संस्करणं प्रकाशितम्। अद्यत्वे काशिराजोद्योगेन पुराणानां प्रामाणिकं शुद्धञ्च संस्करण मुद्रायितुं समारब्धं वर्तते, यत्र महर्घतासाम्राज्यं विराजते, वैदेशिकनीतिश्च विजृम्भिता विलोक्यते। आवश्यकताऽस्ति स्वल्पमूल्यतायाः सर्वसुलभतायाश्च, यथा स्वल्पधनानामपि पण्डितानां लाभो भवेत्।

एतदतिरिक्तेषु विभिन्नस्थलेषु पुराणानुवादकार्यमपि प्रचुरं दृश्यते, यत्र सर्वाधिकं श्लाघ्यं कार्यं गोरखपुरस्थेन गीताप्रेसेन कृतं वर्तते। तत्र समालोचनात्मकतत्तदङ्कैः साकं महाभारतस्य रामायणस्य, भागवतादिपुराणानाञ्चानुवादकार्यं जातमास्ति, येन साधारणजनताया महान् लाभो जायते। अत एतदनुकरणं सर्वैः विधेयं येन पुराणजगतः प्रचारे प्रसारेऽनुसन्धानकर्मणि च सरलतया सौविध्यं स्यात्।

पूर्वमेसियाटिक सोसाइटी-बंगवासीप्रेस कलिकातातो बंगभाषायां पुराणानामनुवादकार्यमजायत तथाचानेके समालोचनात्मका ग्रन्था अपि निःसृताः। साम्प्रतं श्रेष्ठिप्रवरमनसुखरायमोरमहोदयानां धर्मिकप्रवृत्या धर्मार्थं गुरुमण्डलग्रन्थमालतः पुराणानां मूलं संस्करण जायते।

सनातनधर्मस्य प्रचारप्रसारयोः बद्धपरिकराणां वर्णाश्रमव्यवस्थासंरक्षणतत्पराणां त्यागतपोमूर्तीनां महात्मनां श्रीसीतारामदासोङ्कारनाथमहोदयानां सत्प्रयासेन प्रवर्तितसनातनशास्त्रप्रकाशनद्वारा श्रीधरीसहितगीताविष्णुपुराणयोः संस्करणमजायत, हिन्दीभाषायाञ्च तदनुवादोऽपि सम्पन्नः। तदनु भारतीयप्रसिद्धानां विद्वद्वराणां भक्तप्रवराणां दानवीराणां च सहयोगेनौदार्येण वा नीलकण्ठी-महाभारतयोः राष्ट्रभाषायामनुवादकार्यं महता समारम्भेण समारब्धमस्ति।

## उपसंहारः

वस्तुतः पुराणेतिहासयो र्माध्यमेन प्राचीनभारतीयसांस्कृतिकजीवनस्य प्रत्यक्षं चित्रमुपतिष्ठते। महर्षिणा वेदव्यासेन तत्र मानवजीवनस्य समस्तानां व्यवहाराणामादर्शमयं चित्रमुपस्थापितमस्ति. येनैतिहासिक-सांस्कृतिक-सामाजिक-नैतिकाध्ययने महत्साहाय्यमवाप्यते गवेषकैः। अतो भारतीयसंस्कृतेः पूर्णज्ञानाय पुराणानामनुशीलनं नितान्तमावश्यकमस्ति। पौराणिकसामग्री तथैव प्रामाणिकी ज्ञेया यथा वेद-स्मृति शिलालेख-मुद्रा-ताम्रपत्रादीनि प्रामाणिकानि मन्यन्ते। म० म० मिराशी महोदय-द्वारा पठितमुद्रालेखैः पुराणवर्तिनां कियतां राजचरितानां सत्यता प्रमाणिता। एवं भूगर्भविद्याविशारदैः पुरातत्त्वविद्भिः मोहनजोदडो-हरप्पादिपूत्खनने समुपलब्धमूर्ति-मृत्पात्रादिद्वारा प्राचीनतया पुराण-कालिकभारतीयसभ्यतां साधयितुं निरन्तरं प्रयत्यते।

यद्यपि संस्कृतवाङ्मये पौराणिकतत्त्वानां प्रतिपादकग्रन्थानामभावो नास्ति, बहूनि एवं ग्रन्थरत्नानि सन्ति, यैः पुराणानां वास्तविकं रहस्यं सम्यगवगन्तु शक्यते, किन्त्वेवंविधा ग्रन्था विरला अप्राप्याश्च जाताः। अत एकस्यैवम्बिधग्रन्थस्यावश्यकताऽसीद् येनातिसरलतया साधारणा जना अपि पौराणिकविषयाणामवगाहनं कृत्वा अभ्युदयनिःश्रेयसप्राप्तौ समर्थाः स्युः। अनयैव विचारधारया प्रेरितोऽहं सर्वसाधारणानां कल्याणार्थ-मिदमेकं ग्रन्थरत्नं पुराणपर्यालोचननामकं पाठकानां पुरः प्रस्तौमि। पुराणसाहित्यमस्ति अगाधसमुद्रसमम्। तत्रोपयोगिनां समस्तानां विषयाणां साङ्गोपाङ्गं विवेचनं विद्यते। लौकिकाः पारलौकिका वा केचन विषया नैतादृशः सन्ति, येषामुल्लेखः पुराणेषु न जातः स्यात्। यथा विशालस्य रत्नाकरस्यैकस्मिन् लघुपात्रे निधानमसम्भवः तथैवात्र लघुकलेवरे पुराणपर्यालोचने पुराणरत्नानां समावेशस्य सम्भवो न जातः। तथापि अत्यावश्यकविषयाणां विवेचनस्य प्रयासस्तु यथासम्भवं कृत एवास्ति। ग्रन्थेऽस्मिन् विवादग्रस्तानां पौराणिक विषयाणां पौराणिकदृष्ट्या एव मया यथामति गवेषणात्मिका समीक्षा कृताऽस्ति।

नाहमुच्चकोटिको विद्वान् नवा कश्चन सिद्धहस्तोऽस्मि लेखकः, अथापि

अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ = १।३

इति रघुवंशमहाकाव्ये कविवरकालिदासीयपद्यानुसारं गुरुकृपया पूर्ववर्तिनां लेखकानां पौराणिककृतीनां सहयोगेन च परागरसलोलुपो मधुकर इव तत्तद्विषयसारं संगृह्य कथञ्चिद् ग्रन्थमिमं प्रपूर्य पाठकानां पुरः प्रस्तौमि, आशासे च विज्ञा विद्वांसः पाठकाश्च ममैनं प्रथमं प्रयासं बालभाषितमिव नोपेक्षिष्यन्ते, अपितु नीरक्षीरविवेकिनो हंसा इव सङ्गतमंशं संगृह्यासङ्गतं चांशमुपेक्ष्य मदीयामनधिकारचेष्टां क्षंस्यन्ते च नूनम्। येषां ग्रन्थानां निबन्धानां लेखानामन्योपकरणानां चात्रोपयोगः कृतो मया तेषामुल्लेखस्तु यथास्थानं जातोऽस्ति। येषां विशिष्टानां विदुषां कृतिभिः ग्रन्थस्यास्य परिपूरणे मया सहयोगो लब्धः तेषामहमस्मि नितरामाभारी।

मुद्रक-सम्पादकयोरसावधानतयाऽत्रानेकेऽशुद्धयो जाताः, तदर्थमहमस्मि क्षमाप्रार्थी, गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः। इत्यनुसारमस्य ग्रन्थस्य लेखने मम मानवसुलभदोषवशाद् मुद्रकयन्त्रसंघर्षाद्वा अक्षरयोजकप्रमादाद्वा दृष्टिदोषवशाद्वा या याः त्रुटयोऽजायन्त, तास्ता दयालवोऽध्येतारः संमार्ज्य कृपया मामवश्यं सूचयितुं कष्टं विदध्युः, येनाग्रिमे संस्करणे समादरपूर्वकं निःसंकोचं तासां त्रुटीनां समार्जनं नूनं भवेदिति शम्।

विदुषां वशंवदः
**श्रीकृष्णमणित्रिपाठी**
पुराणेतिहासविभागाध्यक्षः
वाराणसेयसंस्कृतविश्वविद्यालयस्य
वाराणस्याम्

गुरुपूर्णिमा
२०३१

## इतिहास पुरुषः



इतिहासः पुराणाश्च सूकरास्यो महोदरः ।
अक्षसूत्रं घटं बिभ्रत्पङ्कजाभरणान्वितः ॥

# उत्तरार्द्धम्

## प्रथमः परिच्छेदः

### पुराणेषु इतिहाससमीक्षा

भारतीयजीवनस्य प्रतिबिम्ब पुराणेषु पर्याप्तरूपेण परिलक्ष्यते। अत ऐतिहासिक-सांस्कृतिक-साहित्यिकदृष्टिभि पुराणानि महत्त्वपूर्णानि गवेषणीयानि च सन्ति। सदाचारिणा लोकप्रख्यातानामादर्शचरित्राणा महापुरुषाणा जीवनवृत्तान्तमितिहासस्य प्रमुखमङ्गमस्ति। पौराणिके इतिहासे साधारणतया तेषामेव महापुरुषाणा वृत्तान्तस्य चित्रणं विद्यते यै स्वकीयस्य धर्मस्य कर्त्तव्यस्य संस्कृतेस्तथा स्वदेशस्य सरक्षणं सर्वतोभावेन कृतमस्ति। यथा आधुनिकेतिहासद्वारा कस्यचित् समाजस्य उन्नतिकारिणीनामवनतिविधायिनीनाञ्च घटनाना दिग्दर्शनेन उपयोगिन्य शिक्षा प्रदीयन्ते तथैव पौराणिकेतिहासस्याध्ययन स्वप्रभावेण मानवजीवन समुन्नतिशील विधातु सर्वथा समर्थमस्ति। कस्यचित् प्राचीनस्य साम्राज्यस्य शासनप्रणाली सर्वाङ्गीण व्यवहारञ्च द्रष्टुमितिहासो दर्पणस्य प्रातिनिध्य करोति।

अद्यत्वे, लघुविद्यालयेषु, माध्यमिकविद्यालयेषु, कॉलेजेषु, विश्वविद्यालयेषु च स्वदेशस्य यानि इतिहासपुस्तकानि पाठ्यन्ते, तेषु अस्माक प्राचीनस्य राजनीतिक सामाजिक-आर्थिक-धार्मिक शैक्षणिकानामुत्कर्षस्य अस्माक पूर्वजानामुच्चतमसंस्काराणामाचाराणा विचाराणामादर्शमयकार्याणामुत्कृष्टयोग्यतानाञ्च अत्यल्प उल्लेखो विद्यते। यत् किमपि वर्त्तते तदपि विकृतरूपेणोपस्थापित विद्यते।

पौराणिके इतिहासे तु यद् वृत्त यादृश ज्ञानमस्ति तत्तद्रूपेणैवाङ्कितमस्ति। तत्र लेखकपक्षतो न किञ्चिदपि मिश्रित विद्यते। अतएवास्य वास्तविकता सुदीर्घकालेन सुरक्षिता अक्षुण्णा च वर्त्तते। वस्तुत इतिहासस्य द्वे प्रमुखे लक्ष्ये भवत —महापुरुषाणा परिचयो, भूगोलस्य वास्तविक ज्ञानम्‌ अनया दृष्ट्या पौराणिक इतिहासोमहतो महत्त्वस्यास्ति।

संस्कृतसाहित्यस्येतिहास (महाभारतम्) देशस्यास्य सर्वाङ्गीणया समुन्नत्या सह भूगोलस्य भारतीयनीतेर्विख्यातवीराणाञ्च चारुचित्र

प्रदर्शयति, रामायणं च तात्कालिकरयादर्शमयस्य गार्हस्थ्यजीवनस्य स्वरूपमुपस्थापयति, उत्तरतो दक्षिणपर्यन्तं भूगोलस्य सम्यक् परिचयं प्रददाति तथा पुराणानि समस्तस्य भूमण्डलस्य द्वीपोपद्वीप-समुद्र-वन-पर्वत-नद-नदीप्रभृतीनां भौगोलिकज्ञानेन सह स्वकथाद्वारा समाजस्योन्नतेरवनतेश्चोदाहरणमुपस्थाय मानवजन्मनो वास्तविकस्य लक्ष्यस्य भगवत्प्राप्तेः प्रेरणां प्रददाति। यतो हि पौराणिकस्येतिहासस्य प्रमुखं लक्ष्यमाधिक्येनाध्यात्मिकमेवास्ति।

पौराणिके युगे राजानो महाराजाश्च तपस्विनामाचारनिष्ठाना ब्राह्मणानां सत्परामर्शैः सर्वाणि कार्याणि कुर्वन्तिस्म। तेषां सभा प्राय आध्यात्मिकानां विषयाणां निश्चयार्थमेव भवन्तिस्म। इतिहासानुसारं पुराणेषु स्वपूर्वजानामनुरागोऽस्माकं रुधिरेषु प्राप्यते। पुराणेतिहासद्वारा यदाऽस्माकं केषाञ्चित् महापुरुषाणा दयालुता-धार्मिकता-उदारता-वीरता-दानशीलता-लोकोपकारिता-साहसपूर्णेतिहासादीनां वर्णनमस्माकं कर्णकुहरेषु उपतिष्ठते तदाऽस्माकं हृदयेषु चामत्कारिक आह्लाद उत्पद्यते येन वयमपि तदनुकरणकरणे वाध्या भवामः। अतः स्वकीयगौरवप्राप्तिनिमित्तं पुराणानामैतिहासिकानुशीलनमत्यावश्यकमस्ति। आधुनिके इतिहासे साधारणतया राज्ञां वृत्तान्तं तथा युद्धाना वर्णनमेवाप्यते।

महत्याः प्रसन्नतायाः वार्तास्ति यत् साम्प्रतं पुराणानुशीलनं प्रति वर्तमानानामितिहासकाराणां ध्यानमाकृष्टं बोभूयते। आशास्यते इतिहासमर्मज्ञाः विद्वांसोऽस्मिन् स्वतन्त्रतायुगे आसु त्रुटिषु विशेषतो ध्यानं दास्यन्ति। पं० राजवली पाण्डेय, श्री काशीप्रसाद जायसवाल प्रभृतिभिरनेकैरितिहासमर्मज्ञैः विद्वद्भिः पौराणिकीनामनुश्रुतीना परीक्षा कृत्वा परिणाम उद्घोषितोऽस्ति यत्- पौराणिक्योऽनुश्रुतयो वस्तुतः सत्यरूपाः सन्ति, तासां प्रामाण्यमपलपितुं न शक्यते।

वेदेषु या ऐतिहासिक्यः सामग्र्य उपलभ्यन्ते पुराणैस्तासा वास्तविकं रहस्य व्यक्तीकृतमस्ति। वैदिकचमत्कारिकवर्णनानां पौराणिकैः राजभिः घटनाभिश्च सामञ्जस्यं विधाय पुराणैः महत् स्तुत्यं कार्यं कृतमस्ति। श्रीमद्भागवते लिखितमस्ति यत् इतिहासलेखनव्याजेन महाभारते वेदस्य रहस्यं व्यक्तीकृतमस्ति[1]—

एतत्तथ्यस्वीकारादेव प्रोक्तमस्ति यत् इतिहासेन (महाभारतेन) पुराणैश्च वेदस्य वास्तविकं रहस्यं ज्ञातुं शक्यते[2]

१. 'भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः" श्रीमद्भागवत १।४।२९।
२. 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" आदिपर्व १।१८।

वस्तुतः पुराणैः वेदस्य चमत्कारपूर्णानि आलङ्कारिकवर्णनानि ऐतिहासिकैः सत्पुरुषैः घटनाभिश्च सह मेलयित्वा तासां वास्तविकं तात्पर्यं साधारणजनतापर्यन्तं समुपस्थापितम्, यतः साधारणजनता वेदानां सूक्ष्मं रहस्यमयं वृत्तं सम्यग्ज्ञातुं न प्रभवति, अथवा तस्याः तच्छ्रवणस्याधिकार एव नास्ति—

स्त्री-शूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरा।[1]

यथा पुराणानां भुवनविन्यासप्रकरणं पठित्वा तात्कालिकभौगोलिकरहस्यानां ज्ञानं जायते तथैव राजवंशवर्णनप्रसङ्गे अनेकेषामैतिहासिकतथ्यानां ज्ञानं प्रजायते। मन्वन्तरस्य राजवंशप्रकरणस्य च पठनेन प्रतीयते यत् पूर्वकाले सप्तसिन्धुनिवासिन आर्याः कथङ्कारं पूर्व-पश्चिम-दक्षिणोत्तरेषु गत्वा स्वराज्यस्थापनं संस्कृतिविस्तारमाचार-विचारसंरक्षणं स्वनाम्ना नगराणां नामकरणं च कुर्वन्तिस्म। तुर्वसुवंशवर्णनप्रसङ्गे लिखितमस्ति यद् ययातिपुत्रतुर्वसुवंशलोपे सति पुरुवंशीकुमारो दत्तकपुत्रः स्वीकृतोऽस्ति। यस्य परम्परायां जनपीड उत्पन्नो यस्य पाण्ड्य-केरल-चोल-कुल्यनामानश्चत्वारः पुत्रा अभूवन्, यैः सुदूरे दक्षिणे गत्वा पाण्ड्य-केरल-चोल-कुल्यराज्यानि स्थापितानि। तथा तद्वंशे गान्धारनामक एको राजा बभूव यस्य नाम्ना गान्धारो जनपदः प्रसिद्धः। अनेनेद ज्ञायते यत् प्राचीनकाले भारतीयानां हृदयेषु नवीनानामुपनिवेशानां निर्माणस्य स्वसंस्कृतेः प्रचारप्रसारयोश्चोत्साहस्तथैवासीद् यथा षोडश-सप्तदश-शताब्द्योः यूरोपियजनेषु आसीत्। ऋषिवंश-प्रियव्रतवंश-इक्ष्वाकुवंश-पुरुवंशवर्णनेन वैदिककालतः पुराणकालपर्यन्तं ऋषीणां राज्ञां परम्परायाः सम्यग् ज्ञानं जायते। अर्जुनस्य वंशपरम्परायाः वर्णनं भविष्यकथनरूपेण उदयनपर्यन्तं कृतमस्ति, यो हि गौतमबुद्धसमकालीन आसीत्। तेन गौतमबुद्धपूर्ववर्तिनि इतिहासे ईषदाभासः प्रपतति। पुराणेभ्योऽतीतसामग्रीप्रचुरमात्रायामुपलभ्यते। अतएव पार्जिटरप्रभृतयः कतिपये पाश्चात्या विपश्चितोऽपि पौराणिकराजवंशपरम्परामितिहासायोपयोगिनीं सामग्रीं स्वीकुर्वन्ति। भारतीयैः समालोचकैरपि शनैः-शनैः ध्यानं दातुं समारब्धम्। वस्तुतो यदि पुराणानामैतिहासिकी सामग्री प्रकाशे आनीयेत तर्हि अनेन महत् इतिहासस्य समाजस्य च कल्याणं संभवेत् तथा प्राचीनानामार्याणा-

1. श्रीमद्भागवत १।४।२५।

मैतिहासिकभावनाभिः अद्यतनीयसामाजिकपरम्पराया नवनिर्माणे पर्याप्तं साहाय्यं प्राप्तुं शक्येत ।

पुराणाना विविधविषयेषु इतिहासतत्त्वमपि एको महत्त्वपूर्णो विषयोऽस्ति । पुराणं पञ्चलक्षणान्तर्गतानि वंश-मन्वन्तर-वंशानुचरितानि च पुराणानामैतिहासिकस्याध्ययनस्य कृते पर्याप्तां सामग्रीं प्रस्तुवन्ति। वंशान्तर्गता प्राचीनानां राज्ञामृषीणाञ्च विस्तृता वंशावली विद्यते, मन्वन्तरेषु युगानां कालनिर्द्धारणं कृतमस्ति, वंशानुचरिते च राज्ञा जीवनेन सम्बद्धाना वृत्तान्ताना वर्णनं वर्त्तते। वंशवर्णनप्रसङ्गे कस्यचिद्राज्ञ चरित्रचित्रणं गाथाद्वारा कदाचित् सक्षेपतो कृतमस्ति। पुराणाना गाथा अभिलेख-प्रशस्तिवद् राज्ञा व्यक्तित्व-चरित्रयोः सूक्ष्म परिचयं प्रस्तुवन्ति । एवं पुराणेषु वश-मन्वन्तर-वशानुचरितगाथाभिस्तेषामैतिहासिकी प्रवृत्तिः स्पष्टा भवति।

सूताः पुराणानां मूलाया ऐतिहासिकप्रवृत्तेः प्रबलाः प्रमाणभूताः सन्ति। पुराणद्वारा भारतीयेतिहासस्यान्ध्र-वाकाटक-मौर्य-गुप्तवंशानामितिहासः स्पष्टो भवति। ब्रह्म-वायु-ब्रह्माण्ड-मत्स्य-हरिवंशाना तुलनात्मकेनाध्ययनेन पुराणेषु राजवंशाना स्थान निर्धारयितुं शक्यते। पुराणानामैतिहासिकोपादेयता विद्वद्भिः सर्वसम्मत्या स्वीकृतास्ति। वायु-ब्रह्माण्ड-विष्णु-मत्स्य-श्रीमद्भागवतानां वशविषयकसामग्री ऐतिहासिक-प्रमाणरूपेण प्रस्तुतास्ति। पौराणिकवंशावल्याः प्रामाणिकतायं समूहत-पुराणाना सामान्यप्रवृत्तिपरीक्षणमत्यावश्यकमस्ति। हरिवंशेऽन्य-पुराणवत् कलियुगीयराज्ञा महती वशावली नास्ति, किन्तु प्राचीनाना राज्ञा वृत्तस्य विशुद्धरूपमवश्यमस्ति। वाय्वादिषु पुराणेषु अतीतकालीननृपातिरिक्ताना वर्त्तमानाना भविष्याणाञ्च राज्ञा वशक्रम उपलभ्यते। परीक्षितोऽनन्तरं भविष्यकालीनवंशावली सुव्यवस्थितेतिहासस्य निकटवर्तित्वादधिकमहत्त्वशीलाऽस्ति। किर्फलमहोदयेन स्वकीयेऽध्ययने हरिवंशे वंशविषयकतत्त्वाना सप्रमाणं मौलिकता निर्दिष्टास्ति। एतदर्थं तेन ययातेः वृत्तान्तमुदाहरणरूपेण प्रस्तुतमस्ति। ययातिचरितं हरिवंशे-ब्रह्मपुराणे चाति सक्षिप्तमस्ति। वायौ ब्रह्माण्डे किञ्चिद् विस्तृतजातमस्ति। मत्स्यपुराणे चेदं चरितं सर्वतो विस्तृतं विद्यते। अस्य चरितस्य पूर्णं विकसितरूप महाभारते दृश्यते।

पुराणेषु राजवंशस्य विवरणं प्रचुरमात्रायामुपलभ्यते यतो हि पुराणाना पञ्चलक्षणे वशवर्णनमेवोऽनिवार्यो विषयोऽस्ति। पुराणाना

राजवंशवर्णनं भागद्वये विभक्तमस्ति। एकं राजवंशवर्णनं महाभारतकालात् पूर्ववर्ति वर्तते द्वितीयश्च महाभारतान्तरस्यास्ति। महाभारतकालात्पूर्ववर्तिराजवंशापेक्षया महाभारतोत्तरकालीनं राजवंशवर्णनमग्रन्थेऽधिकमपयोगि मन्यते समालोचकैः। महाभारतोत्तरराजवंशस्य वर्णनं जरासन्धपुत्रसहदेवानन्तरमारभ्यते—

> **संग्रामे भारते वृत्ते सहदेवे निपातिते।**
> **सोमाधिस्तस्य दायादो राजाऽभूत् स गिरिव्रजे॥**[1]

अद्यत्वे प्राचीनभारतीयेतिहासज्ञानाय अन्यस्रोतोऽपेक्षया पुराणानि अधिकतया प्रामाणिकानि मान्यानि च स्वीक्रियन्ते। यथा यथा समयोऽत्येति तथा तथा पुराणेषु वर्णितस्य राजवंशस्य विवरणं सत्यं मन्यते। इदानीं शिलालेखेन, ताम्रपत्रेण, मुद्राभिश्च पौराणिकस्येतिहासस्य प्रामाणिकता संसिध्यति। मिराशीमहोदयद्वारा पठितेभ्यो मुद्रालेखेभ्यः पुराणवर्तिना कतिपयानां राजचरितानां सत्यता प्रमाणिता भवति। पुराणेषु सूतद्वारा राज्ञां वंशावल्या उल्लेखो महत्या सावधानतया कृतोऽस्ति। तेषु महाभारतोत्तरकालस्य आन्ध्र-कण्व-नन्द-मौर्य-गुप्त-शुङ्ग-नागवंशीयानां राज्ञामितिहासः स्पष्टतया उपलभ्यते। पुराणानां वंशावलीषु एकनामकानामनेकेषां राज्ञां भ्रमवारणाय एवंविधं विशेषणं दत्तमस्ति यत् तत्परिचये सन्देहो नोपतिष्ठते। यथा—पुराणानुसारं नल-मरुत्त-परीक्षित्-भीमसेन-जनमेजय-चन्द्र-सूर्यप्रभृतिषु राजसु सन्देहनिवारणाय तैः सह तेषां पूर्वजानां सङ्केतोऽपि कृतोऽस्ति। यथा—

> **नलौ द्वावेव विख्यातौ पुराणेषु दृढव्रतौ।**
> **वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः॥**[2]
> **नलौ द्वावेव विख्यातौ वंशे कश्यपसम्भवे।**
> **वीरसेनसुतस्तद्वन्नैषधश्च नराधिपः॥**[3]
> **द्वावृक्षौ सोमवंशेऽस्मिन् द्वावेव च परीक्षितौ।**
> **भीमसेनास्त्रयो विप्रा द्वौ चापि जनमेजयौ॥**[4]
> **करन्धमस्तु त्रैसानोर्मरुत्तस्य चात्मजः।**
> **अन्यस्त्वविक्षितो राजा मरुत्तः कथितः पुरा॥**[5]

---

१. मत्स्यपुराण २७०।१६; २. लिङ्गपुराण ६६।२४; ३. मत्स्यपुराण १२।५६; ४. हरिवंश १।३२।५; ५. वायुपुराण ६६।२।

अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ मतौ।
अन्यौ दानवमुख्यानां सूर्याचन्द्रमसौ तथा ॥[1]
अन्यावेतौ दनोः पुत्रौ सूर्याचन्द्रमसौ तथा।
दिवाकरनिशानाथौ तावन्यौ देवपुङ्गवौ ॥[2]

### महाभारतपूर्ववर्ती राजवंशः

पुराणेषु मानवजातेरारम्भो मनोरेव भवति। मनोः सन्तत्या मनुष्याः मानवा उच्यन्ते। पुराणेषु चतुर्दश (१४) मनूनामुल्लेखो विद्यते, किन्तु वंशप्रतिष्ठापनदृष्ट्या द्वावेव मनू उल्लेखनीयौ स्तः—प्रथमः स्वायम्भुवमनुः, सप्तमश्च वैवस्वतमनुः। तत्र—

स्वायम्भुवमनुः ब्रह्मणोऽङ्गजः पुत्रोऽस्ति तथा तस्य धर्मपत्नी शतरूपापि ब्रह्मणोऽङ्गजा पुत्री अस्ति। स्वायम्भुवमनोः शतरूपायां प्रियव्रत-उत्तानपादश्चेति द्वौ पुत्रौ तथा देवहूतिः आकूतिः प्रसूतिश्चेति तिस्रः कन्या अजायन्त। मनुना देवर्षिनारदस्यानुमत्या स्वकीयं ज्येष्ठ पुत्रं प्रियव्रत समस्तस्य भूमण्डलस्य राजानं विधाय स्वय विरक्तो भूत्वा तपः कर्तुं वने जगाम। राज्यमवाप्य प्रियव्रत औरसपुत्रवत् प्रजाः पालयन् सकलामिलां सुशशास। विश्वकर्मणः कन्यया बर्हिष्मत्या साकं तस्य विवाहो जातः यस्यां (१) आग्नीध्रः (२) इध्मजिह्वः (३) यज्ञबाहुः, (४) महावीरः, (५) हिरण्यरेताः, (६) धृतपृष्ठः, (७) सवनः, (८) मेधातिथिः, (९) वीतिहोत्रः, (१०) कविश्चेति दशपुत्राः—तथा ऊर्जस्वती नाम्नी एका कन्या जाता। तेषु त्रयः कवि-महावीर-सवनाः परमहंसा आसन्। जन्मत एव ते भगवदाराधनायामासक्ता विषयसुख-विमुखा सन्तः राज्याद्विरक्ता जाताः। प्रियव्रतस्य द्वितीयायां भार्यायां त्रयस्तनया अजायन्त—उत्तमः-तामसः-रैवतश्च ये क्रमशः तृतीय-चतुर्थ-पञ्चममन्वन्तराणामधिपतयोऽभूवन्। प्रियव्रतेन बहुतिथं कालं पृथिव्याः पालनं कुर्वता स्वभुजबलेन स्वराज्यतोऽधर्मं दूरीचकार।

एकदा प्रियव्रतेन राज्ञा निशां दिनं निर्मातुमिच्छया एकस्मिन् ज्योतिर्मये रथे उपविश्य सूर्यस्य पश्चाद् गच्छता पृथिव्याः सप्त परिक्रमाः कृताः। तस्य रथस्य नेमिभिः घृष्टाभ्यां पृथिव्यां सप्त समुद्राः जातास्तथा तैरेव पृथिव्यां सप्तद्वीपा अपि अजायन्त। तदनन्तरं प्रियव्रतोऽवशिष्टान् सप्तपुत्रान् सप्तद्वीपाधिपतीनकार्षीत्।

१. म० भा० अ० प. ६५।२७; २. कालिका पुराण ३५।५६

तेषु सप्तसु आग्नीध्रो जम्बूद्वीपस्य, मेधातिथिः प्लक्षद्वीपस्य, वपुष्मान् शाल्मलिद्वीपस्य, ज्योतिष्मान् कुशद्वीपस्य, द्युतिमान् क्रौञ्चद्वीपस्य, भव्यः शाकद्वीपस्य सवनश्च पुष्करद्वीपस्याधिपतिर्बभूव ।

प्रियव्रतः स्वयाः कन्याया ऊर्जस्वत्याया विवाहं शुक्राचार्येण समं कृतवान्, येन देवयानिः समुत्पन्ना यस्या पाणिग्रहणं राज्ञा ययातिना सहाजायत ।

एवं प्रियव्रतेन व्यवस्थां विधाय विषयसुखेभ्यो विमुखीभूय देवर्षेर्नारदस्योपदेशानुसारं वनमुपव्रज्य तीव्रतपस्याद्वारा भगवल्लोकस्य प्राप्तिः कृता । तस्य ह वा एते श्लोकाः—

> प्रियव्रतकृतं कर्म को नु कुर्याद् विनेश्वरम् ।
> यो नेमिनिम्नैरकरोच्छायां घ्नन् सप्त वारिधीन् ॥
> भूः संस्थानं कृतं येन सरिद्गिरिवनादिभिः ।
> सीमा च भूतनिर्वृत्त्यै द्वीपे द्वीपे विभागशः ॥[1]

पितरि प्रियव्रते वनमुपगते आग्नीध्रो जम्बूद्वीपस्य प्रजाः पुत्रवत् पालयन् पूर्वचित्तिनाम्न्या आप्सरसो गर्भात् –नाभि किंपुरुष-हरिवर्ष-इलावृत्त-रम्यक-हिरण्मय-कुरु-भद्राश्व-केतुमाल-नाम्नो नव पुत्रानुत्पादयामास । तदनन्तरं स पृथिव्या नव खण्डानि विधाय तन्नामकरणमात्मनस्तनयनामभिरेव कृत्वा एकैकं पुत्रमेकैकस्य खण्डस्याधिपतिं चकार । ततस्तेऽपि स्वानि स्वानि खण्डानि सम्यक् पालयमासुः । परलोकमुपगते आग्नीध्रे नवापि भ्रातरो मेरोः पुत्रीभिः मेरुदेव्यादिभिः सह विवाहं कृतवन्तः । तेषु ज्येष्ठस्य नाभेः भगवतो विष्णोर्यजने कृते मेरुदेवीतः ऋषभनामकः पुत्रोऽजायत, यो हि विष्णोरवतारः कथ्यते । ऋषभदेवस्य विवाह इन्द्रपुत्र्या जयन्त्या सह जातो यतः शतपुत्रा अजायन्त । तत्र सर्वगुणश्रेष्ठो ज्येष्ठो भरत आसीत्, यस्य नाम्नाऽस्य खण्डस्य नाम भारतवर्षं जातम् । प्रथममस्य खण्डस्य नामाजनाभमासीत् यतो हि नाभिना तत्पुत्रेण अजेन (ऋषभदेवेन) चास्य खण्डस्य पालनं कृतमासीत्, किन्तु भरतत एवास्य देशस्य नाम भारत वर्षमिति जातम् ।

> 'येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुणा आसीद् येनेदं वर्षं भारतमिति व्यपदिशन्ति ।'[2]
> 'अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ।'[3]

---

१. श्रीमद्भागवत् ५।१।३९–४०; २-३. श्रीमद्भागवत् ५।४।९, ५।७।३ ।

हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता ।
तस्मात्तु भारतं वर्षं तस्य नाम्ना महात्मनः ॥[1]

हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत् ।
तस्मात्तद् भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ॥[2]

ततश्च भारतं वर्षमेतल्लोकेषु गीयते ।
भरताय यतः पित्रा दत्तं प्रातिष्ठता वनम् ॥[3]

भरतस्य पुत्रः सुनीतिरभूत् यस्य वंशपरम्परायां चतुर्दश नृपानन्तर यशस्वी महाराजो गयो जातः, यं जना भगवतोऽवतारं वदन्ति। तस्य राज्ये पृथिवी प्रजानां सर्वान् मनोरथान् पूरयतिस्म। तस्य यज्ञेषु सोमरस निपीय महेन्द्र आनन्दनिमग्नो जातः। अस्यानन्यया भक्त्या यज्ञमूर्तिर्भगवान् प्रत्यक्षीभूय अस्य यज्ञस्य फल गृहीतवानासीत्। अस्य वंशपरम्परायाः अन्ते राजा विजयो जातो येन प्रियव्रतस्य वंशो निजकीर्तिभिः तथैवालङ्कृतो यथा वामनेन देवकुलमलङ्कृतमासीत्।

स्वायम्भुवमनोर्द्वितीयस्य पुत्रस्योत्तानपादस्य द्वे भार्ये आस्तां सुरुचिः सुनीतिश्च। तत्र सुरुच्यामुत्तमो जातः, सुनीत्यां च भक्तराजो ध्रुवः समुत्पन्न आसीत्। बाल्ये एव यतीव्रतपसा प्रसन्नो भगवान्नारायणो नवीनमेकं ध्रुवलोकं विधाय तत्र तं स्थापितवान्।

वैवस्वतमनुः पुराणानुसार समस्तस्य संसारस्यादिकारणमस्ति भगवान् नारायणः। तस्य नाभिकमलतः सर्वप्रथमश्चतुराननो ब्रह्मा आविर्भवति, यस्य मनसो मरीचिः दक्षिणाद ङ्गुष्ठाद्दक्षश्च प्रादुर्भवतः। दक्षस्य पत्न्यां प्रसूतौ अदितिरुत्पन्ना यस्या विवाहो मरीचिपुत्रेण कश्यपेन सह जातः। कश्यपाददित्यां भगवान् विवस्वान् ( सूर्यः ) समुत्पन्नः। अस्य संज्ञानाम्न्यां पत्न्यां वैवस्वतमनुः समुत्पन्नो यस्य नामान्तर श्राद्धदेवमनुरासीत्। प्रथम मनोः काचित् सन्ततिर्नासीत्। पुत्रकामनया तेन महर्षेः वसिष्ठस्याचार्यत्वे मित्रावरुणयोः (पुत्रेष्टियज्ञस्य) अनुष्ठानमारब्धम्, किन्तु मनुपत्न्या श्रद्धया होतारः प्रार्थिता यद् भवद्भिरेव विधिमन्त्रैरग्नौ आहुतिः प्रदेया यथा पुत्र्या उत्पत्तिः स्यात्। तदनुसार होतृभिः प्रयोगे विपर्यासे इलानाम्नी कन्या समुत्पन्ना यां विलोक्य मनोर्महदाश्चर्यं जातम्। तदनन्तर तेन पृष्टो महर्षिः वसिष्ठः होतृणा

१. मार्कण्डेय पुराण ५३।४१; २. वायुपुराण उ० पा० ३३।५२;
३. विष्णुपुराण २।१।३२।

विपरीतसंकल्पेन जातं विपर्ययं ज्ञात्वा इलायाः पुनः पुंस्त्वकामनया भगवन्तं विष्णुं प्रार्थितवान्। तत्परिणामे इला पुमान् सञ्जाता, यस्य नाम सुद्युम्नोऽभवत्।

कियद्दिनानन्तरं सुद्युम्नः अश्वमारुह्य सैनिकैः सह आखेटकं कुर्वन् दैवादम्बिकावने उपस्थितः। तत्रोपस्थितिकाले एव स पुनः स्त्री सञ्जातः, तस्याश्वो वडवा बभूव, सैनिकाश्च नार्यो जाताः। स्त्रीभूतः सुद्युम्नः लज्जावशात् स्वराजधान्यामगत्वा वने एव वसतिं चकार।

एकस्मिन् दिने सा भ्रमन्ती चन्द्रमसः आश्रमे उपस्थिता, तत्र तत्पुत्रं बुधं दृष्ट्वा तत्रानुरक्ता सती तेन सह गान्धर्वविवाहं कृतवती। अनन्तरं बुधात्तस्यां पुरूरवो नामकः पुत्र उत्पन्नः—

बुधस्य भवने तिष्ठन्निलो गर्भधरोऽभवत्।
अजीजनत् पुत्रमेकमनेकगुणसंयुतम्॥[1]

इलात उत्पद्यमानत्वात् स पुराणेषु ऐलोऽपि कथ्यते यश्चन्द्रमसो वंशप्रवर्तकोऽभिमतोऽस्ति। पुरूरवसो जन्मानन्तरं यदा इला महर्षिं वसिष्ठं स्मृतवती, तदा स तत्रोपस्थाय तस्याः तादृशीं दशां विलोक्य दयान्वितया भगवतः शिवस्याराधनां कृत्वा तं तोषयामास। ततस्तेन वरो दत्तो यदयं ते शिष्य एकमासपर्यन्तं पुरुषः स्थास्यति तथैकमासं यावत् स्त्री भविष्यति—

मासं पुमान् स भविता मासं स्त्री तव गोत्रजः।
इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम्॥[2]

तदनन्तरं वसिष्ठेन गुरुणा, पुत्रेण पुरूरवसा च सह स्वां राजधानीमागत्य सुद्युम्नो व्यवस्थयाऽनया स्त्रीत्वे गृहे तिष्ठन् पुंस्त्वे च प्रजापालनं कुर्वन् समयं यापयामास। परं प्रजा ईदृशेनार्द्धजरतीयेन राज्ञा प्रसन्ना नासन्—

आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया।
पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः॥[3]
स्त्रीत्वे तिष्ठति हर्म्येषु पुंस्त्वे राज्यं प्रशास्ति च।
प्रजास्तस्मिन् समुद्विग्ना नाभ्यनन्दन् महीपतिम्॥[4]

---

१. मत्स्यपुराण १२।१३, २-३. श्रीमद्भागवत ९।१।३९, ४०; ४. देवीभागवतेऽपि १।१२।३५।

सुद्युम्नस्य राजधानी प्रतिष्ठानपुरे आसीत्। पुरुषावस्थायां सुद्युम्नस्य त्रयस्तनया अभूवन्- (१) गयः (२) उत्कलः (३) हरिताश्वश्च। गयेन गयानाम्नी नगरीं निर्माय मगधे स्वकीयं राज्यशासनं कृतम्। उत्कलेन स्वनाम्ना उत्कलप्रदेशं स्थापयित्वा तत्र राज्यस्थापनं कृतम्। हरिताश्वेन च पूर्वस्यां दिशि स्वकीयं शासनं कृतम्—

सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः।
उत्कलश्च गयश्चैव हरिताश्वस्तथैव च॥
उत्कलस्योत्कला नाम गयस्य तु गया मता।
हरिताश्वस्य दिक्पूर्वा विश्रुता कुरुभिः सह॥[1]

सुद्युम्नो यदा वृद्धो जातस्तदा स स्वकीयाय ज्येष्ठपुत्राय पुरूरवसे राज्यं दत्वा तपसे वनं जगाम। तदनन्तरं स इलागर्भसम्भवो धर्मिष्ठो बुधपुत्रः पुरूरवा धर्मेण प्रजाः पालयन् सप्तद्वीपवतीं पृथिवीं सम्यक् शशास—

इलोदरे तु धर्मिष्ठं बुधः पुत्रमजीजनत्।
पुरूरवा इति ख्यातः सर्वलोकनमस्कृतः॥
सप्तद्वीपा वसुमती सशैलवनकानना।
धर्मेण पालिता तेन सर्वलोकहितैषिणा॥[2]

सुद्युम्ने तपस्तप्तुं वनमुपगते वैवस्वतेन मनुना पुत्रप्राप्तिकामनया शतवर्षपर्यन्तं यमुनातटे भगवत आराधना कृता, यतस्तस्य तदनुरूपा दश पुत्रा अभूवन्—(१) इक्ष्वाकुः (२) नृगः (३) शर्यातिः (४) दिष्टः (५) धृष्टः (६) करूषः (७) नरिष्यन्तः (८) पृषध्नः (९) नभगः (१०) कविश्च-

ततो मनुः श्राद्धदेवः संज्ञायामास भारत।
श्रद्धायां जनयामास दश पुत्रान् स आत्मवान्॥
इक्ष्वाकु-नृग-शर्याति-दिष्ट-धृष्ट-करूषकान्।
नरिष्यन्तं पृषध्नं च नभगं च कविं विभुः॥[3]

एभिर्दशभिर्मनुपुत्रैः भारतवर्षस्य विभिन्नप्रदेशेषु स्वं स्वमुपनिवेशं निर्माय तत्र धर्मपूर्वकं स्वकीयं शासनं स्थापितम्।[4] तत्र

१.२, मत्स्यपुराणे १२।१५, १६; २४।६, १३; ३. श्रीमद्भागवते ९।१।११, १२; ४. द्रष्टव्यः पुराणविमर्शः पृ० ३६२-३६३।

(१) मनोः प्रथमः पुत्र इक्ष्वाकुर्मध्यप्रदेशस्य शासक आसीत्, परमस्य राजधानी अयोध्यैवासीत्, या भारतीयसंस्कृतेः धर्मस्य च प्रमुखं केन्द्रमस्ति। "इक्ष्वाकोर्ज्येष्ठदायादो मध्यदेशमवाप्तवान्"। ( म० पु० १२।१६ )

(२) द्वितीयो मनुपुत्रो नृगो मथुराप्रदेशं प्रशशास, यस्य पुत्रः सुमतिरासीत्।

(३) मनोः तृतीयः पुत्रः शर्यातिः—वैदिककर्मकाण्डस्य महान् ज्ञाता आसीत्, तस्य आनर्तनामक पुत्रः उत्पन्नः तथा सुकन्या नाम्नी कन्या चाजायत, यस्या विवाहस्तेन महर्षिणा च्यवनेन सह कृतः। एवमात्मनः पुत्रस्यानर्तस्य नाम्ना स्वप्रदेशस्य च नाम आनर्त ( सौराष्ट्रम् ) कृतम्। आनर्तपुत्रेण रेवतेन कुशस्थल्या स्थित्वा आनर्ते शासनं कृतम्—"आनर्त्ता विषयो यस्य पुरी चापि कुशस्थली" ( वा० पु० ८६।२४ )। रेवतस्य शतपुत्रेषु ककुद्मी ज्येष्ठः सर्वगुणश्रेष्ठ आसीत्। रेवतस्य पुत्र्या रेवत्या सह बलभद्रस्य विवाहो जात आसीत्।

(४) मनोः चतुर्थपुत्रेण दिष्टेन विशाल्यां स्ववंशस्य स्थापना कृता। अस्य वंशपरम्परायां मरुत्तनामकः चक्रवर्ती राजा जातो यस्य विषये कथ्यते यत् मरुत्तस्य यादृग् यज्ञो जातो न तादृक् पृथिव्यां कस्यापि जातः। तत्र सर्वाणि याज्ञिकवस्तूनि स्वर्णमयानि आसन्। तत्र यज्ञे इन्द्रः सोमरसेन तृप्तः, ब्राह्मणाश्च दक्षिणाभिः प्रसन्नाः, मरुद्गणाः, परिवेषका देवगणाश्च सदस्या आसन्। साधिकघृतप्रयोगेणाग्नेरजीर्णं जातं यस्य प्रशमनमर्जुनेन खाण्डववनं दग्ध्वा कृतम्। अस्य वंशे तृणविन्दोः पुत्रो विशालो जातो येन विशाला नाम्नी नगरी निर्मिता। विशालवंशीयनरेशानां सम्बन्धे प्रसिद्धिरस्ति यत् तृणविन्दुप्रसादेन विशालवंशीया राजानो दीर्घायुषो महात्मानो वीर्यवन्तो धर्मपरायणाश्चासन्—

तृणविन्दुप्रसादेन सर्वे वैशालिका नृपाः।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः॥[१]

(५) मनुपुत्रेण पञ्चमेन धृष्टेन पञ्चनदप्रान्तः स्वाधिकारे नीतः। अस्मादेव धार्ष्टनामका क्षत्रिया उत्पन्ना ये ब्राह्मणसदृशा आसन्। अस्यैव वंशे अग्निवेशः समुत्पन्नः य आयुर्वेदस्य ज्ञातासीत्।

(६) षष्ठेन मनुपुत्रेण करूषेण विहारप्रान्तस्य दक्षिण-पश्चिमे रीवाराज्यतः पूर्वस्यां सोनभद्रतटे स्वं राज्यं स्थापितम्। करूषतः

---

१. वायुपुराणे ८६।२२।

कारूपनामको महाबली पराक्रमशाली योद्धा च क्षत्रियगणः समुत्पन्नः—
करूपस्य च कारूपाः क्षत्रिया युद्धदुर्मदाः। उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः॥

(७) मनोः सप्तमपुत्रात् नरिष्यन्तात् चित्रसेनः समुत्पन्नः, यस्य सन्ततयो भारतान्मध्यएसियायां गताः, याः शकनाम्ना प्रसिद्धाः।

(८) मनोः अष्टमः पुत्रः पृषध्नः स्वगुरोः च्यवनस्याज्ञया गाः पालयतिस्म। एकस्मिन् दिने घोरान्धकारे रात्रौ वर्षति मेघे सिंहः गोशालाया प्रविश्य एका गा जग्राह। तच्चित्कारेण पृषध्नः सिंहे शरं चिक्षेप किन्तु सिंहभ्रमेण गोःशिरो भिन्नम्। प्रातःकाले दृश्यमिदं दृष्ट्वा रुष्टेन गुरुणा शूद्रत्वाय स शप्तः। तदनन्तरं गुरोः शापं शिरोधार्यं स वने गत्वा ब्रह्मचर्यपूर्वकं तपस्यां कुर्वन् ब्रह्मणि लीनः—

शापाच्छूद्रत्वमापन्नश्च्यवनस्य महात्मनः।[1]
अजानन्नहनद् बभ्रोः शिरः शार्दूलशङ्कया॥[2]

(९) मनोः नवमात् पुत्रात् नभगात् नाभागस्य जन्म जातं येन यमुनादक्षिणे तटे स्वकीयं राज्यं स्थापितम्। नाभागस्य पुत्रो भगवत-परमभक्तोऽम्बरीषो जातः यस्य रक्षाहेतवे भगवता विष्णुना स्वं सुदर्शनं चक्रं नियुक्तं, यत् सर्वदा तस्य रक्षां करोतिस्म, येन च दुर्वाससः शापो निष्फलीकृतः।

(१० मनोर्दशमः पुत्रः कविः सर्वकनिष्ठो बाल्यावस्थात एव विरक्तो भूत्वा आत्मज्ञानी जातः। पञ्चदशवर्षावस्थायामेव स राज्यं त्यक्त्वा वने गत्वा भगवति चित्तं निवेश्य परमपदभाग्जातः।

एवं मनोः दशसु पुत्रेषु द्वौ कवि-पृषध्नौ विरक्तौ जातौ। ततो न कश्चन वंशश्चलितः, शेषाणां संक्षिप्तं वंशवर्णनं जात यास्यति च।

विभिन्नेषु पुराणेषु न केवलं वैवस्वतमनोः पुत्राणां नामसु एवान्तरं विद्यते, अपितु तेषां संख्यायामपि पार्थक्यं दृश्यते। कस्मिंश्चित्पुराणे तस्य दश पुत्राः प्रोक्ताः सन्ति, कुत्रचित्, नवैव निर्दिष्टा विद्यन्ते, तथा तेषां नामस्वपि मतभेदो दृष्टिगोचरी भवति। तथाहि—

मनो वैवस्वतस्यासन् दश पुत्रा महाबलाः।
इलस्तु प्रथमस्तेषां पुत्रेष्ट्या समजायत॥

---

१. वायुपुराणे ८६।२; २. श्रीमद्भागवते ९।२।६,१६।

इक्ष्वाकुः कुशनाभश्च अरिष्टो धृष्ट एव च ।
नरिष्यन्तः करूषश्च शर्यातिश्च महाबलः ॥
पृषध्नश्चाथ नाभागः सर्वे ते दिव्यमानुषाः[1] ।

मनोः प्रथमजस्यासन् नव पुत्रास्तु तत्समाः ॥
इक्ष्वाकुर्नहुषश्चैव धृष्टः शर्यातिरेव च ।
नरिष्यन्तस्तथा प्रांशुर्नाभागोऽरिष्ट एव च ॥
करूषश्च पृषध्नश्च नवैते मानवाः स्मृताः[2] ।

इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥
नरिष्यन्तश्च नाभागो ह्यरिष्टः करुषस्तथा ।
पृषध्नश्च महातेजा नवैते शक्रसन्निभाः[3] ॥

मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः ।
इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥
निरष्यन्तस्तथा प्रांशुर्नाभागादिष्टसत्तमाः ।
करूषश्च पृषध्नश्च अयोध्यायां महाबलाः[4] ॥

अत्राग्नि—श्रीमद्भागवतपुराणयोररिष्टस्य नाम नो टङ्कितमस्ति । कूर्मपुराणे नाभागस्यावृत्ति कृताऽस्ति । वायुपुराणे नहुषेन सख्यापूर्ति. कृता विद्यते । श्रीमद्भागवते नृग-दिष्ट-नभग-चवयो भिन्ना. प्रोक्ता वर्तन्ते । यद्यत्र नभग एव नाभाग. स्वीक्रियेत तर्हि तद्भिन्न नास्ति । अग्निपुराणे नाभागादिष्टमेव मेवनामानुमीयते, यतोऽत्र नाभाग. पृथगेवोक्तोऽस्ति । यदि तत्र नाभागादिष्टमेव मेवाङ्गीक्रियेत तर्हि तदा प्रांशुः विशेषणं स्यात्, परन्तु प्रांशोरुल्लेखो वायावपि विद्यते । यदि तत्रापि प्रांशुविशेषणं मन्येत तर्हि सख्यापूर्त्यै नहुषस्यापि तत्रास्तित्वमवश्यं सम्भवेत् । वायौ पाण्डुलिपिषु नहुल, नहुच, नहुषश्चेति पाठभेदो दृश्यते—

---

१. मत्स्यपुराणे ११।४०,४१, २ वायुपुराणे ८५।३,४, ३. कूर्मपुराणम्-पूर्वार्द्धे २०।४,५, ४. अग्निपुराणे ७३।५,६ ।

## नाम-संख्याभेददिग्दर्शनम्

| | पाद्मे, | मत्स्ये, | कौर्मे, | वायौ, | अग्नौ, | श्री० भा० |
|---|---|---|---|---|---|---|
| १—इक्ष्वाकुः | — | — | — | — | — | — |
| २—कुशनाभः | — | नाभागः | नहुषः | नाभागादिष्टः | नृगः | |
| ३—अरिष्टः | — | — | — | प्राशुः | दिष्टः | |
| ४—धृष्टः | — | — | — | — | — | |
| ५—नरिष्यन्तः | — | — | — | — | — | |
| ६—करुषः | — | — | — | — | — | |
| ७—शर्यातिः | — | — | — | — | — | |
| ८—पृषघ्नः | — | — | — | — | — | |
| ९—नाभागः | — | — | — | — | नभगः | |
| १०—इलः | — | — | — | — | कविः | |

इत्थमिक्ष्वाकु-धृष्ट-नरिष्यन्त-शर्याति-करूष-पृषघ्न-नाभागेषु नामसु नास्ति विशेषो मतभेदः। सर्वेषु पुराणेषु इमानि नामानि प्रायः समानानि मिलन्ति, किन्तु शेषेषु वर्तते विवादः।

(१) एव श्रीमद्भागवतं महापुराणं वैवस्वतमनोः दश पुत्रान् तथेलानाम्नीमेकां कन्यकाञ्च मनुते।

(२) पद्मपुराणं मत्स्यपुराणञ्च मनोर्दशैव पुत्रान् स्वीकुरुतः, परन्तु ते इलामपि तत्रैवान्तर्भावयतः।

(३) अग्नि-वायु-कूर्मपुराणानि च मनोर्नवैव पुत्रानङ्गीकुर्वन्ति तथा तदतिरिक्तामिलानाम्नीमेकां कन्यकाञ्च कथयन्ति।

इक्ष्वाकोरुत्पत्तिविषये एवं श्रूयते। एकदा वैवस्वतमनोः छिक्कासमये तन्नासिकात इक्ष्वाकुरभिनिःसृतः, यस्य शतं पुत्रा जाता ये परमधार्मिका महादानिनश्चासन्। तेषु विकुक्षिः-नाभिः-दण्डकश्चेति त्रयः अतिविख्याता आसन्—

> क्षुवतस्तु मनोः पूर्वमिक्ष्वाकुरभिनिःसृतः।
> तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम्॥
> तेषां ज्येष्ठो विकुक्षिश्च निमिर्दण्डश्च ते त्रयः।[1]

१. वायुपुराणे ८८।८।

(क) इक्ष्वाको ज्येष्ठपुत्रो विकुक्षिर्मेरोरुत्तरप्रदेशः स्वाधिकारे कृतः। तद्वंशजाश्च मेरोर्दक्षिणे भागे स्वशासनं स्थापितवन्तः।

(ख) निमिना पूर्वोत्तरविहारप्रान्ते विदेहकुलस्य स्थापन कृतम्। एतद्वंशीयेनैकेन राज्ञा मिथिला स्वराजधानी कृता। अत्रत्याः सर्वे राजानो जनकाः कथ्यन्ते। सर्वे चाध्यात्मविद्याविशारदा भवन्ति।

(ग) दण्डकेन दक्षिणारण्येषु अधिकारः कृतः। अनन्तरं तन्नाम्ना तत् दण्डकारण्यमुच्यते।

एवमिक्ष्वाकोः शतपुत्रेषु पञ्चाशद् उत्तरखण्डस्य शासका जाताः। अष्टचत्वारिंशद् दक्षिणे गताः। एवं विकुक्षेः शतपुत्रेषु पञ्चविंशतिः पूर्वस्य, पञ्चविंशतिः पश्चिमस्य, त्रयो मध्यभागस्यावशिष्टाः, सप्तचत्वारिंशद् दक्षिणस्य राजानो जाताः—

तेषां पुरस्तादभवन्नार्यावर्ते नृपाः नृप।
पञ्चविंशतिः पश्चाच्चत्रयो मध्ये परेऽन्यतः॥[1]

विकुक्षे द्वितीय नाम शशाद आसीद् यतो हि एकदा इक्ष्वाकोरष्टकाश्राद्धार्थं यज्ञीयपशोरन्वेषणाय वनमुपगतः क्षुधा पीडितो व्याकुलीभूय स यज्ञीयं पशुं शशं भक्षितवान्। अयं महान् प्रतापी एवं धार्मिकश्च राजा बभूव। एकदा देवासुरसंग्रामे तेन इन्द्रं वृषभं कृत्वा तस्य ककुदि उपविश्य दैत्यानां पुराणि जितानि, अतोऽयं पुरञ्जयः इन्द्रवाहः ककुत्स्थोऽपि कथ्यते। अस्यैव वंशपरम्परायां युवनाश्वस्य पुत्रो मान्धाता चक्रवर्ती राजा बभूव, य एकाकी एव समस्तां महीं शशास। स विष्णोरंश आसीत्, यस्य पञ्चाशत् कन्यकानां विवाहः सौभरिणा महर्षिणा सह जातः—

यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा॥[2]
मान्धाता यौवनाश्वो वै त्रैलोक्यविजयी नृपः।
अत्राप्युदाहरन्तीमौ श्लोकौ पौराणिका द्विजाः॥
यावत्सूर्यं उदेतिस्म यावच्च प्रतितिष्ठति।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते॥
यौवनाश्वं महात्मानं यज्वानममितौजसम्।
मान्धाता तु ननुर्विष्णोः पुराणज्ञाः प्रचक्षते॥[3]

१.२ श्रीमद्भागवते ९।६।४।६६।३४; ३. वायुपुराणे ८८।६७-६६।

मान्धातुः पुत्रो मुचुकुन्दोऽभूत्। ततोऽम्बरीषो यस्य वंशपरम्परायां त्रिशङ्कुरुत्पन्नः, यो ब्राह्मणकन्यापहरणात् तत्पित्रा चाण्डालत्वाय शप्तः। तदनुसारं स चाण्डालो जातः। विश्वामित्रः स्वतपोबलेन तं सशरीरं स्वर्गं प्रेषयितुमियेष, परं देवैः स ततोऽधः पातितः तदा विश्वामित्रेण स आकाशेएवावरुद्धः। तत्कालादद्यापि त्रिशङ्कुरधः शिरा अन्तराले एवावलम्बते। त्रिशङ्कुरिति नामकरणन्तु एवं विद्यते—

> पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च।
> अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः॥
> एवं स त्रीणि शङ्कूनि दृष्ट्वा तस्य महातपाः।
> त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः॥[1]

त्रिशंकोः पुत्रो हरिश्चन्द्रो जातो यस्य सत्यस्य परीक्षा विश्वामित्रेण मुनिना कृता। परिणामतो राजा हरिश्चन्द्रः काश्यां स्त्रीपुत्रसहितो विक्रीतः चाण्डालस्य दासः सन् श्मशाने मृतकानां कर्पटचयने नियुक्तः, किन्तु तेन सत्यं न त्यक्तं, येन देवैः सह प्रसन्नो भूत्वा विश्वामित्रस्तस्मै ज्ञानस्योपदेशो दत्तो यस्य प्रभावेण स सपरिवारः ब्रह्मलोकं गतवान्।

हरिश्चन्द्रपुत्रस्य रोहितस्य वंशपरम्परायां बाहुकस्य पुत्रो राजा सगरो जातः। विमातृभिः सापत्न्यद्वेषवशाद् गर्भावस्थायां यस्य मात्रे भोजनेन साकं विषं प्रदत्तं तेन विषेण साकमुत्पद्यमानत्वादस्य नाम सगरो जातः—

> आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह।
> सह तेनैव संजातः सगराख्यो महायशाः॥[2]

अथ चक्रवर्ती राजासीद्। और्वस्य ऋषेरादेशाद् राज्ञा सगरेणाश्वमेधनामकं यज्ञं कर्तुमारब्धम्। शततमे यज्ञे इन्द्रेणास्याश्वमेधीयमश्वमपहृत्य गङ्गासागरे तपस्यतः कपिलमुनेः पार्श्वे बद्धः। पितुराज्ञया षष्ठिसहस्रैः सगरपुत्रैः तमश्वमेधीयमश्वं मार्गमाणैः पृथ्वी खनिता, या सागररूपेण परिणता। कपिलस्य मुनेराश्रमो बद्धमश्वं विलोक्य तेषां कोलाहलेन कपिलस्य समाधिर्भग्नः, तथा तस्य क्रोधाग्निना तत्कालमेव ते सगरपुत्रा भस्मसाज्जाताः।

---

१. वायुपुराणे ८८।१०८,१०९; २. श्रीमद्भागवते ९,८;४।

ततस्तेनाप्रमेयेण कपिलेन महात्मना ।
भस्मराशीकृताः सर्वे काकुत्स्थसगरात्मजाः ॥

वा. रा. बा. का. ४०।३०

तदनन्तरं राज्ञः सगरस्य द्वितीयपत्न्यां केशिन्यामुत्पन्नस्यासमञ्जस्य पुत्रेणांशुमता पितामहस्य सगरस्याज्ञया अश्वान्वेषणे चलितः । सगरपुत्रद्वारानिर्मितसागरमार्गेण स तत्रैवोपस्थितो यत्र तत्पितरो भस्मसाज्जाता आसन् । अंशुमता साञ्जलि प्रणामपूर्वकं कपिलं स्तुवता प्रोक्तं यद् भगवन् ? भवान् मायागुणैः परोऽस्ति, भवति नामरूपकल्पना मिथ्याऽस्ति । भवता ज्ञानोपदेशार्थमेवेदं दिव्यं शरीरं धृतं विद्यते । एतदाकर्ण्य कपिलोंऽशुमन्तं प्रावोचत्—वत्स ! अयमस्ति अश्वमेधीयोऽश्वः, एनं त्वं नय । मत्क्रोधाग्निना भस्मसाज्जाताः ते पितरो स्वोद्धारार्थं गङ्गाजलमपेक्षन्ते । गङ्गाजलं प्राप्यैवैते स्वर्गं गमिष्यन्ति नान्यथा । अतस्तदर्थं त्वं यतस्व ।'

ततोंऽशुमानश्वमादाय परावृतः । सगरेण च तेनाश्वमेधीयेनाश्वपशुना यज्ञस्यावशिष्टायाः प्रक्रियायाः पूर्णतां नीत्वा अंशुमन्तं स्वकीये राज्येऽभिषिच्य और्वस्य मुनेराज्ञया तपस्तप्तुं वनमुपगतः ।

अंशुमता गङ्गां पृथ्वीतले समानेतुं बहुतिथं कालं तपस्तप्तं, किन्तु गङ्गामानेतुं न समर्थो जातः, तपः कुर्वन्नेव स परलोकं गतः । ततस्तत्पुत्रो दिलीपोऽपि कृतप्रयत्नो गङ्गां पृथिव्यामानेतुं न शशाक । तपस्तपत एव तस्य शरीरान्तो जातः । तदनन्तरं दिलीपस्य पुत्रो राजा भगीरथो मन्त्रिषु राज्यभारमाधाय गङ्गावतरणे रत एकेन पादेन स्थितोऽन्नजलादिकं त्यक्त्वा कठिनं तपः कृतवान्, तस्य शरीरं शुष्कं केवलमस्थिपञ्जरमात्रमवशिष्टमासीत् । तेन प्रसन्ना सती भगवती गङ्गा दर्शनं दत्त्वा वरयाचनाय प्रोक्तवती । ततो भगीरथः साञ्जलिर्मां प्रणमन् प्रार्थितवान्—मातः ! मम पितरोऽश्वमेधीयमश्वं मार्गमाणाः पृथ्वीं खनन्तो महर्षेः कपिलस्य ब्रह्मतेजसा दग्धा जाताः सन्ति, तेषामुद्धारकामनया मम पितृपितामहा भवदर्थं तपस्तपन्तो दिवं गताः । भवतीं विना तेषामुद्धारस्य न किञ्चित् प्रायश्चित्तं धर्मशास्त्रेषु विद्यते । कृपया तत्र गत्वा तत्र भवती तेषामुद्धारं करोतु, इयमेवास्ति ममाभिलाषा वरो वा । एतच्छ्रुत्वा गङ्गया प्रोक्तम्—वत्स ! अवश्यमहं गमिष्यामि, परं मम वेगं

---

१. गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ ।
तस्यां कुरु महाबाहो ! पितॄणां सलिलक्रियाम् ॥
भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी ।
तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ।
षष्टिं पुत्रसहस्राणि स्वर्गं लोकं नयिष्यति ॥ वा.रा.बा. ४१।१९-२० ।

को धारयिष्यति ? आकाशादवतीर्णा अहं पृथ्वीं विदार्य रसातलमुपस्थास्ये ।[1]

तदा भगीरथेन कथितम्-अम्ब ! भगवान् सदाशिवो भवती धारयिष्यति । मयि कृपां कृत्वा भवती तत्र गन्तुं मामनुगृणीहि । अहं तपस्यया भगवन्तमाशुतोषं प्रसादयिष्यामि । तदा तथास्तु, इत्युक्त्वा गङ्गया तत्प्रार्थनं स्वीकृतम् । तदनन्तरं भगीरथः तीव्रं तपस्तप्त्वा श्रीसदाशिवमनुकूलं चकार । ततो गङ्गा महता वेगेनाधोऽवततार भगवान् सदाशिवश्च तां स्वजटाजूटे रमयाञ्चकार । अनन्तरं भगीरथप्रार्थनया स स्वजटाया एकं भागं निष्पीड्य तस्मै ददौ, या विशाला धारा भूत्वा भगीरथरथमनुजगाम ।[2]

मार्गे यज्ञमनुतिष्ठतो राज्ञो जह्नोर्यज्ञशाला गङ्गाजलप्रवाहे प्रावहत् । ततस्तस्या गर्वं ज्ञात्वा कुपितो राजा जह्नुः समस्तं गङ्गाजलमपिबत् । ततो भगीरथेन प्रार्थितः प्रसन्नो भूत्वा स कर्णच्छिद्रद्वारा गङ्गां प्रकटितवान् । अतो गङ्गा जह्नोः पुत्री जाह्नवी प्रोच्यते[3]--

ततो लोकपावनी भगवती गङ्गा भगीरथरथमनुसरन्ती हरिद्वारं कनखलं कर्णपुरं प्रयागं विन्ध्याचलं वाराणसीं सोनपुरं पाटलिपुत्रं च पावयन्ती कपिलमुनेराश्रमे उपस्थिता, यत्र गङ्गाजलस्पर्शमात्रेण भस्मीभूता. षष्टिसहस्राणि सगरसन्ततयो निष्कल्मषा दिव्यशरीरा. सन्तो दिव्यविमानेषु उपविश्य स्वर्गमुपजग्मुः ।[4]

राज्ञा भगीरथेन घोरतमया तपस्यया भूतले गङ्गा समानीता । अतो जनैः सा भागीरथीति नाम्नापि व्यवह्रियते ।[5]

---

१. कोऽपि धारयिता वेगं पतन्त्या मे महीतले ।
अन्यथा भूतलं भित्त्वा नृप ! यास्ये रसातलम् ॥ श्री भा ९।९।४

२. भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महाराजस्तं गङ्गा पृष्ठतोऽन्वगात् ॥

३. ततस्तुष्टो महातेजा. श्रोत्राभ्यामसृजत् प्रभु ।
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥
वा. रा बा ४३।३०,३८

४ यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ।
सगरात्मजा दिवं जग्मु केवलं देहभस्मभि ॥ श्री. भा, ९।९।१२

५. भगीरथस्तु तां गङ्गामानयामास कर्मभिः ।
तस्माद् भागीरथी गङ्गा कथ्यते वंशवित्तमैः ॥ वा. पु ८८।१६८

अग्रेऽस्यैव वंशे राजा खट्वाङ्गो बभूव, यो हि देवासुरसंग्रामे दैत्यान् निहत्य देवानां स्वर्लोके महत् साहाय्यं कृतवान्, तेन प्रसन्ना देवा वरदानरूपे तस्यायुर्निर्दिष्टम्। ततस्तेन स्वजीवनस्यावशिष्टे एकस्मिन् मुहूर्ते आयुषि स्वराजधानीमुपेत्य भक्त्या सर्वस्वं भगवदर्पणं कृत्वा विष्णुलोकः प्राप्तः।[१]

खट्वाङ्गस्य ( द्वितीयदिलीपस्य ) पुत्रो रघुस्तस्याजस्तस्य दशरथः पुत्रोऽभवद्,यस्य भार्यासु स्वयं विष्णुरेव राम-लक्ष्मण-भरत-शत्रुघ्ननामक-चतुःसंख्याकपुत्ररूपेणावतीर्णः। तत्र रामो लक्ष्मणेन साकं विश्वामित्रस्य यज्ञरक्षासमये ताडकादीन् निहत्य मार्गेऽहल्यामुद्धरन् जनकपुरे गत्वा सीतास्वयम्बरे सम्मिलितो धनुर्भङ्गं विधाय जनकनन्दिन्याः सीतायाः पाणिग्रहणं चकार। दशरथद्वारा रामाय यौवराज्यपदप्रदानप्रसङ्गे कैकेयीकुमत्या पितुः प्रतिज्ञारक्षणार्थं सीतालक्ष्मणाभ्यां सह चतुर्दशवर्ष-पर्यन्तं रामस्य वनवासो जातः। स हि प्रसन्नतया तमोऽरण्यं तमसा शृङ्गवेरपुरे लोकपावनीं गङ्गाश्चोत्तार्य निषादराजेन गुहेन साकं प्रयागे मुनिराजस्य भरद्वाजस्य दर्शनं कुर्वाणः चित्रकूटस्थान् ऋषीन् मुनीश्च सुखयन् पञ्चवटीं प्राप्तवान्। तत्र स लक्ष्मणद्वारा दुश्चरित्रायाः शूर्पण-खायाः कर्णनासिके विच्छिद्य तत्पक्षीयान् खर-दूषणत्रिशिरःप्रभृतीन् चतुर्दशसहस्राणि राक्षसान् संहृतवान्। समाचारममुमाकर्ण्य रावणेन मायया मारीचं सुवर्णमृगं निर्माय रामं दूरे कृत्वा सीताया हरणं कृतम्। ततो रामः सीताया वियोगे भ्रमन् मार्गे गृध्रराजस्य जटायुषो रावण-द्वारा हतां सीतां ज्ञात्वा तस्यौर्ध्वदैहिकं कृत्यं सम्पाद्य पम्पासरसि हनुमद्द्वारा सुग्रीवेण सार्द्धं मैत्रीं विधाय वालिनं च निहत्य हनुमतः सीतायाः संकेतं ज्ञात्वा रामेश्वरस्य स्थापनं विधाय नलनीलद्वारा शतयोजनविस्तीर्णे समुद्रे सेतुं निर्माय ऋक्षवानरसेनया लङ्कामाक्रम्य विभीषणेन सह सौहार्दं कृत्वा सकुलं रावणं संहृत्य लङ्काया राज्यं विभीषणाय दत्वा सीताया अग्निपरीक्षां च कृत्वा पुष्पकविमानद्वारा सर्वैः सहायोध्यां परावृतः। आत्मनो वियोगे भ्रातरं भरतं व्याकुलं दृष्ट्वा तस्य नेत्रयोरश्रुः समागता, सहसा प्रेम्णा तमुत्थाप्य गले कृतवान्। पुनर्भ्रातृभिः सह राजभवने गत्वा सर्वप्रथमं सादरं कैकेयीमभिवाद्या-नन्तरमन्यमातरौ प्रणनाम। तदनन्तरं कुलगुरुणा वसिष्ठेन विधिपूर्वकं रामस्य राज्याभिषेकः कृतः। रामराज्ये त्रेतायुगः सत्ययुगवज्जातः।

---

१. येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम्।
त्रयोऽभिसंहिता लोका बुद्ध्या सत्येन चैव हि॥ वा. पु. ८८।१८२

आवश्यकतानुसार वर्षणं भवतिस्म, सर्वदा सुकाल एवासीत्, न कदापि दुष्काल उपस्थित, सर्वा दिशः प्रसन्ना दृश्यन्तेस्म, तथा नगराणि जानपदाश्च हृष्ट-पुष्टजनैः परिपूर्णा आसन्। आधि-व्याधि-दुःख-शोकादीना का वार्ता मृत्युरपि इच्छा विना न भवतिस्म, न वा रामराज्यसमये कश्चनानर्थो जात.[1]। रामेण लोककल्याणार्थमनेके यज्ञा अनुष्ठिताः। धर्म-पूर्वकं प्रजा. पालयता च तेन एको महानादर्श स्थापित। रामसदृश आदर्शो राजा तद्राज्यसममादर्शं राज्यञ्च अस्मिन् विश्वस्मिन् कुत्रापि न श्रूयते। श्रीरामस्यैकपत्नीव्रतन्तु विश्वस्मिन्नादर्शभूतमस्ति। सीताति-रिक्तया कयाचिदन्यया न तेन विवाह कृत, किन्तु यज्ञावसरे यदा यदा धर्मपत्न्या आवश्यकता भवतिस्म, तदा तदा तेन स्वर्णमयी सीताप्रतिमा निर्माय यज्ञकार्यं सम्पादितम्[2]। रामस्य द्वौ कुशलवौपुत्रौ बभूवतु, तत्र जातो कुशस्य पुत्रोऽतिथि सजात, एवमय वशोऽग्रे सुमित्रपर्यन्त गत्वा समाप्तः।[3]

सूर्यवशपरम्परायामिक्ष्वाकु-विकुक्षि-मरुत्त युवनाश्व-मान्धातृ-अम्ब-रीष-मुचुकुन्द-त्रिशङ्कु-हरिश्चन्द्र-सगर-दिलीप-असमञ्जस-अंशुमत्-भगीरथ-ऋतुपर्ण-सुदास-खट्वाङ्ग(दिलीप)रघु-अज-दशरथ-राम-कुश-लव-अग्निवर्ण-निषध-नल-सुदर्शन-निमि-जनकादयोऽतिप्रसिद्धा राजानोऽभूवन्। विभि-न्नेषु पुराणेषु एषामादर्शमय्या विशेषतया विस्तृत उल्लेखोऽस्ति। सूर्यवशोत्पन्नाना महाभारतपूर्ववर्तिना राज्ञामादिपुरुषाद्वैवस्वतमनो-रारभ्य बृहद्बलपर्यन्त शतनृपतीना नामोल्लेख तत्तत्पुराणेषु समासतो व्यासतश्च दरीदृश्यते।[4]

---

१ काले वर्षति पर्जन्य सुभिक्ष विमला दिश।
हृष्टपुष्टजनाकीर्णं पुर जानपदास्तथा॥
नाकाले म्रियते कश्चिन्न व्याधि प्राणिनां तथा।
नानर्थो विद्यते कश्चिद् रामे राज्य प्रशासति॥
वा रा उ का ९९।१३,१४

२ न सीताया परा भार्या वव्रे स रघुनन्दन।
यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत्॥ वा रा उ का ९९।८

३ एते इक्ष्वाकुदायादा राजान प्रायश. स्मृता।
वशे प्रधाना ये तेऽस्मिन् प्राधान्येन प्रकीर्तिता॥ वायुपुराण ८८।२१३

४ तत: प्रसेनजित्तस्मात्तक्षको भविता पुन।
ततो बृहद्बलो यस्तु पित्रा ते समरे हत॥ श्री. भा ९।१२।८

इक्ष्वाकुवंशपरम्पराया उल्लेखः प्रायः सर्वेषु पुराणेषु वर्तते, परन्तु क्वचन शासनपरम्पराया निर्देशो विद्यते, कुत्रचिच्च कुलपरम्पराया उल्लेखो वर्तते। अतस्तत्र संख्यायां नामसु च महानन्तरः समागतोऽस्ति। सूर्यवंशस्यान्तिमो राजा तक्षकस्य पुत्रो बृहद्बलो महाभारतसंग्रामेऽभिमन्युद्वारा निहतः। ततो बृहद्बलो योऽर्जुनतनयेनाभिमन्युना भारतयुद्धे क्षयमनीयत (४।४।४८)।

## सूर्यवंशपरम्पराया दिग्दर्शनम्

| | | | |
|---|---|---|---|
| १ वैवस्वतमनुः | २६ त्रसदस्युः | ५१ अयुतायुः | ७६ सुधन्वा |
| २ इक्ष्वाकुः | २७ सभूतः | ५२ ऋतुपर्णः | ७७ पारिपात्रः |
| ३ विकुक्षिः | २८ अनरण्यः | ५३ सर्वकामः | ७८ शित· |
| ४ पुरञ्जयः | २९ त्रसदश्वः | ५४ सुदासः | ७९ दलः |
| ५ सुयोधनः | ३० हर्यश्वः | ५५ मित्रसहः | ८० उन्नाभः |
| ६ पृथुः | ३१ वसुमनाः | ५६ सर्वकर्मा | ८१ वज्रणाभः |
| ७ विष्वगश्वः | ३२ त्रिधन्वा | ५७ अनरण्यः | ८२ शङ्खनः |
| ८ आर्द्रः | ३३ त्र्यारुणः | ५८ निघ्नः | ८३ व्युषिताश्वः |
| ९ युवनाश्वः | ३४ त्रिशङ्कुः | ५९ अनमित्रः | ८४ विश्वसहः |
| १० श्रावस्तः | ३५ हरिश्चन्द्रः | ६० रघुः (प्रथमः) | ८५ हिरण्यनाभः |
| ११ वत्सकः | ३६ रोहितः | ६१ दुलिदुहः | ८६ परकौशल्यः |
| १२ बृहदश्वः | ३७ हरितः | ६२ दिलीपः खट्वाङ्गः) | ८७ वसिष्ठ. |
| १३ कुवलाश्वः | ३८ चञ्चु | ६३ रघु (दीर्घबाहुः) | ८८ पुष्यः |
| १४ दृढाश्वः | ३९ विजय | ६४ अज | ८९ ध्रुवसन्धिः |
| १५ प्रमोदः | ४० रुरुकः | ६५ दशरथः | ९० सुदर्शनः |
| १६ हर्यश्वः | ४१ वृकः | ६६ राम. | ९१ अग्निवर्णः |
| १७ निकुम्भः | ४२ बाहुक | ६७ कुशलवौ | ९२ शीघ्रगः |
| १८ संहताश्व | ४३ सगर. | ६८ अतिथिः | ९३ मरुः |
| १९ कृशाश्वः | ४४ अंशुमान् | ६९ निषधः | ९४ प्रसुश्रुतः |
| २० प्रसेनजित् | ४५ दिलीपः | ७० नल | ९५ सुसन्धिः |
| २१ युवनाश्वः | ४६ भागीरथः | ७१ नभस् | ९६ अमर्षणः |
| २२ मान्धाता | ४७ श्रुतः | ७२ पुण्डरीकः | ९७ सहस्वान् |
| २३ अम्बरीषः(१) | ४८ नाभागः | ७३ क्षेमधन्वा | ९८ विश्रुतवान् |
| २४ युवनाश्वः | ४९ अम्बरीषः(२) | ७४ देवानीकः | ९९ तक्षकः |
| २५ पुरुकुत्सः | ५० सिन्धुद्वीपः | ७५ अहीनगुः | १०० बृहद्बलः |

आधुनिकैर्विद्वद्भिरपि स्वस्वदृष्टिभिरिक्ष्वाकुवंशावल्यां स्वस्वविचारा यत्र तत्रोपस्थापिताः सन्ति। तत्र डॉ० पुसालकरस्य विचारे किञ्चिन्मौलिकत्वं प्रतीयते। एवं सत्यपि राज्ञां नामावल्याः क्रमस्य च सम्यक् संगतिर्न जायते। तत्र सतत प्रयासोऽपेक्षितो विद्यते। एकस्य पुराणस्यान्येन पुराणेन सह नामावल्याः सन्तोषजनक उल्लेखो नास्ति। स्थूलदृष्ट्या तत्तत्पुराणानां समन्वयं विधाय सूर्य-सोमवंशावल्याः क्रमश उल्लेखः क्रियते। तत्र विद्वांस एव प्रमाणम्। पुसालकरेण स्वकीये पुस्तके[1] यत् सूर्यवंशिनां राज्ञां कालविभाजनं कृतं विद्यते। तत्रे (१) इक्ष्वाकोर्मान्धातृपर्यन्तं प्रथमः इक्ष्वाकुयुगः, (२) मान्धातुः सगरपर्यन्त द्वितीयोः मान्धातृयुगः, (३) सगरतो रामचन्द्रपर्यन्त तृतीयो रामचन्द्रयुगोऽभिमतो विद्यते। द्वापरे भगवतः श्रीकृष्णस्य समये सूर्यवंशीयानां नृपाणामस्तित्वं नाममात्रस्यासीत्।

## चन्द्रवंशस्य परम्परादिग्दर्शनम्

सूर्यवंशश्चन्द्रवंशश्चेत्युभौ वंशौ वैवस्वतमनुत एवारभ्येते, किन्तु द्वयोरन्तरमियदेवास्ति यत् सूर्यवंशो मनोर्ज्येष्ठपुत्रादिक्ष्वाकोरारभ्यते, चन्द्रवंशश्च मनोः पुत्र्या इलातः प्रारभ्यते। चन्द्रवंशिना नरेशानामुत्पत्तौ प्रकाशाय श्रीमद्भागवते लिखितमस्ति यद् भगवतो नारायणस्य नाभिकमले ब्रह्मा प्रादुर्भूतः, ततोऽत्रिमुनिर्जातस्तस्य नेत्राभ्याममृतमयश्चन्द्रमा उत्पन्नः। चन्द्रमसो बुधोऽजायत। बुधादिलाया पुरूरवा उत्पन्नः, यः सोमवंशप्रवर्तको जातः। पूर्वं स्त्रीभावाद् यदा सुद्युम्नो राज्याधिकारी न सिद्धस्तदा वसिष्ठस्याज्ञयेलाभावे उत्पन्नाय स्वपुत्राय पुरूरवसे राज्यं दत्वा वनमाश्रितवान्। ततः पुरूरवाः प्रतिष्ठानपुरे स्थितो राज्यसञ्चालनं चकार[2]।

उर्वशीगर्भात् पुरूरवस इन्द्रतुल्यपराक्रमाः षट् पुत्रा अभूवन्[3]।

---

१. वैदिक एज्, पुराणपत्रिका वर्ष १९६२, सं० १, पृ० २२-२३।

२. सोमस्य तु बुधः पुत्रो बुधस्य तु पुरूरवाः।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः॥
राज्यं स कारयामास प्रयागे पृथिवीपतिः।
उत्तरे यमुनातीरे प्रतिष्ठाने महायशाः॥ वायुपुराण ९२।१, ५०

३. गन्धर्वलोके विदिता आयुर्धीमानमावसुः।
विश्वायुश्च श्रुतायुश्च शतायुश्चार्वशीसुताः॥ वायुपुराणे ९१।५१

येपु ज्येष्ठ आयुः प्रतिष्ठानपुरस्य राजा बभूव। द्वितीयेन अमावसुना पश्चिमे एकं राज्यं स्थापितं यस्य नामाग्रे कान्यकुब्जो जातः। अमावसुवंशपरम्परायां सुहोत्रपुत्रो जह्नुनामको राजा बभूव, येन स्वयज्ञशालां गङ्गाजलेनाप्लावितां दृष्ट्वा गङ्गा चुलके कृत्वा पीता।[१]

अनन्तरं महर्षिभिः सा अस्य पुत्रीभावेन प्राप्ता। एतत्परम्परायां गाधिरुत्पन्नो यः कौशिकः कथितः। गाधेः कन्यायाः सत्यवत्याः विवाहः ऋचीकेन मुनिना सह जातः। ऋचीकपत्नी सत्यवती तथा तन्माता च पौरकुत्सा पुत्रार्थं तं प्रार्थितवत्यौ। तदनुसारम् ऋचीकेन पत्न्यर्थं ब्रह्ममन्त्रेण श्वश्र्वै च क्षात्रमन्त्रेणाभिमन्त्रित चरुं पाचयित्वा पृथक् पृथक् पात्रके निधाय सत्यवती प्रोक्ता, यदयं चरुस्तवास्ति, अयञ्च तव मात्रेऽस्ति। अनयोः युवाभ्यां यथोचित उपयोगो विधेयः। एवमुक्त्वा स स्नातुं गतः। तदनन्तरं पुत्रीचरुमधिकमुत्तमं मत्वा ततो याचयित्वा मात्रा भक्षितः, तथा पुत्र्या मातुश्चरुर्भक्षितः। स्नात्वाऽगत्य यदा ऋषिणैतज्ज्ञातं तदा तेन सत्यवती कथिता, न त्वया साधु कृतम्। तव तनयः क्षत्रियभावापन्नः महाहुग्रो भविष्यति, तथा तव भ्राता ब्राह्मणभावी ब्रह्मज्ञानी भविष्यति।[२]

तदा सत्यवाती प्राह–नाथ! एतन्निवारणाय कश्चनोपायो विधेयः। तदर्षिणा प्रोक्तं यदिदमेव भवितुमर्हति, यत् तव पौत्रः क्रूरो भविष्यति। तदनन्तरं सत्यवती गर्भाद् जमदग्निरुत्पन्नस्तथा तन्मातुर्गर्भाद् विश्वामित्रो जातः। जमदग्निना इक्ष्वाकुकुलोद्भवस्य रेणोः कन्यया रेणुकया सह स्वविवाहः कृतः। यतो नारायणांशः परशुरामो जातः, येन सहस्रार्जुनं निहत्य हैहयकुलं विनाश्य एकविंशतिवार पृथ्वी क्षत्रियहीना कृता।[३]

एतत्सर्वं निशम्य पित्रा प्रोक्तम्–पुत्र! त्वया न सम्यक् कृतम्। वयं स्मः तपस्विनो ब्राह्मणाः। क्षमैवास्माकं धनमस्ति। क्षमया तपसा च वयं जगत्पूज्या जाताः। अतस्त्व क्षमस्व तपश्चर्याञ्च कुरुष्व। तदनुसारं तीर्थयात्रां कुर्वन् स महेन्द्रे पर्वते तपश्चचार।[४]

---

१. तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत्। श्री. भा. ९।१५।३

२. तद् विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः।
घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः॥ श्री. भा. ९।१५।१०

३. यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम्।
त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम्॥ श्री. भा. ९।१५।१४

४. त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे॥ म. भा. शा. प. ६४।४

गाधेर्महातेजस्विना पुत्रेण विश्वामित्रेण कठोरं तपस्तप्त्वा वसिष्ठस्यानुग्रहाद् ब्रह्मर्षित्वमवाप्तम्। यस्यौरसा शतपुत्रा अभवन्, तेषु मध्यमस्य नाम मधुच्छन्द इत्यासीदतस्ते सर्वे मधुच्छन्दनाम्ना प्रख्याताः। विश्वामित्रेण भृगुवंशोद्भवः शुनःशेपनामको बालकः पुत्रत्वेनाङ्गीकृतो यो राज्ञो हरिश्चन्द्रस्य नरमेधबलये पित्रा अजीगर्तेन विक्रीत आसीत्। विश्वामित्रस्य कृपयैव पशुभावं प्राप्तेन तेन स्तुतैः देवैस्तस्मै प्राणदानं दत्तमतस्तस्य नाम देवरातोऽपि जातः। तदनन्तरं विश्वामित्रेणात्मतनया प्रोक्ताः, यद् यूयमेनं देवरातं भ्रातरं स्वीकुरुत, किन्तु तेषु ज्येष्ठा पञ्चाशदेतन्न स्वीकृतवन्तः, तदा ते पित्रा म्लेच्छत्वाय शप्ताः। अवशिष्टाश्च कनीयांसः स्वीकृतवन्तोऽतस्तेभ्य आशीर्वादो दत्तः।

पुरूरवसः प्रथमपुत्रस्यायोरपि पञ्च पुत्रा बभूवुः—नहुषः, वृद्धबलः, रजिः, रम्भकः, अनेनाश्च। तेषु नहुषो महाप्रतापी धार्मिकश्च राजा बभूव। इन्द्रपदप्राप्तये तेन शतमश्वमेधाख्या यज्ञा अनुष्ठिताः। वृत्रासुरस्य वधानन्तरं यदेन्द्रो ब्रह्महत्याभयाद् मानसरोवरे सरसि प्रच्छन्नो भूत्वा स्थितः, तदा नहुषः स्वर्गस्य पालनं कृतवान्। एकदा दुर्बुद्धयायमिन्द्राणीं शचीं पत्नीत्वेनोपगन्तुकामनया सप्तर्षिद्वारा समुह्यमानां शिबिकामारुह्य गच्छन् मार्गे त्वरया सर्पत सर्पत ( शीघ्रं गच्छत, शीघ्रं गच्छत ) ऋषीनुवाच। तदा क्रुद्धेनागस्त्यमुनिना शापो दत्तो यत्त्वं स्वर्गाच्च्युतः सर्पयोनौ गच्छ। तदनुसारं स तत्काले स्वर्गाच्च्युतोऽजगरसर्पयोनौ जगाम। आयोर्द्वितीयेन पुत्रेण वृद्धक्षत्रेण काश्यां स्वं राज्यं स्थापितम्। तस्य पुत्रः सुहोत्रो जातो यस्य त्रयस्तनया अभूवन्—(१) गृत्समदः (२) शलः (३) काशश्च। तत्र गृत्समदस्य शुनकस्तस्य च शौनको बभूव। शलस्यार्ष्टिषेणो जातः। शौनका आर्ष्टिषेणश्च स्वैः विचित्रैः कर्मभिः ब्राह्मणत्वमुपगताः[1] काशस्य दीर्घतमाः, तस्य धन्वन्तरिः।[2] तस्य केतुमान् केतुमतो भीमरथः, तस्य राजा दिवोदासः[3] तस्य प्रतर्दनः। ततोऽग्रे ऋतध्वजस्य ( कुवलयाश्वस्य ) पुत्रोऽलर्कोऽभवत्। तन्मातुर्नाम मदालसासीत्। साति विदुषी महायोगिनी चासीत्। तयाऽऽत्मनः त्रयः पुत्रा निवृत्तिमार्गोपदेशं प्रदाय विरक्तीकृताः। पत्युराग्रहाच्चतुर्थमलर्कं प्रवृत्तिधर्मोपदेशद्वारा गार्हस्थ्ये नियोज्य विविधं नीतिमार्गञ्चोपदिश्य

---

१. शौनका आर्ष्टिषेणश्च क्षत्रोपेता द्विजातयः। वा० पु० ९२।६

२. तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा।
काशीराजो महाराजः सर्वरोगप्रणाशनः॥ वा० पु० ९२।२१

३. दिवोदास इति ख्यातो वाराणस्यधिपोऽभवत्। वा० पु० ९२।२३

सा पत्या सह तपसे वन जगाम। अलर्को हि लोपामुद्राकृपया परमायुष्ट्वमवाप्तवानासीत्[1]।

आयोस्तृतीयस्य पुत्रस्य रजेः पञ्चशतपुत्रा आसन्। एकदा देवासुरसंग्रामप्रसङ्गे देवासुरैरावयोर्युद्धे को विजेता भविष्यतीति पृष्टो ब्रह्मदेवोऽवोचत्।[2]

एतदनुसारं रजिं स्वस्वपक्षे समानेतुमुभाभ्यामपि प्रयासो विहितः, किन्तु रजिना प्रोक्तं यद् यः पक्षो मामिन्द्रं स्वीकरिष्यति तमेवाहं ग्रहीष्यामि। ततो बलेरन्यमिन्द्रं विधातुमऽसुरैरस्वीकृते शक्रेण प्रार्थितोऽतुलविक्रमो रजिः तत्पक्षं गृहीत्वा आत्तायुधो देवसेनया सह युध्यमानोऽशेषमसुरबलं निषूदितवान्। तत इन्द्रः पुनर्दैत्यभयात् पूर्वप्रतिज्ञानुसारं रजिमेवेन्द्रं चकार। तत्कालात् स स्व पुत्रैः सह स्वर्गलोकं शशास। गतजीविते रजौ देवगणेनाभ्यर्थिता अपि बलिनो रजिपुत्रा यदेन्द्राय स्वर्ग न ददुस्तदा देवगुरुणा मारणप्रयोगेण ते कथाशेषं नीताः। तत्र नैकोऽप्यवशिष्टः।

आयोपुत्रश्चतुर्थो रम्भोऽनपत्यो जातः, पञ्चमस्यानेनसः पुत्रो बभूव शुद्धनामा।

राज्ञो नहुषस्य यति-ययाति-संयाति-आयति-वियति-कृतयः षट् पुत्रा आसन्।[3] एषु ज्येष्ठो यतिः, पित्रा दत्तमपि राज्यमस्वीकृत्य विरक्तो जातः।

ततो जनके नहुषे स्वर्गात् पतित्वा सर्पयोनिमुपगते महाप्रतापी ययाती राजा भूत्वा चतुरोऽनुजान् चतसृषु दिक्षु प्रजापालने नियोज्य शुक्राचार्यवृषपर्वणोः पुत्रीभ्यां सार्द्धं पाणिग्रहणं कृत्वा पृथ्वीं पालयामास।[4]

---

१. युवा रूपेण सम्पन्नो ह्यलर्कः काशिसत्तमः।
लोपामुद्राप्रसादेन परमायुरवाप्तवान्॥ वा. पु. ९२।६७

२. येषामर्थाय सङ्ग्रामे रजिरात्तायुधः प्रभुः।
योत्स्यते ते विजिष्यन्ति त्रींल्लोकान्नात्र संशयः॥
रजिर्यतस्ततो लक्ष्मीर्यतो लक्ष्मीस्ततो धृतिः।
यतो धृतिस्ततो धर्मो यतो धर्मस्ततो जयः॥ वा. पु. ९२।७८-७९

३. यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः।
षडिमे नहुषस्यासन्निन्द्रियाणीव देहिनः॥ श्री. भा. ९।१८।१

४. पितरि भ्रंशिते स्वर्गादिन्द्राणीधर्षणाद् द्विजैः।
प्रापितेऽजगरत्वं वै ययातिरभवन् नृपः॥
चतसृष्वादिशद्दिक्षु भ्रातॄन् भ्राता यवीयसः।
कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः॥ श्री. भा. ९।१८।३-४

## ययातेः पूर्ववंशपरम्परा

| पद्मपुराणे (सृ.खं. १२-१३) | मत्स्यपुरा (२३-४०) | अग्निपुराणे (२७४-२७८) | वायुपुराणे (६१-६६) | कूर्मपुराणे (२२-२४) |
|---|---|---|---|---|
| ब्रह्मा | ब्रह्मा | ब्रह्मा | ब्रह्मा | ब्रह्मा |
| मरीचिः अत्रिः | मरीचिः | मरीचिः | मरीचिः | मरीचिः |
| कश्यपः | कश्यपः | कश्यपः | कश्यपः | कश्यपः |
| विवस्वान् चन्द्रः | विवस्वान् | विवस्वान् | विवस्वान् | विवस्वान् |
| वैवस्वतः | वैवस्वतः | वैवस्वतः | वैवस्वतः | वैवस्वतः |
| इला बुधः (बुधादिलायाम्) | इला | इला | इला | इला |
| पुरूरवाः | पुरूरवाः | पुरूरवाः | पुरूरवाः | पुरूरवाः |
| आयुः | आयुः | आयुः | आयुः | आयुः |
| नहुषः | नहुषः | नहुषः | नहुषः | नहुषः |
| ययातिः | ययातिः | ययातिः | ययातिः | ययातिः |

राज्ञो ययातेर्द्वे भार्ये आस्ताम्, एका देवयानी ( शुक्राचार्यस्य पुत्री ) द्वितीया च शर्मिष्ठा ( वृषपर्वणः कन्या ) तत्र ययातितो देवयान्यां यदुः तुर्वसुश्चेति द्वौ पुत्रावास्ताम्, शर्मिष्ठायाञ्च—अनु-द्रुह्यु-पुरुनामानः त्रयः तनया अजायन्त[1] ।

नहुषपुत्रो ययातिः आज्ञाकारित्वात्, स्नेहभाजनात्, प्रजानां सम्मत्या च स्वं कनिष्ठं पुत्रं पुरुं प्रतिष्ठानपुरस्य राज्यसिंहासनेऽभिषिच्य द्रुह्युं पूर्वस्य, यदुं दक्षिणस्य, तुर्वसुं पश्चिमस्य, अनुञ्चोत्तरस्य प्रदेशस्य

१. यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा चाप्यजीजनत् ॥ कू. पु. २२।७

राजानमकरोत्। ते च पित्रा पञ्चधा विभज्य प्राप्तां सप्तद्वीपापृथ्वीं धर्मपूर्वकं पालयामासुः[१]।

राज्ञो ययातेः पञ्चभ्यः पुत्रेभ्यः पञ्चवंशाः प्रचलिताः। तत्र यदुवंशः पुरुवंशश्चातिप्रभावशालिनावभूताम्। अनयोर्महान्तः प्रतापिनः प्रभावशालिनश्च राजानोऽभूवन्, यैः भारतवर्षस्येतिहासे विशिष्टं गौरवं लब्धं, महती प्रतिष्ठा च प्राप्ता।

ययातिविषयिकेयं गाथा पुराणेषु महाभारते च परमा प्रसिद्धास्ति[२]।

पुरोर्यौवनं गृहीत्वाऽपि विषयेभ्योऽतृप्तो ययातिर्विरक्तो भूत्वा प्रसन्नतया तद्यौवनं परावर्त्य प्रियं पुत्रं पुरुं राज्यसिंहासने प्रतिष्ठाप्य तपसे वनं जगाम[३]।

विपिने इन्द्रियसंयमपूर्वकं नियमं पालयन् स पञ्चत्वं प्राप्य स्वर्गं गतः।

स्वर्गे सुखपूर्वकं निवसन् स एकदा–वत्स, ययाते! तपसा केन तुल्योऽसीति शक्रेण पृष्टः प्रोक्तवान्।[४]

राजन्! तवोक्त्याऽनया महतामपमानात्ते पुण्यं क्षीणमतःपरं त्वं न स्वर्गे स्थातुं शक्नोसीत्युक्त्वा महेन्द्रस्तं स्वर्गादपातयत्। स्वर्गात् पततस्तस्यान्तरीक्षे स्वात्मनो दौहित्रेण माधवीतनयेनाष्टकेन, उशीनरपुत्रेण नृपेण शिबिना, काशिराजेन प्रतर्दनेन, ऐक्ष्वाकवेन वसुमनसा च सह साक्षात्कारे जाते बहुविधप्रश्नोत्तरानन्तरं स तैः सह यज्ञान्तेऽवभृथस्नानं कृत्वा पुनः स्वर्गमगच्छत्[५]।

---

१. सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम्।
व्यभजत् पञ्चधा राजा पुत्रेभ्यो नाहुषस्तदा॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना।
यथाप्रदेशं धर्मज्ञैर्धर्मेण प्रतिपालिता। वा. पु. ९३।९०-९१।

२. न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥
यत् पृथिव्या व्रीहियवं हिरण्यं पशवः स्त्रियः।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत्॥ वा. पु. ९५।१२,१३

३. एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम्।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः॥ म. भा. आ. प. ८६।१

४. नाहं देवमनुष्येषु गन्धर्वेषु महर्षिषु।
आत्मनस्तपसा तुल्यं कञ्चित् पश्यामि वासव!॥ म. भा. आ. प. ८८।२

५. अष्टकश्च शिबिश्चैव काशिराजः प्रतर्दनः।
ऐक्ष्वाकवो वसुमनाश्चत्वारो भूमिपाश्च ह॥
सर्वेऽवभृथस्नाताः स्वर्गताः सह साधवः। म. भा. आ. प. ९३।१७

यदोरपि पञ्च पुत्रा आसन्–१. सहस्रजित्, २. क्रोष्टा, ३. नीलः, ४. अञ्जिकः, ५. रघुश्च[1]। तेषु द्वौ वंशकर्त्तारौ जातौ, याभ्यां वंशद्वयं प्रचलितम्, एकः सहस्रजिद्वंशो द्वितीयश्च क्रोष्टुवंशः। तत्र प्रथमाद् यदुपुत्रात् सहस्रजित आरभ्य दुर्जयपर्यन्तं सहस्रजिद्वंशः तथा द्वितीयाच्च क्रोष्टुरारभ्य सात्वतपर्यन्तं क्रोष्टुवंशः प्रसिद्धो वर्तते।

तत्र हि यदोः सहस्रजिन्नामधेयात्पुत्रात् प्रचलिते वंशे हैहयवंशस्य प्रादुर्भावो जातः, क्रोष्टुश्च यादववंशस्योत्पत्तिर्बभूव। एवं पुनरग्रे यादव-*वंशीयसात्वतनृपतेरन्धकवंशो वृष्णिवंशश्चेति द्वौ वंशौ प्रचलितौ।*

सहस्रजिद्वंशे हैहयतालजंघावन्तर्भवत। हैहयेषु कृतवीर्यस्य पुत्रः कार्तवीर्यो महान् प्रतापी राजा बभूव। यो हि हैहयानां क्षीणशक्तिं पुनरुज्जीवितवान्। कार्तवीर्यविषयिका अनेका गाथाः पुराणेषु श्रूयन्ते। यासु तस्यातुलस्य प्रभावस्य, अलौकिकाया योगशक्तेः, प्रजापालनतत्परतायाश्च परिचयः प्राप्यते। तस्य नामस्मरणमात्रेण नष्टं वस्तूपलभ्यते स्म।

सहस्रार्जुनस्य नाम परमं प्रसिद्धमस्ति। एकदा नर्मदायां स्वदारैर्जल-क्रीडां कुर्वतस्तस्य लङ्काधिपतिना रावणेन जलावरोधः कृतस्तेन रुष्टेन सहस्रार्जुनेन स स्वकीये कारागारे निबद्धः[2]। किन्तु तस्य पितामहेन पुलस्त्येन प्रार्थितोऽसौ सहस्रार्जुनस्तं रावणं स्वकारागारान्मुमोच[3]।

नर्मदाया उद्गमस्थानाद् आरभ्योत्तरपूर्वयोर्हिमालयपर्यन्तमस्य राज्यमासीत्। कान्यकुब्जराज्यं, कोशलराज्यं, काशीराज्यञ्च विजित्याऽसौ स्वराज्यस्य विस्तारञ्चकारेति पार्जिटरमतम्[4]।

सात्वतनृपतेः पञ्चमपुत्रस्य सहस्रजिद्वंशे सहस्रार्जुनपुत्रो जयध्वजो राजा बभूव तस्य पुत्रस्तालजंघ आसीद्। यस्य वंशजास्तालजंघनाम्ना प्रसिद्धा बभूवुः। वस्तुतो हैहयवंशक्रमानुसारेण तालजंघ षोडशसंख्या-पूर्तिङ्करोति। अतएव तालजंघो हैहयवंशस्यैवान्तर्गतोऽस्ति।

---

१. यदोः पुत्रा बभूवुर्हि पञ्च देवसुतोपमाः।
सहस्रजित्तथा ज्येष्ठः क्रोष्टा नीलोऽजितो रघुः॥ म. पु. ४३।६

२. लङ्कायां मोहयित्वा तु सबलं रावणं बलात्।
निर्जित्य बद्ध्वा चानीय माहिष्मत्यां बबन्ध तम्॥

३. ततो गत्वा पुलस्त्यस्तु अर्जुनं च प्रसादयन्।
मुमोच रक्षः पौलस्त्यं पुलस्त्येनानुयाचितम्॥ वा. पु. ९४।३५,३६

४. पार्जिटर्स एंशियण्ट इण्डियन हिस्टोरिकल ट्रेडीशन पृ १५२-१५३

### यदुवंशे सहस्रजिद् वंशपरम्परा

| | | | |
|---|---|---|---|
| १. यदुः | ६. कुम्भिः | ११. कनकः | १६. तालजंघः |
| २. सहस्रजित् | ७. संहतः | १२. कृतवीर्यः | १७. वीतिहोत्रः |
| ३. शतजित् | ८. महिमा | १३. अर्जुनः | १८. अनन्तः |
| ४. हैहयः | ९. भद्रसेनः | १४. सहस्रार्जुनः | १९. दुर्जयः |
| ५. धर्मनेत्रः | १०. दुर्दशः | १५. जयध्वजः | |

### क्रोष्टुवंशः

यदोर्द्वितीयः पुत्रः क्रोष्टाऽऽसीत्, तस्य वंशे चित्ररथस्य पुत्रः शशबिन्दुश्चक्रवर्ती राजाऽऽसीत्। शशबिन्दोः कन्या चैत्ररथी सूर्यवंशीयस्य राज्ञो मान्धातुर्भार्याऽसीत्।

अस्मिन् वंशे ज्यामघस्य पुत्रो विदर्भो जातः, तेन विदर्भराज्यं स्थापितम्, यद्धि सम्प्रत्यपि प्रख्यातमस्ति। विदर्भस्य पौत्रश्चेदिराजासीत्ततो राजा चेद्यो बभूव। ज्यामघादारभ्य सात्वतपर्यन्तो ज्यामघस्यापि वंशोऽभिधीयते।

### यदुवंशे क्रोष्टुवंशपरम्परा

| | | | |
|---|---|---|---|
| १. यदुः | ११. शिनेयुः | २१. पृष्ठः | ३१. शकुनिः |
| २. क्रोष्टा | १२. तितिक्षुः | २२. निर्वृतिः | ३२. करम्भः |
| ३. वृजिनीवान् | १३. मसतः | २३. विदुरथः | ३३. देवरातः |
| ४. स्वातिः | १४. कम्बलबर्हिषः | २४. दाशार्हः | ३४. मधुः |
| ५. कुशङ्कुः | १५. रुक्मकवचः | २५. भीमः | ३५. पुरुवंशः |
| ६. चित्ररथः | १६. ज्यामघः | २६. जीमूतः | ३६. पुरुषः |
| ७. शशबिन्दुः | १७. विदर्भः | २७ विकलः | ३७. जन्तुः |
| ८. पृथुश्रवाः | १८ क्रथः | २८ भीमरथः | ३८. सत्वन् |
| ९. सुयज्ञः | १९. कुन्तिः | २९. नवरथः | ३९. सात्वतः |
| १०. उशनाः | २०. धृष्टः | ३०. दृढरथः | |

सात्वतनृपतेः पश्चात्क्रोष्टुवंशस्यातीवविस्तारो बभूव। सात्वतभूपतेः पञ्च पुत्रा आसन् –(क) भजिनः (ख) देववृधः (ग) अन्धकः (घ) महाभोजः (ङ) वृष्णिश्चेति। तत्रान्धकस्य द्वौ पुत्रौ बभूवतुः—(क) कुकुरः (ख) भजमानश्चेति। अनयोर्द्वौ भिन्नौ वंशौ बभूवतुः। कुकुरवंशे कंस उग्रसेनस्य पुत्र आसीत्। कंसपितृव्यस्य देवकस्य कन्या देवकी जाता, असौ वृष्णिवंशे वसुदेवस्य भार्याऽऽसीत्। भजमानवंशे भोजो महान् यशस्करो राजा बभूव।

अन्धकशाखा
(क)

सात्वतः
|
अन्धकः
|

| | |
|---|---|
| कुकुरः | भजमानः |
| वृष्टिः | विदुरथः |
| धृतिः | राजाधिदेवः |
| कपोतरोमा | देवशूरः |
| तैत्तिरिः | शोणाश्वः |
| नलः | शमी |
| चन्द्रनोदकः | प्रतिक्षत्रः |
| दुन्दुभिः | भोजः |
| अभिजित् | हृदिकः |
| पुनर्वसुः | देवार्हः |
| आहुकः | कृतवर्मा, शतधन्वादिः |
| उग्रसेनः[1] | कम्बलबर्हिषः |
| कंसः | असमौजाः[2] |

वृष्णेर्हि भार्याद्वयमासीत्—गान्धारी,माद्री च। तत्र गान्धारीपुत्रः सुमित्रो बभूव। माद्रीपुत्राश्च—युधाजित् देवमीढुषोऽनमित्रः शिनिश्चेति चत्वारोऽभवन्[3]। तेष्वनमित्रस्य वंशे प्रसेनः स्यमन्तकमणिप्रभावात्प्रसिद्धो राजा बभूव[4]।

---

१. उग्रसेनः सहापत्यो व्याख्यातः कुकुरोद्भवः। प. पु. सृ. खं. १३।६

२. अन्धकानामिमं वंशं यः कीर्तयति नित्यशः।
आत्मनो विपुलं वंशं प्राज्यं प्राप्नोत्यसंशयम्॥ प.पु. सृ. खं. १३।६,६६

३. गान्धारी चैव माद्री च वृष्णेर्भार्ये बभूवतुः।
गान्धारी जनयामास सुमित्रं मित्रवर्द्धनम्॥
माद्री युधाजितं पुत्रं ततो वै देवमीढुषम्।
अनमित्रं शिनिं चैव पञ्चमं कृतलक्षणम्॥ म. पु. ४५।१-२

४. स्यमन्तकं प्रसेनस्य मणिरत्नमनुत्तमम्।
पृथिव्या मणिरत्नानां राजेति समुदाहृतम्॥ तत्रैव १२।७३

सात्वतः
|
वृष्णिशाखा (ख) — वृष्णिः

| | | | |
|---|---|---|---|
| अनमित्रः | युधाजित् | देवमीढुषः | शिनिः |
| निघ्नः | पृश्निः | शूरः | सात्यकः |
| प्रसेनः | श्वाफल्कः | वसुदेवः | सात्यकिः |
| सत्राजित् | — | श्रीकृष्णः | युयुधानः |
| (शक्तिसेनः) | अक्रूरः | प्रद्युम्नः | भूतिः |
| भङ्गकारः | देववान् | अनिरुद्धः | युगन्धरः |

यथाऽन्धकशाखायामुग्रसेनस्य गृहे कंसस्य जन्म जातम्, तथा वृष्णि-शाखायामानकदुन्दुभेर्वसुदेवस्य भार्यायां देवक्यां भगवतः श्रीकृष्णस्य जनिर्बभूव। तदित्थं सोमवंशे यदुवंशस्य विशिष्टं महत्त्वं विस्तारश्च विद्यते। वंशोऽयं पाठकानां सौविध्याय चतुर्षु भागेषु विभक्तुं शक्यते।

(१) यदोः प्रथमपुत्रात् सहस्रजित आरभ्य दुर्जयपर्यन्तम्।
(२) यदोर्द्वितीयपुत्रात् क्रोष्टुनामधेयात् सात्वतपर्यन्तम्।
(३) सात्वतपुत्रादन्धकादारभ्य कंसपर्यन्तमसमौजः पर्यन्तञ्च।
(४) सात्वतपुत्राद् वृष्णेरारभ्य श्रीकृष्णपौत्रोऽनिरुद्धः।

अग्रे यदुवंशस्य महान् विस्तारो जात आसीद्, यस्य विवरण तत्तत्पुराणेष्वेव द्रष्टव्यम्। विस्तरभयादिहैव विरम्यते।

### पुरुवंशः

यदोः कनीयसः पुत्रस्य पुरोर्वंशे रैभ्यस्य पुत्रो दुष्यन्तो महाप्रतापी प्रजापालको वदान्यश्च राजा बभूव। ततो महर्षिकण्वद्वारा पालितायां शकुन्तैर्लालितायां मेनकाप्सरसि विश्वामित्रात् समुत्पन्नायां शकुन्तलायां दुष्यन्ताद् भरत उत्पन्नो यो महाशूरो धार्मिकः प्रतापी चक्रवर्ती राजाऽजायत। महाभारतानुसारमयं बाल्यावस्थायामेव कण्वाश्रमस्य समीपे भ्रमतः सिंह-व्याघ्र-गज-महिष-वराहादीन् बलादाकृष्य वृक्षेषु बध्वा तैः सह क्रीडतिस्म। एवं समस्तजीवानां दमनादस्य नाम महर्षिभिः सर्वदमन इति प्रख्यापितः।[1]

---

१. अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ।
स सर्वदमनो नाम कुमारः समपद्यत॥ म. भा. आ. प. ८४।८

अनन्तरं दुष्यन्तसमीपे उपस्थितयोः शकुन्तला-सर्वदमनयोर्विषये दुर्वाससः शापकारणाद् विस्मयमानं दुष्यन्तं सम्बोधयन्ती व्योमवाणी तयोः परिचयं प्रदाय प्राह।[1]

ततो जातस्मृतिर्दुष्यन्तः प्रेम्णा तौ समादृत्य कुमारं सर्वदमनं भरतमिति[2] नाम्ना प्रख्याप्य तं यौवराज्यपदेऽभिषिक्तवान्।[3]

अनेन साम्राज्यमवाप्य धर्मतः प्रजाः पालयता समये समये ५५ गङ्गातटे, ७८ यमुनातटे च संकलनया १३३ अश्वमेधा यज्ञा अनुष्ठिताः। तत्र प्रतिब्राह्मणं १३८४ गावः प्रदत्ताः। तथा स्वदिग्विजये हूण-आन्ध्र-शक-यवन-कंक-खशादीन् विजित्यात्मनः कीर्तिः प्रसारिता। वायुपुराणानुसारमस्य देशस्य नाम भारतमिति अस्य दौष्यन्तेर्भरतस्य नाम्ना प्रसिद्धम्[4]।

मत्स्यपुराणानुसारे तु दुष्यन्तात् शकुन्तलायामुत्पन्नस्य पुत्रस्य भरतस्य नाम्ना अनया प्रजा भारता, भारतीवेत्युच्यते।[5]

भरतस्य वंशपरम्परायां रन्तिदेवो नाम राजा बभूव, यो धार्मिकः परोपकारी दानी च राजाऽऽसीत्। दीन-हीन-आर्तजनानां सेवाकरणमस्य जीवनस्य प्रमुखं व्रतमासीत्। एकदा तस्य भोजनं विना ४८ दिनानि व्यतीयुः ४९ दिने यदा भोक्तुमुद्यत आसीत्तदा ब्राह्मणोऽतिथिरागतो येन भोजनं याचितम्। अनेन भोजनस्य स्वकीयो भागस्तस्मै दत्तः। पुनः स्वपत्नीभागं भोक्तुमुपविष्टस्तदैकः शूद्र उपस्थितः तं भगवन्तं मत्वा तस्मै तदपि भोजनं दत्तवान्। ततः केवलं पुत्रस्य भागोऽवशिष्ट आसीत्। यदा तदपि विभज्य भोक्तुमुपविष्टस्तदा श्वभिः सहित एकोऽपरोऽ-

१. भस्त्रा माता पितुः पुत्रो येन जातः स एव हि।
भरस्व पुत्रं दुष्यन्त ! मावमंस्थाः शकुन्तलाम्॥

२. भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि।
तस्माद् भवत्वयं नाम्ना भरतो नाम ते सुतः॥

३. दुष्यन्तस्तु तदा राजा पुत्रं शाकुन्तलं तदा।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत्॥
म० भा० आ० प० ७४।२१०,११४,१२६।

४. चक्रवर्ती ततो यज्ञे दौष्यन्तिर्नृप सत्तम।
शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्॥ वा. पु. ९९।१३३

५. शकुन्तलायां भरतो यस्य नाम्ना च भारता। म. पु. ४९।११

तिथिरुपस्थित । ततो राज्ञा महता समादरेण सर्वं भोजन तस्मै समर्पितम् । तत केवल किञ्चिज्जलमवशिष्टमासीत्, यदा तत् पातु विचारयन्नासीत्तदा एकोऽतिपिपासितश्चाण्डाल उपस्थायोक्तवान्-राजन् । अहमतिपिपासितोऽस्मि मम प्राणा नि सर्तुमुद्यता सन्ति । अतो मह्यमेतज्जल देहि । तस्य तद् दीन वचन निशम्य मरणासन्नो राजा रन्तिदेव तज्जलमपि तस्मै दत्तवान् । ततस्तद्दानशीलता धैर्य च विलोक्य प्रसन्नः साक्षान्नारायणोऽस्मै सपरिवाराय दिव्य लोक दत्तवान् । एवं प्रकाराया राज्ञो रन्तिदेवस्य गौरवगाथाया पुराणेषु महाभारते च पर्याप्तं वर्णनं विलोक्यते ।

एतदनन्तरमस्य वशे प्रतापी राजा वृहद्बलस्य पुत्रो हस्ती जातो येनात्मनो नाम्ना हस्तिनापुर निर्मितम् । यत् मेरठमण्डले गङ्गातटे वर्तमानमस्ति । हस्तिन पुत्रस्याजमीढस्य परम्पराया मुद्गलसज्ञक ब्राह्मणकुल सञ्जातम् । मुद्गलतो युगलसन्ततिर्जाता यत्र पुरुषस्य नाम दिवोदास कन्याया नाम अहल्या जातम् । गौतमादहल्याया शतानन्दो जात । तत्पुत्र शतधृतिस्तत्पुत्रश्च शरद्वानभूत् । उर्वश्या अप्सरसो दर्शनेन शरद्वतो वीर्यं तणपुञ्जे पतित यत कृपाचार्यस्य कृप्याश्च जन्म जातम् । वन गतेन राज्ञा शन्तुना एनौ ततो नीत्वाऽनयो पालन पोषणं च कृतम् । कृप्या विवाहो द्रोणाचार्येण सह जातो यतो, महाबलिष्ठो वीरः अश्वत्थामाऽजायत, यो दीर्घजीविषु गण्यते । दिवोदासस्य वशपरम्पराया पृषद पुत्रो द्रुपदो जात, यस्य यज्ञवेदीतो द्रौपदी नाम्नी कन्या समुत्पन्ना धृष्टद्युम्ननामक पुत्रश्चाजायत । धृष्टद्युम्नस्य पुत्रोऽभवत् धृष्टकेतुः । एषा राज्ञा सज्ञा पाञ्चाल इति जाता ।

हस्तिनः प्रपौत्रस्य सवरणस्य विवाह सूर्यकन्यया तपत्या सह जात । तस्या गर्भत कुरो जन्मजातम् । येन कुरुक्षेत्र प्रदेश कृषियोग्य कृतम् । कुरुक्षेत्र हि यज्ञाना विशेषताभि धर्मक्षेत्रनाम्ना प्रसिद्धम् । अस्यैव वशे राजा वृहद्रथो जातो यस्य राज्यो गर्भत एकस्यैव शरीरस्य खण्डद्वयमुत्पन्नम् । राज्ञीभ्या तद् व्यर्थं ज्ञात्वा वहि चिक्षेपतु दैवाज् जरानाम्नी राक्षसी तेन मार्गेण गच्छन्ती तद् दृष्ट्वा खण्डद्वय सयोज्य जीवजीवितुमुक्तवती । तत तद्द्वयमेको बालको बभूव । रोदितुमारब्धवान् । तच्छ्रुत्वा गत्वा राजा चागत्य प्रेम्णा तमुत्थाप्य परम मुमुदे । तथा तस्य नाम जरासन्ध इति कृतम् । जरासन्धो महाबलिष्ठो राजा जात । तस्य पुत्र सहदेव आसीत् ।

पौरववंशपरम्परा

| नृपनाम | पत्नीनाम | पत्नीपरिचयः |
|---|---|---|
| १—पुरुः | कौशल्या | कोशल राजकुमारी |
| २—जनमेजयः | अनन्ता | मधुवंशस्य कन्या |
| ३—प्राचिन्वात् | अश्मकी | यदुकुलकन्या |
| ४—संयातिः | वराङ्गी | दृपद्वतो दुहिता |
| ५—अहंयातिः | भानुमती | कृतवीर्यकुमारी |
| ६—सार्वभौमः | सुनन्दा | केकयराजकुमारी |
| ७—जयत्सेनः | सुश्रवाः | विदर्भराजकुमारी |
| ८—अवाचीनः | मर्यादा | विदर्भराजकुमारी |
| ९—अरिहः | सुशीला | अङ्गराजकुमारी |
| १०—महाभौमः | सुयज्ञा | प्रसेनजित्पुत्री |
| ११—अयुतनायी | कामा | पृथुश्रवसः कन्या |
| १२—अक्रोधनः | करम्भा | कलिङ्गदेश राजकुमारी |
| १३—देवातिथिः | मर्यादा | विदेहराजतनया |
| १४—अरिहः | सुदेवा | अङ्गराजतनया |
| १५—ऋक्षः | ज्वाला | तक्षककुमारी |
| १६—मतिनारः | सरस्वती | सरस्वती नदी |
| १७—तंसुः | सुवृत्ता | कलिङ्गराजकुमारी |
| १८—ईलिनः | रथन्तरी | उपदानवी |
| १९—दुष्यन्तः | शकुन्तला | विश्वामित्रपुत्री |
| २०—भरतः | सुनन्दा | काशीराजसर्वसेनपुत्री |
| २१—भुमन्युः | विजया | दशार्ह कन्या |
| २२—सुहोत्रः | सुवर्णा | इक्ष्वाकुकुलकन्या |
| २३—हस्तिः | यशोधरा | त्रिगर्तराजकुमारी |
| २४—विकुण्ठः | सुदेवा | दशार्हकुलकन्या |
| २५—अजमीढः | कैकेयी | कैकयकुलकन्यका |
| २६—संवरणः | तपती | सूर्यस्य दुहिता |
| २७—कुरुः | शुभाङ्गी | दशार्हकुलकन्या |

महाभारते दुष्यन्तस्य पितुर्नाम-ईलिनः[१], मत्स्यपुराणे इलिनः,[२] श्रीमद्भागवते रैभ्यः,[३] वायुपुराणे मलिनः[४], विष्णुपुराणे चैलिन[५] इति प्रोक्तं विद्यते।

कुरोः वंशपरम्परायां राज्ञः प्रतीपस्य पुत्र शान्तनुरुत्पन्नः, यो निजकराभ्यां यं यं वृद्धं स्पृशतिस्म स स तत्कालमेव युवा भूत्वा महतीं शान्ति सुखञ्चानुभवतिस्म। अत एव तस्य नाम शान्तनुरिति जातम्[६]।

महाभरते तु शान्तनुनामकरणस्य द्वितीयं कारणमप्युपन्यस्तं वर्तते, तदनुसारं शान्तनोः पितुः ( प्रतीपस्य ) शान्तत्वात् स शान्तनुः प्रोक्तः।[७]

शान्तनोर्भार्यायां गङ्गायां देवव्रत उत्पन्नः, यो हि धीवरस्य पोष्य-पुत्र्यां योजनगन्धायां कामासक्तमनसः पितुः प्रियार्थम्–'आजीवनमहं ब्रह्मचर्यव्रते स्थास्यामि' विवाहं न करिष्यामि। तव पुत्र्यामुत्पन्नः तनय एव राजा भविष्यतीति प्रतिज्ञया दाशराजमनुनीय सत्यवत्या सह शान्तनोविवाहङ्कारयामास[८]।

अनया भीषणप्रतिज्ञयैव तस्य नाम भीष्मोऽभवत्। भीष्मद्वारा कृतं

---

१. ईलिनस्तु रथन्तर्यां दुष्यन्ताद्यान् पञ्च पुत्रानजीजनत्।
म० भा० आ० प० ९५।२८

२. उपदानवी सुतान् लेभे चतुरस्त्वीलिनात्मजान्।
ऋष्यन्तमथ दुष्यन्तं प्रवीरमनघं तथा॥ म० पु० ४९।१०

३. पुत्रोऽभूत् सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः। श्री० भा० ९।२०।७

४. मसोः सुदयितं पुत्रं मलिनं ब्रह्मवादिनम्।
उपदातं ततो लेभे चतुरस्त्वीति सात्मजान्॥
सुष्मन्तमथ दुष्यन्तं प्रवीरमनघं तथा। वा० पु० ९९।१३२

५. तस्योरैलिनः, ततो दुष्यन्ताद्याश्चत्वारः पुत्रा बभूवुः॥ वि० पु० ४।१९।२

६. यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः।
शान्तिमाप्नोति चैवाग्र्या कर्मणा तेन शान्तनुः॥ श्री. भा. ९।२२।१३

७. शान्तस्य जज्ञे सन्तानस्तस्मादासीत् स शान्तनुः। म. भा. आ.प. ९७।१८

८. अद्य प्रभृति मे दाश! ब्रह्मचर्यं भविष्यति।
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि॥
परित्यक्ष्याम्यहं राज्यं मैथुनं चापि सर्वशः।
ऊर्ध्वरेता भविष्यामि दाश! सत्यं ब्रवीमि ते॥ म.भा.आ.प.१००।९६-९७

तद्दुष्करं कर्मश्रुत्वा परमं मन्तुष्टेन शान्तनुना भीष्माय स्वच्छन्दमृत्योर्वरदानं दत्तम्।[1]

अनन्तरं सत्यवत्या अपि गर्भात् चित्राङ्गदस्य विचित्रवीर्यस्य च जन्म जातम्। सत्यवत्याः कुमार्यावस्थायां पराशरमुनितो भगवतो व्यासस्य जन्म जातमासीत्। चित्राङ्गदः तन्नाम्ना गन्धर्वेण निहितः। विचित्रवीर्यस्य द्वाभ्यामम्बिकाम्बालिकानामिकाभ्यां काशिराजस्य कन्याभ्यां सह विवाहो जातः, ये भीष्मपितामहेन स्वयम्बरादपहृते आस्ताम्।

पत्न्योरत्यन्तमासक्ततया विचित्रवीर्यः राजयक्ष्मरोगतो ग्रस्तो दिवं गतः। तदनन्तरं सहोदरेण भ्रात्रा वेदव्यासेन वंशलोपभयभीताया मातुः सत्यवत्या आज्ञया नियोगद्वारा अम्बिकायां धृतराष्ट्रः, अम्बालिकाया च पाण्डुरुत्पादितौ। तथा दास्या तृतीयो धर्मात्मा विदुर समुत्पादितः, यो हि एकस्मात् पितुः कृष्णद्वैपायनाद् व्यासादुत्पन्नत्वाद् धृतराष्ट्रस्य पाण्डोश्च भ्राता प्रोच्यते[2]। धृतराष्ट्राद् गान्धार्यां, दुर्योधनदुःशासनादयः शतं भ्रातरो दुःशला चैका कन्या अजायन्त। पाण्डोः प्रथमपत्न्या कुन्त्या धर्मराज-वायु-इन्द्रांशैः क्रमशो-युधिष्ठिर-भीमार्जुना उत्पन्नास्तथाश्वनीकुमारयोरंशेन पाण्डोः द्वितीयभार्याया माद्रया नकुल-सहदेवावुत्पन्नौ। पाण्डोः पत्न्योरुत्पन्नत्वादिमे पञ्च पाण्डवाः प्रोच्यन्ते। कुन्त्याः कुमार्यावस्थाया सूर्यस्यांशेन कर्णस्योत्पत्तिर्जातास्ति, यस्य पालन राधया कृतमासीत्। अतः कर्णो राधेयोऽप्युच्यते।

पञ्चपाण्डवेभ्यो द्रौपद्या क्रमश प्रतिविन्ध्य-श्रुतसेन-श्रुतकीर्ति शतानीक-श्रुतकर्माण उत्पन्ना आसन्, ये भारतयुद्धान्ते बाल्यावस्थायामेव पितृवधक्रुद्धेनाश्वत्थाम्ना हताः। भीमाद्धिडिम्बाया घटोत्कचस्य, अर्जुनाद् मणिपुरनरेशस्य राजकुमार्यां चित्राङ्गदाया बभ्रुवाहनस्य, नागकन्याया-मुलूप्यामिरावतस्य, तथा श्रीकृष्णभगिन्या सुभद्रायामभिमन्योश्च जन्म जातमासीत्। अभिमन्योरुत्तरायां परीक्षिदुत्पन्नः, ततो इरावत्या जनमेजयस्य जन्म जातम्। जनमेजयस्य पुनः शतानीको जातः। अग्रेऽयं वंशः क्षेमकपर्यन्तं गत्वा नष्टोऽभवत्[3]।

---

१. तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शान्तनुः।
स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने॥ म. भा. आ. प. १००।१०२

२. यो जज्ञे विदुरो नाम कृष्णद्वैपायनात्मजः।
धृतराष्ट्रस्य वै भ्राता पाण्डोश्चैव महात्मनः॥ म.भा.आ.प. १०५।२८

३. क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ। श्री. भा. ९।२२।४५

## कुरुकुलम्




एवं पुरुवंशान्तर्गतमेवास्ति कुरुकुलमपि। कुरुतो महाभारत-युद्धपर्यन्तवर्तिनां कौरवाणां परम्परा तासां तासां घटनानां ज्ञानमोनम्या-यास्ति महदुपादेया उपयोगिनी परमावश्यिका चेति मत्वा मातृ-मातृकुल-

परिचयपूर्वकं कुरुकुलमिहोपन्यस्तम् । सत्स्वपि अनेकेषु कौरवेषु येषां वंशः प्रचलितस्तेषामेवात्र नाम प्रस्तुतमस्ति न समेषामपि । महाभारते पुराणेषु चैषां नामक्रमयोः क्वचन मतभेदोऽपि दृश्यते स बुधैर्विचार्योहनीयः ।

| तुर्वसुवंशः | द्रुह्युवंशः | अनुवंशश्च | | |
|---|---|---|---|---|
| तुर्वसुः | द्रुह्युः | अनुः | सुतपाः | हर्यङ्गः |
| वह्निः | बभ्रुः | सभानरः | वलिः | भद्ररथः |
| गोभानुः | सेतुः | कालानरः | दीर्घतमाः | बृहत्कर्मा |
| | | सृञ्जयः | अङ्गादयः | बृहद्रथः |
| त्रैशाम्बः | अवद्धः | पुरञ्जयः | पारः | बृहन्मनाः |
| | | जनमेजयः | दिविरथः | जयद्रथः |
| करन्धमः | गान्धारः | महामणिः | धर्मरथः | विजयः-धृतिः |
| | | महामनाः | चित्ररथः | धृतव्रतः |
| मरुत्तः | धर्मः | उशीनरः | रोमपादः | सत्यकर्मा |
| | धृतः | तितिक्षुः | चतुरङ्गः | अधिरथः |
| | दुर्गमः | उपद्रथः | पृथुलाक्षः | कर्णः |
| | प्रचेताः | हेमः | चम्पः | वृषसेनः |

एषु यदुपुत्रस्य तुर्वसोर्वंशः मरुत्तस्यानपत्यत्वाद् पौरवं वंशमाश्रितवान्[१] ।

द्रुह्योर्वंशेऽवद्धस्य पुत्रो गान्धारो जातो, यस्य नाम्ना गान्धारदेशो बभूव[२] । तथाग्रे प्रचेतसः पुत्रशतमधर्मबहुलानां म्लेच्छानामुदीच्यानामाधिपत्यमकरोत्[३] । अनोस्त्रयः पुत्राः परमधार्मिका आसन्—सभानरः पक्षः परपक्षश्च । तेषु सभानरस्य परम्परायामुशीनरस्य पुत्रः शिविः महान्

१. एवं ययाति शापेन जरा संक्रमणेन च ।
तुर्वसोः पौरवं वंशः प्रविवेश पुरा किल ।। वा० पु० ९९।४

२. अवद्धस्य दायादो गान्धारो नाम पार्थिवः ।
ख्यायते यस्य नाम्ना तु गान्धारविषयो महान् ।। वा० पु० ९९।९ ।

३. प्रचेतसः पुत्रशतं राजानः सर्व एव ते ।
म्लेच्छराष्ट्राधिपाः सर्वे उदीचीं दिशमाश्रिताः ।। वा० पु० ९९।१२

दयालुर्धार्मिक परोपकारनिरतश्चासीद् यस्य कीर्ति सर्वत्र गीता विद्यते। अग्रे चित्ररथस्य पुत्रो रोमपादो बभूव, यस्य मित्रता राज्ञा दशरथेन सहासीत्। तेन पुनर्हीनाय स्वमित्राय रोमपादाय स्वकीया शान्तानाम्नी कन्या दत्तकरूपेण दत्ता यस्या उद्वाहो विभाण्डकमुने. तनयेन ऋष्यशृङ्गेण साकमभवत्। वायुपुराणानुसार तु चित्ररथस्य पुत्रो दशरथो जातो यस्य रोमपाद इति नामान्तरमासीत्। एतस्यैव तनयासीत् शान्ता, नतु सूर्यवशीयस्य राज्ञो दशरथस्य। अतएव रोमपादपुत्रश्चतुरङ्गो दाशरथि प्रोक्तो यो हि ऋष्यशृङ्गस्य प्रसादेनोत्पन्न आसीत्[1]। रोमपादाच्चतुरङ्गस्तत पृथुलाश्व तस्य पुत्रश्चम्पो बभूव, येन चम्पापुरी वासिता।

तदग्रे बृहद्रथस्ततो बृहन्मना ततो जयद्रथो जातो, यो हि अभिमन्युवधक्रुद्धेनार्जुनानेन निहित। ततोऽस्यैव वशेऽधिरथ सूत समुत्पन्नो यो हि सूर्यद्वारा कौमारे वयसि कुन्तीगर्भादुत्पन्न लोकलज्जया परित्यक्त गङ्गाया प्रवहन्त कर्ण प्राप्य पालन पोषणाभ्या परिवर्द्धितवान्। अतएव-'सूतात्मज वथ कर्ण कथ चाङ्गस्य वशज' इति ऋषीणा प्रश्ने सूतेनोक्तम्—'स कर्ण प्रतिजग्राह तत्र कर्णस्तु सूतज।' वा० पु० ९९।१३,१८ इत्युत्तर साधु सगच्छते। एषा विस्तारो वायुपुराणे (९९) मत्स्यपुराणे (४८) विष्णुपुराणे च (४।१९-१८) अध्यायेषु द्रष्टव्यम्।

इत्थञ्च राज्ञो ययाते पञ्चभ्य पुत्रेभ्य उत्पन्नाना पञ्चाना वशाना तत्तत्पुराणेषु सक्षेपतो विस्तरतश्च दिग्दर्शनस्य सत्त्वेऽपि महाभारतस्यादिपर्वणि जनमेजयमुद्दिश्य महाभारते एव सग्रह कृतोऽस्ति[2]।

एव चन्द्रवशे पुरूरवा नहुष ययाति यदु सात्वतोऽन्धक वृष्णि उग्रसेन कस जह्नु गाधि विश्वामित्र चेदि शिशुपाल हैहय कार्तवीर्य उशीनर शिबि रोमपाद जयद्रथ पुरु दुष्यन्त भरत रन्तिदेव जरासन्ध हस्ति कुरु शन्तनु विचित्रवीर्य धृतराष्ट्र पाण्डु दुर्योधन

---

१ अथ चित्ररथस्यापि राजा दशरथोऽभवत्।
लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत्॥
स तु दाशरथिर्वीरश्चतुरङ्गो महामना।
ऋष्यशृङ्गप्रसादेन जज्ञ ऽप कुलवर्द्धन। वा० पु० ९९।१०३,१०४

२ यदोस्त यादवा जाता तुर्वसोर्यवना स्मृता।
द्रुह्यो सुतास्तु वै भोजा अनोस्तु म्लेच्छजातय॥
पुरोस्तु पौरवो वशो यत्र जातोऽसि पार्थिव।॥ ८५।३४-३५

युधिष्ठिरः परीक्षित् जनमेजय इत्येतेऽति प्रसिद्धा राजानो बभूवुः। ते मुदाराणाः कीर्तेः विशेषतानां च दिग्दर्शनं तत्तत्पुराणेषु महता विस्तरेण प्रदर्शितमास्ते।

प्रायः प्रतिपुराणमैतिहासिकस्य तत्त्वस्योपलब्धिर्भवति। पुराणानामनुशीलनेन प्रतीयते यत् सोमसूर्यवंशिनां राज्ञामुद्गमस्थानमेकमेवास्ति। लोकपितामहस्य ब्रह्मणो मानसपुत्रस्य महर्षेर्मरीचेः पुत्रात् कश्यपाद्दक्षस्य प्रजापते दुहितरि अदित्यां विवस्वान् नामकः पुत्रः प्रादुर्बभूव। विवस्वतः (सूर्यस्य धर्मपत्नी बभूव विश्वकर्मणः कन्या संज्ञा नाम, तस्यां श्राद्धदेवस्य मनोर्जनिरजायत। यो हि वैवस्वतमनुनाम्ना प्रसिद्धिं ययौ। श्रद्धायां वैवस्वतमनुत इक्ष्वाकुप्रभृतयो दशपुत्रा अभवन्। तथैव इला नाम्नी तनया चाजायत। यस्यां सोमपुत्रेण बुधेन सह संयोगात् पुरूरवो नामकः पुत्रोऽभवद् यो हि वीर्यप्राधान्याच्च चन्द्रवंशस्य प्रतिष्ठापको जातः। अन्यथा क्षेत्रप्राधान्ये सूर्यवंशीयायामिलायामुत्पद्यमानत्वात् पुरूरवाः सूर्यवंशीयः स्यात्। एवं सुद्युम्नादुत्पन्ना गयादयः सौद्युम्नवंशीयाः प्रोच्यन्ते।

यद्यपि सोम-सूर्य-वंशयोः प्रवर्तको लोकपितामहो ब्रह्मैव वर्तते, किन्तु सूर्यवंश इक्ष्वाकुतोऽयोध्यायां प्रचलितः, तथा चन्द्रवंशः पुरूरवसः प्रतिष्ठानपुरे प्रतिष्ठापितः।[1] तदनन्तरमयोध्यायां विकुक्षि-युवनाश्व-मान्धातृ-हरिश्चन्द्र-सगर-भगीरथ-दिलीप-रघु-दशरथ-रामचन्द्रादिवत्, आयु-नहुष-ययाति-पुरु-प्रभृतय क्रमशः प्रतिष्ठानपुरस्य राजानो बभूवुः।

वस्तुतः पौराणिकानुश्रुत्यनुसारं वैवस्वतमनुत एव त्रयाणां सोमसूर्य-सौद्युम्नवंशानां प्रारम्भोऽभवत्। तत्र सूर्यवंशस्य राजधानी अयोध्यायाम्, चन्द्रवंशस्य राजधानी प्रतिष्ठानपुरे, सौद्युम्नवंशस्य च शासनदेशः भारतस्य पूर्वप्रदेश आसीत्। एषां राजवंशानां विषये पार्जीटरमहोदयस्य धारणास्ति यद् मानववंशो द्रविड आसीत्, चन्द्रवंशो विशुद्ध आर्य आसीत्, सौद्युम्नवंशश्च मुण्डा-मान-ख्मेरजातेरासन्। किन्तु, अपसिद्धान्तस्यास्य विषयस्य परिपुष्टये तेन या युक्तयः प्रदत्ताः सन्ति, तासां सयुक्तिकं खण्डनं श्रीबलदेवोपाध्यायेन पुराणानां साक्ष्ये कृतमस्ति।[2]

वैदेशिकेषु विद्वत्सु मि॰ पार्जीटरेण पौराणिकीनामनुश्रुतीनां प्रामाण्य-सिद्धये स्वकीये महत्त्वपूर्णे मौलिके ग्रन्थे प्राचीन भारतीयैतिहासिकानु-

---

१. पुराणविमर्श पृ० ३६४-३६५

२. एन्शियेन्ट इण्डियन हिस्टारिकल ट्रेडीशन पृ० २४०-२४५

श्रुतौ अनेकानि प्रमाणानि तर्कपूर्णा युक्तीश्चोपस्थापयता पुराणानामन्तरङ्गमैतिहासिकं वास्तविकं महत्त्वं ससाधितमस्ति, परमेतादृशे स्थले तेन कियन्तोऽप्यपसिद्धान्ता उल्लिखिता सन्ति, येषां सम्यग् विवेचनं काणे महोदयेन स्वीकये 'हिस्ट्री ऑफ् धर्मशास्त्र' नामके ग्रन्थे[1] तथा जयचन्द्र विद्यालङ्कारेण 'भारतीयेतिहासस्य रूपरेखा' नामके ग्रन्थे[2] च कृतमस्ति।

## निमिवंशः

इक्ष्वाकुपुत्रो राजा निमि. सहस्रवर्षसाध्य यज्ञ कर्तुं कामनया ब्रह्मणो मानस पुत्रं महर्षि वसिष्ठमृत्विज निर्मातुमियेष, पर वसिष्ठेन प्रोक्तम्—राजन्। यज्ञार्थमिन्द्रो मा प्रथमं वृतवानस्ति, अतस्तावत्त्वं विरम। तत आगत्याहं तव ऋत्विग् भविष्यामि। एवमुक्ते निमिना किमपि नोत्तरितमतो वसिष्ठेन ज्ञात यद् राजा मम वचनं स्वीकृतम्। अत. स इन्द्रस्य यज्ञ सम्पादयितु गत.। अनन्तर निमिना जीवनस्यास्थिरताया विचार विधाय तत्क्षण एव गौतमादिभि ऋत्विग्भिः स्वकीय यज्ञं कर्तुमारब्धम्।

अनन्तरं देवराजस्येन्द्रस्य यज्ञसमाप्तौ वसिष्ठो निमेर्यज्ञ सम्पादयितुमुपस्थित, किन्तु निमे यज्ञ स्वकीयं कार्यं गौतमद्वारा सम्पादित दृष्ट्वा रुष्टो कुलगुरुर्वसिष्ठो निशि शयान निमि शप्तवान्—'यदनेन ममावज्ञा कृत्वा मया क्रियमाणस्य यज्ञस्य भारो गौतमाय समर्पितः। अतोऽयं देहहीनो भवतु।' शपित्वा उत्थितेन निमिना तच्छ्रुत्वा कथितम्—'यदयं लोभाविष्टो गुरु मया सह वार्तालाप विनैव सुप्ताय मह्य शाप दत्तवान्। अतोऽस्यापि देहपातो भविष्यति।' एवं परस्परं क्रुद्धयोस्तयोः शापेनोभयो शरीरपातो जात।

तदनन्तरं वसिष्ठस्य लिङ्गशरीरं मित्रावरुणयोर्वीर्ये प्रविष्टम्। उर्वशीमप्सरसमवलोक्य दैवात्तस्य वीर्यं स्खलितम्। तच्छापभीतया तया तत्तत्र तद्वीर्यमस्मिन् जलपूर्णे कलशे स्थापितम्, येन वसिष्ठस्य द्वितीय शरीरं समुत्पन्नम्। निमे शरीरं तैल सुरक्षितमासीत्। यज्ञस्य समाप्तौ यदा देवा स्वं स्वं भागं ग्रहीतुमुपस्थितास्तदा ऋत्विग्भिः स्व यजमानं निमिं जीवयितु ते प्रार्थिता, किन्तु अदेहावस्थेन निमिना प्रोक्तम्—'शरीरात्मनोर्वियोगे यादृशं दुःखमुपजायते न तादृशमस्ति दुःखान्तरम्। अतोऽहमिदं पुनः शरीरं धर्तुं नेच्छामि।' इदमाकर्ण्य

1. काणे हिस्ट्री भाग २ पृ० ८४५–८४८
2. रूपरेखा जिल्द पृ० २४०-२४३

देवैरभिहितम्—'अस्तु, अतः परं त्वं विदेहः सन् मनुष्याणां नेत्रेषु निवासं कुरु' तथा तेषां पक्ष्मणामुत्थानपतनयोः कार्यं च कुरुष्व, येन तेषां तव प्रतीतिः बोभूयताम्। निमिना तत्स्वीकृतम्। एवं देवास्तं समस्त-प्राणिनां नेत्रेषु अवस्थितं कृतवन्तः। तत्कालादेव प्राणिनो निमेषोन्मेषं कर्तुमारब्धवन्तः।

अनन्तरमराजकताभयेन लोककल्याणकामनया मुनिजनैः तस्य पुत्र-हीनस्य राज्ञः शरीरमरणिना निर्मथितम्, येनैकोऽतिसुन्दरः कुमारः समुत्पन्नः, यो जन्मना जनकः, विदेहात् ( मृतकशरीरात् ) उत्पन्नत्वाद् विदेहः, मन्थनाज्जायमानत्वाद् मिथिलश्च प्रोक्तः। अनेनैव मिथिलापुरी निर्मिता[1]।

तस्य मिथिलजनकस्य पुत्र उदावसुरभूद् यस्य वंशे सीरध्वजजनक-नामा प्रसिद्धो राजा बभूव, यस्य पुत्रकामनया यज्ञभूमिं हलेन कर्षतः हलस्याग्रभागे सीरे सीतायाः पुत्र्याः प्रादुर्भावो जातः, यस्याः स्वयम्वरे धनुषो भङ्गं कृत्वा मर्यादापुरुषोत्तमेन दाशरथिना भगवता रामेण तस्याः पाणिग्रहणं कृतम्।

सर्वे मैथिला भूपाला प्रायः अध्यात्मविद्याविशारदाः परमज्ञानिन-श्चासन्। महर्षेः याज्ञवल्क्यस्य प्रसादाद् गृहस्थाश्रमे स्थिता अपि ते राजानो ज्ञानिनो जीवन्मुक्ताश्च बभूवुः[2]।

अस्मिन्नेव वंशे कुशध्वज-धर्मध्वज-कृतध्वज-मितध्वजनामानः प्रसिद्धा राजानो बभूवुः, ते सर्वे जनकनाम्ना प्रख्याताः। वंशोऽयं कृतिनामक-राजपर्यन्तं प्रचलितम्।

## महाभारतोत्तर राजवंशः

पाश्चात्यविचारकस्य विदुषः पार्जिटरस्य निश्चयानुसारं महाभारतो-त्तरराजवंशस्य वर्णनं सर्वप्रथमं भविष्यपुराणे कृतमस्ति। तदाधारे पुनः मत्स्यपुराण-वायुपुराण-विष्णुपुराण-ब्रह्माण्डपुराण-गरुडपुराण-श्रीमद्भागवतेषु जातमस्ति। गरुडपुराण-श्रीमद्भागवतयोः कलिराजवंश-

---

१. जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः।
मिथिलो मथनाज्जातः मिथिला येन निर्मिता॥
श्री म. भा. ६।१३।१३

२. एवं वै मैथिला राजन्नात्मविद्याविशारदाः।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि॥ तत्रैव ६।१३।२७

वर्णनमतिसक्षिप्त वर्तते तथा मत्स्यपुराण-वायुपुराण-भविष्यपुराणेषु प्रामाणिकतया विस्तृत विवरण विद्यते। पौराणिकराजवशसकलने प्राय तेष्वेव राजसु दृष्टयो दत्ता सन्ति, ये मगधकेन्द्राद् देशस्यास्य शासन कुर्वन्तिस्म, आहोस्विद् मगधराज राजनीत्या सम्बद्धा आसन्।

(१) श्रीमद्भागवते द्वादशस्कन्धस्य प्रथमाध्याये केवल २-४३ श्लोकद्वारा सूक्ष्मरूपेण भविष्यद्राजवशस्य विवरणमुपस्थापित वर्तते।

(२) वायुपुराणे ६६ अध्यायस्य २७१-४६२ श्लोकेषु भविष्यद्राजवशस्य वर्णनं सविस्तर प्रदत्तमस्ति।

(३) मत्स्यपुराणस्य त्रिषु २७०, २७१, २७२ अध्यायेषु भविष्यद्राजवशस्य वर्णनप्रसङ्गोऽस्ति।

(४) ब्रह्माण्डपुराणे ३।७४।१६०–१७० भविष्यद्राजवशवर्णनमस्ति।

(५) भविष्यपुराणे १२।१।२२–२८ पर्यन्त भाविना राज्ञा विवरण विद्यते।

(६) गरुडपुराणे एकस्मिन्नेवाध्याये १४१ भविष्यद्राजवश विवरणं वर्तते।

(७) विष्णुपुराणे चतुर्थस्याशस्य चतुर्षु २१,२२,२३,२४ अध्यायेषु भविष्यद्राजवशस्य वर्णनप्रसङ्गे महाभारतोत्तरकाले उत्पन्नाना तत्तद्वशीयाना राज्ञा या सूचय प्रदत्ता सन्ति। तत्रैकविशतितमेऽध्याये परीक्षिद्वशस्य परिचयोऽस्ति। द्वाविंशत्यध्याये इक्ष्वाकुवशीयो बृहद्बलवशो वर्णितोऽस्ति। त्रयोविंशत्यध्याये बृहद्रथवशीयराजसु प्रकाशो दत्तोऽस्ति। चतुर्विंशत्यध्याये प्रद्योतवश शिशुनागवश-नन्दवश-मौर्यवश-शुङ्गवश-आन्ध्रवश-आभीर-गर्दभिल-शक-यवन-तुर्क-गुरुण्ड-मौनजातीयाना राज्ञा विवरण प्रदत्तमस्ति।

## परीक्षिद्वंशः

विष्णुपुराणे चतुर्थाशस्य एकविंशतितमेऽध्याये राज. परीक्षिता वशवर्णनप्रसङ्गे प्रोक्तमस्ति—यद् राजा परीक्षित जनमेजय - श्रुतसेन-उग्रसेन - भीमसेननामानश्चत्वार पुत्रा भविष्यन्ति। जनमेजयपुत्र: शतानीको याज्ञवल्क्याद्वेदाध्ययन कृत्वा विषयेभ्यो विरक्तो महर्षे शौनकस्योपदेशादात्मज्ञाने निपुणो भूत्वा आत्मन पुत्रायाश्वमेधदत्ताय राज्य दत्वा निर्वाणपद प्राप्स्यति। अश्वमेधदत्तस्य पुत्रोऽधिसीमकृष्णस्तया

तत्पुत्रो निचक्नुर्भविष्यति, यो गङ्गाद्वारा हस्तिनापुरे प्लाविते कौशाम्ब्यां निवासं करिष्यति। निचक्नुवंशे शतानीकद्वितीयस्य पुत्र उदयनो भविष्यति, तस्याहीनरः तस्य दण्डपाणिः तस्य निरामित्रः तस्य पुत्रः क्षेमको भविष्यति। क्षेमकानन्तरमयं वंशः समाप्तो भविष्यति।[1]

## बृहद्बलवंशः

द्वाविंशतितमेऽध्याये इक्ष्वाकुवंशीयस्य राज्ञो बृहद्बलस्य वंशवर्णनप्रसङ्गे लिखितमस्ति यद् बृहद्बलस्य पुत्रो बृहत्क्षणो भविष्यति, तस्योरक्षयस्तस्य वत्सव्यूहः ततोऽग्रे सञ्जयपुत्रः शाक्यो भविष्यति, शाक्यस्य शुद्धोदनस्तस्य राहुलः तस्य प्रसेनजित् तस्य क्षुद्रकः तस्य कुण्डकः तस्य सुरथः तस्य पुत्रो भविष्यति सुमित्रः। सुमित्रानन्तरं बृहद्बलवंशस्यान्तो भविष्यति[2]।

त्रयोविंशतितमेऽध्याये मगधदेशीयबृहद्रथवंशीयराजसु जरासन्धो महाप्रतापी बलवांश्च राजाऽसीत्, तस्य पुत्रः सहदेवः, तस्य पुत्रः सोमापी भविष्यति। तस्य श्रुतश्रवाः तस्यायुतायुः तस्य निरमित्रः तस्य सुनेत्रः तस्य बृहत्कर्मा तस्य सेनजित् तस्य श्रुतञ्जयः तस्य विप्रः तस्य शुचिः पुत्रो भविष्यति। शुचेः क्षेमा तस्य सुव्रतः तस्य धर्मः तस्य सुश्रवाः तस्य दृढसेनः तस्य सुबलः तस्य सुशीलः तस्य सत्यजित् तस्य विश्वजित् तस्य रिपुञ्जयो भविष्यति। एवं बृहद्रथवंशीयाः ३२ राजानः शतवर्षपर्यन्तं मगधे शासनं करिष्यन्ति।[3]

## प्रद्योतवंशः

बृहद्रथवंशीयमन्तिमं राजानं रिपुञ्जयं हत्वा तन्मन्त्री स्वं पुत्रं प्रद्योतं राज्याभिषिक्तं करिष्यति। तस्य पुत्रो बलाको भविष्यति। तस्य विशाखयूपः तस्य जनकः तस्य नन्दिवर्द्धनः तस्य नन्दी भविष्यति। एते प्रद्योत-

---

१. ब्रह्मक्षत्रस्य यो योनिर्वंशो राजर्षिसत्तमः।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ॥ वि. पु. ४।२१।१८

२. इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति।
यतस्तं प्राप्य राजानं स संस्थां प्राप्स्यते वै कलौ॥ वि.पु.४।२२।१६

३. द्वाविंशच्च नृपा ह्येते भवितारो बृहद्रथात्।
पूर्णं वर्षसहस्रं वै तेषां राज्यं भविष्यति॥
मा. पु. ६६।३०८ तथा म. पु. ३७०।२६

वंशीयाः पञ्च नृपतयः १६८ वर्षपर्यन्तं राज्यं करिष्यन्ति। प्रद्योतवंशस्य नाशः शिशुनागद्वारा भविष्यति[1]।

### शिशुनागवंशः

शिशुनागस्य पुत्रः काकवर्णः तस्य क्षेत्रधर्मा तस्य क्षतौजाः तस्य विधिसारः तस्याजातशत्रुः तस्यार्भकः तस्योदयाश्वः तस्य नन्दिवर्द्धनः तस्य महानन्दी भविष्यति। एते शिशुनागवंशीया दश नृपतयः ३६२ वर्षाणि पृथिव्याः शासनं करिष्यन्ति[2]।

### नन्दवंशः

महानन्दिनः शूद्रागर्भसमुत्पन्नः महापद्मनामकः पुत्रः परशुरामवत् क्षत्रियनियन्ता भविष्यति। ततः शूद्रजातीया राजानो राज्यं करिष्यन्ति। महापद्मस्याष्टौ पुत्रा भविष्यन्ति, ये तदनन्तरं राज्यं करिष्यन्ति। महापद्मस्तत्पुत्राश्च शतवर्षपर्यन्तं राज्यं करिष्यन्ति। ततो नवान् नन्दान् महाक्रोधी कौटिल्य (चाणक्य) नामैको ब्राह्मणो नाशयिष्यति। तेषामन्ते कौटिल्यो मुरायां गर्भसम्भवं मौर्यं चन्द्रगुप्तं तद्राज्येऽभिषेक्ष्यति[3]।

### मौर्यवंशः

चन्द्रगुप्तस्य पुत्रो बिन्दुसारः तत्पुत्रो महापराक्रमी सम्राड् अशोकः तस्य सुयशाः तस्य दशरथः तस्य सयुतः तस्य शान्तिशूकः तस्य सोमशर्मा तस्य शतधन्वा तस्य बृहद्रथो भविष्यति। एवं १३७ वर्षाणि यावदेते दश मौर्यवंशीया राजानो राज्यं करिष्यन्ति[4]।

### शुंगवंशः

एतदनन्तरं दश शुंगवंशीया राजानो राज्यं करिष्यन्ति। सर्वप्रथमं सेनापतिः पुष्पमित्रः स्वं स्वामिनं निहत्य राज्यं करिष्यति। तत्पुत्रोऽग्निमित्रो भविष्यति। तस्य सुज्येष्ठः तस्य वसुमित्रः तस्योदङ्कः तस्य पुलिन्दः तस्य

१. अष्टत्रिंशच्छतं भाव्या प्रद्योताः पञ्च ते सुताः।
हत्वा तेषां यशः कृत्स्नं शिशुनाको भविष्यति॥
(वा. पु. ९९।३१४, म. पु. ३१।३२१)

२. इत्येते भवितारो वै शिशुनाका नृपा दश।
शतानि त्रीणि वर्षाणि द्विषष्ट्यभ्यधिकानि तु॥ वा. पु. ३९।३२१

३. भुक्त्वा मही वर्षशतं नन्देन्दुः स भविष्यति।
चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति॥ वा. पु. ९९।३०

४. इत्येते दश मौर्यास्तु ये भोक्ष्यन्ति वसुन्धराम्।
सप्तत्रिंशच्छतं पूर्णं तेभ्यः शुंगान् गमिष्यति॥ म. पु. २७१।२५

घोपवसुः तस्य वज्रमित्रः तस्य भागवतः ततुनो देवभूतिर्भविष्यति। एते शुंगनरेशाः ११२ वर्षपर्यन्तं पृथिव्या राज्यं करिष्यन्ति[1]। एतदनन्तरमियं पृथिवी कण्वभूपानामधिकारे गमिष्यति।

### कण्ववंशः

शुङ्गवंशीयमतिव्यसनिनं राजानं देवहूतिं हत्वा कण्ववंशीयो वसुदेवनामकोऽमात्यः स्वयं राज्यं भोक्ष्यति। वसुदेवपुत्रो भूमित्रः तस्य नारायणः तस्य सुशर्मा एते चत्वारः कण्ववंशीयाः ४५ वर्षाणि पृथिव्या अधिपतयो भविष्यन्ति[2]।

### आन्ध्रवंशः

कण्ववंशीयं सुशर्माणं निहत्य तस्यान्ध्रजातीयः सेवको बलिपुच्छकः (शिप्रकः) स्वयं पृथ्वीं भोक्ष्यति। ततस्तद्भ्राता कृष्णः पृथिव्याः स्वामी भविष्यति। तस्य शान्तकर्णी तस्य पूर्णोत्सङ्गः तस्य शातकर्णी तस्य लम्बोदरः तस्य पिलकः तस्य मेघस्वातिः तस्य पुटमान् तस्यारिष्टकर्ता तस्य हलाहलः तस्य पललकः तस्य पुलिन्दसेनः तस्य सुन्दरः तस्य शातकर्णिः तस्य शिवश्रितः तस्य शिवस्कन्धः तस्य यज्ञश्रीः तस्य द्वियज्ञः तस्य चन्द्रश्री तस्य पुत्रः पुलोमायी भविष्यति। एवं ३० आन्ध्रा राजानः ४५६ वर्षाणि पृथिवीं भोक्ष्यन्ति[3]। मात्स्ये तु[4]।

### आभीरादयः

अनन्तरं ७ आभीराः १० गर्दभिलाः १६ शकाः, ८ यवनाः, १४ तुर्काः, १३ गुरुण्डाः, ११ मौनाः, १०९० वर्षाणि पृथिव्याः शासनं करिष्यन्ति। एषु ११ मौना राजानः शतत्रयवर्षपर्यन्तं पृथिवीराज्य भोक्ष्यन्ति। एषु उच्छिन्नेषु कैंकिलनामका यवनजातीया अभिषेकरहिता राजानो

---

१. दर्शते शुंगराजानो भोक्ष्यन्तीमा वसुन्धराम्।
शतं पूर्णं शतद्वे च ततः शुङ्गान् गमिष्यति॥ म. पु. २७१।३०

२. इत्येते शुंगभृत्यास्तु स्मृताः काण्वायना नृपाः।
चत्वारश्चेति द्विजा ह्येते कण्वा भोक्ष्यन्ति वै महीम्॥
चत्वारिंशत् पञ्च चैव भोक्ष्यन्तीमां वसुन्धराम्। म. पु. २७१।३५

३. इत्येते वै नृपास्त्रिंशदान्ध्रा भोक्ष्यन्ति ये महीम्।
समाः शतानि चत्वारि पञ्च षड् वै तथैव च॥ वा. पु. ९९।३५८

४. एकोनविंशतिर्ह्येते आन्ध्रा भोक्ष्यन्ति वै महीम्।
तेषां वर्षशतानि स्युश्चत्वारि षष्ठिरेव च॥ म. पु. २७२।१६

भविष्यन्ति । तेषां वंशधरो विन्ध्यशक्तिर्भविष्यन्ति । तत्पुत्रः पुरञ्जयः तस्य रामचन्द्रः तस्य धर्मवर्मा तस्य वंगः तस्य नन्दनः तस्य सुनन्दी तस्य नन्दियशः-शुकः-प्रवीरास्त्रयो भ्रातरो भविष्यन्ति । एते सर्वे १०६ वर्षाणि राज्यं करिष्यन्ति । तत एतद्वंशीया वाह्लिकाश्च राजानो भविष्यन्ति । तदनन्तरं १३ पुष्यमित्र-पद्मित्रा ७ आन्ध्रमाण्डलीका भूपतयो भविष्यन्ति । अपि च ९ राजानः कोशलदेशे राज्य करिष्यन्ति । निषधदेशस्य स्वामिनोऽपि एत एव भविष्यन्ति ।

प्रसिद्धैतद्राजवंशातिरिक्तानामपि अनेकेषां राजवंशानामुल्लेखः तत्तत् पुराणेषु प्राप्यते । गुप्तवंशशासनसङ्केतप्रसङ्गे वायुपुराणे तत्कालीननाग-नैषधगुहादीनामपि चर्चास्ति[1], येन समुद्रगुप्तस्य दिग्विजयात् पूर्वस्या राजनैतिकस्थितेः सम्यक् परिचयः प्राप्यते । किन्तु गुप्तकालानन्तरं राजवंशावल्या उल्लेखः पुराणेषु नास्ति । हर्षवर्द्धनस्य तु क्वचन चर्चैव नास्ति । किन्तु गुप्तवंशजाना राज्यसीम्नश्चर्चामात्रं कृतमस्ति । येन पुराणानि गुप्तवंशतः परिचितानि सन्तीति निश्चीयते[2] ।

अन्तिमे कलौ क्षत्रियाणामुच्छेदानन्तरं शूद्र-व्रात्य-म्लेच्छादयो राजानः सर्वत्र राज्यं करिष्यन्ति । इमे चाल्पे प्रसन्नताशीला अत्यन्तक्रोधिनः अधर्मनिरता मिथ्याभाषिणः स्त्री-बाल-गोघातका-परधनहरणरुचयः तमः-प्रधाना अल्पशक्तयः अल्पायुषः उत्थानपतनशीलाः महाकामा अत्यन्त-लोभिनो म्लेच्छा आर्यविपरीताचरणा सर्वाः प्रजा एकीकरिष्यन्ति । प्रतिदिन धर्मस्य शनैः शनैः ह्रासो भविष्यति । तदा अर्थ एव कुलीनताया हेतुः, पारस्परिकरुचिरेव दाम्पत्यसम्बन्धस्य कारणम्, मिथ्याभाषणमेव व्यवहारकुशलताकारणम्, यज्ञोपवीतधारणमात्रमेव ब्राह्मणत्वहेतुः, अन्याय एव जीविकाकारणम्, निर्भयतापूर्वकं धृष्टतया भाषणमेव पाण्डित्य-निदानम् निर्धनतैव साधुत्वम्, संस्कारमन्तरा स्वीकारमात्रमेव विवाहः, सुवेशधारणमेव सुपात्रता, छद्मवेशधारणमेव गौरवकारणम् दूरस्थं

---

१. नैषधाः पार्थिवाः सर्वे भविष्यन्त्यामनुक्षयात् ।
नलवंशप्रसूतास्ते वीर्यवन्तो महाबलाः ॥
मथुरां च पुरीं रम्यां नागा भोक्ष्यन्ति सप्त वै ।
कलिङ्गा माहिषाश्चैव महेन्द्रनिलयाश्च ये ॥
एतान् जनपदान् सर्वान् पालयिष्यति वै गुहः ॥ वा.पु ९९।३७६,३८६

२. अनुगङ्गं प्रयागञ्च साकेतं मगधांस्तथा ।
एतान्जनपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः ॥ वा. पु. ९९।३८२

जलमेव तीर्थोदकञ्च भविष्यति। एवं समस्ते भूमण्डले विविधानां दोषाणां प्रसारे याते बलवानेव राजा भविष्यति। अतिलोलुपानां नृपाणां कारणात् स्नेहलज्जादिरहिता दुःखिता असत्कर्मपरायणा आधि-व्याधि-शोकाकुला अनावृष्टि पीडिताः प्रजाः पर्वतकन्दराश्रया मधु-मूल-फल-पत्र-पुष्पादि भक्षयित्वा समयं यापयिष्यन्ति। वृक्षाणा पत्राणि वल्कलानि च धारणाच्छादनवस्त्राणि भविष्यन्ति। अधिकैः शीतैः वायु-घर्म-वर्षादिभिश्च कष्टं सहिष्यन्ते सर्वे। सर्वेषां द्वाविंशतिवर्षपर्यन्तमेव जीवनं भविष्यति। कलियुगावसाने एवं प्रकारे घोरे सङ्कटे पतित्वा सर्वाः प्रजा नश्यन्ति।

एवं रीत्या यदा श्रौतस्मार्तादिधर्माणामत्यन्तं ह्रासो भविष्यति तदा शम्बलग्रामनिवासिनो विष्णुयशसो ब्राह्मणस्य गृहे समस्तस्य विश्वस्य रचयिता चराचरगुरोर्भगवान् विष्णुः स्वांशेन कल्किरूपेणावतीर्य सकलान् म्लेच्छ-दस्यु-दुराचारिणो निहत्य अवशिष्टाः प्रजाः धर्ममार्गे प्रवर्तयिष्यति। कलियुगे समाप्ते निशान्ते सुप्त्वा जागृतानामिव तत्कालीनानां जनानां बुद्धयः स्वच्छा निर्मलाश्च भविष्यन्ति। तदा सर्वे जना धर्मानुसरणं करिष्यन्तः स्वस्थाः प्रसन्नाश्च भविष्यन्ति।

यदा सूर्य चन्द्र बृहस्पतयः पुष्यनक्षत्रे स्थिता एकराशौ सहैवागमिष्यन्ति तदैव सत्ययुगस्यारम्भो भविष्यति।[1] यस्मिन् समये भगवान् श्रीकृष्णो यदुवंशं संहृत्य द्वारकां परित्यज्येमां भारतभुवं च विहाय स्व धामगोलोकमुपगतः तस्मिन्नेव समये पृथिव्यां कलियुग आगतः[2]। एवं प्रकारं भविष्यद्राजवंशानां भयङ्करं परिणामं पर्यालोच्य ममता-मोहादिग्रस्तान् समस्तान् नृपान् हसन्ती पृथिवी कथयति—यत्तेषां राज्ञां महती कुबुद्धिरस्ति ये इदं चिन्तन्ति यदियं समस्ता पृथ्वी ममैवास्ति तथा मदनन्तरमपि मे सन्ततीनामेव भविष्यति[3]

## समीक्षा

पुराणेषु भविष्यद्राजवंशानां या सूची प्राप्यते सा समाना नास्ति।

---

१. यदा चन्द्रश्च सूर्यश्च तथा तिष्ये बृहस्पतिः।
एकराशौ समेष्यन्ति तदा भवति वै कृतम्॥ वि. पु. ४।२४।१०२

२. यदैव भगवान् विष्णोरंशो यातो दिवं द्विज!
वासुदेवकुलोद्भूतः तदैवात्रागतः कलिः॥ वि. पु. ४।२४।१०८

३. पृथ्वी ममेयं सकला गमैपा
मदन्वयस्यापि च शाश्वतीयम्।
यो यो मृतो ह्यत्र बभूव राजा
कुबुद्धिरासीदिति तस्य तस्य॥ वि. पु. ४।२४।१३४

कियत्सु स्थलेषु नामानि भिन्नानि - भिन्नानि उपलभ्यन्ते। कियतां शासनकालेऽपि अन्तरमस्ति। यथा वायुपुराणे (९९।५८) आन्ध्रवंशीयनरेशानां शासनकालः ४५६ वर्षाणि उक्तानि तर्हि मत्यपुराणे (२७२।१६) ४६० वर्षाणि उक्तानि किन्तु सर्वमतेन मौर्यवंशस्य शासनकालः १३७ वर्षाणि सन्ति।

यद्यपि आन्ध्रवंशीयनरेशानां संख्या विभिन्नपुराणेषु भिन्नाभिन्नास्ति तथापि एषामैतिहासिकज्ञाने पुराणेभ्यो महान् सहयोगो मिलति। यथा यथा समयो व्यत्येति तथा तथा एषां वर्णनं प्रामाणिकं सिद्धयति। दृष्ट्यानया पौराणिकराजवंशोऽपीतिहासस्य एकं स्रोतो मन्यते। अतो गभीरतापूर्वकं पुराणानामनुशीलनमैतिहासिकदृष्ट्या अत्यावश्यकमनिवार्यञ्च विद्यते।

यदि तत्तत्पुराणप्रतिपादितानां वंशावलीनां तुलनात्मकमध्ययनं क्रियेत तर्हि परस्परमहदन्तरं प्राप्यते। यथा वायुपुराण[1]-मत्स्यपुराणयो[2] राज्ञः परीक्षितो महापद्मस्याभिषेकपर्यन्तं १०५० वर्षाणि उक्तानि। विष्णुपुराणे[3] लिखितमस्ति यत् परीक्षितो जन्मतो नन्दाभिषेकपर्यन्त १५०० वर्षाणि समयो ज्ञेयः। श्रीमद्भागवते[4] च १११५ वर्षाणि कथितानि सन्ति।

परीक्षितो जन्मसमये सप्तर्षयो मघानक्षत्रे आसन्। ते प्रत्येकनक्षत्रे शतवर्षपर्यन्तं निवसन्ति।

यथा वा विष्णुपुराणे वैवस्वतमनोरारभ्य महाभारतकालीनवृहद्बलपर्यन्तं ९२, वायुपुराणे ८२ भविष्यपुराणे ९१ श्रीमद्भागवते ८८ राज्ञां परम्परा भवन्ति। अतो विवशतया वक्तुं शक्यते यत् प्रत्येकपुराणेषु

---

१. महादेवाभिषेकात्तु जन्म यावत् परीक्षितः।
एतद्वर्षसहस्रं तु ज्ञेयं पञ्चाशदुत्तरम्॥ वायुपुराणे ९९।४१५

२. महापद्माभिषेकात्तु यावज्जन्म परीक्षितः।
एवं वर्षसहस्रं तु ज्ञेयं पञ्चाशदुत्तरम्॥ म. पु. २७२।३५

३. यावत् परीक्षितो जन्म यावन्नन्दाभिषेचनम्।
एतद्वर्षसहस्रं तु ज्ञेयं पञ्चशतोत्तरम्॥ वि. पु. ४।२४।१०४

४. आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्।
एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम्॥ श्रीमद्भागवते १२।२।२६

यद्वंशवर्णनं विद्यते तद्वंशानुक्रमतो नास्ति, अपितु क्वचित् प्रसिद्ध-प्रसिद्धानां राज्ञां नामावलीमात्रमस्ति तथा क्वचन वंशानुक्रमस्यैव उल्लेखोऽस्ति।

महाभारतस्य प्रथमेऽध्याये एकत्रैव लघु विस्तारतो द्वे वंशावल्यौ प्रदर्शिते स्तः। एकत्र ३० राजपरम्परा अन्यत्र ४३ राजपरम्पराः प्रोक्ताः सन्ति। अतः सरलतया प्रतीयते यदेकत्र नामावलीमात्रमस्ति न वंशावली। एतदतिरिक्तं महाभारते नहुषवंशो ययातिवंशश्चेति द्वावपि वंशौ चन्द्रवंशान्तर्गतौ अभिमतौ स्तः। तथा वाल्मीकीयरामायणे (७०।३६) लिखितमस्ति यद् सूर्यवंशीयस्य पुत्रः नहुषः तस्य ययातिः तस्य च नाभाग उत्पन्नः। एवं वाल्मीकीये रामायणे रघुवंशे च महदन्तरं विद्यते। वाल्मीकीयानुसारं रघुः दिलीपस्य प्रपौत्रोऽस्ति परं रघुवंशे रघुः दिलीपस्य पुत्रोऽभिमतोऽस्ति। अतो नामावली वंशावल्यौ पृथक् पृथक् मन्तव्ये। पुराणेषु तु क्वचित् वंशावली क्रमादुल्लेखोऽस्ति क्वचन नामावलीक्रम एव आदृतोऽस्ति। अतः सावधानतया पुराणानामध्ययनं विधेयम्।

## ऋषिवंशानुकीर्तनम्

सृष्टेरादौ ब्रह्मणोऽष्टौ पुत्रा उत्पन्नाः (१) भृगुः (२) अङ्गिराः (३) मरीचिः (४) पुलस्त्यः (५) पुलहः (६) क्रतुः (७) अत्रिः (८) वशिष्ठश्च।[1]

### भृगुवंशः—१

महर्षेर्भृगो द्वे भार्ये आस्तामेका हिरण्यकशिपोः कन्या दिव्या, द्वितीया च पुलोम्नः पुत्री पौलोमी। तत्र दिव्यया भृगोः संयोगाद् ज्ञानिना श्रेष्ठतमोऽसुराणा गुरुः शुक्राचार्यं उत्पादितो यस्योशनाः काव्यो वा नामान्तरमस्ति। शुक्राचार्यस्य विवाहः पितृणां कन्यया गवा सहाजायत, यस्य शुक्राचार्यसंयोगाच्चत्वारस्तनया अजायन्त—त्वष्टा, वरत्रिः, शण्डः, अर्मकश्च तथा इन्द्रपुत्र्या जयन्त्यां शुक्राचार्यस्य पुत्री देवयानी समुत्पन्ना, यस्या विवाहो राज्ञा ययातिना सह सम्पन्नः। विरोचनस्य कन्यायां यशोधरायां त्वष्टुः द्वौ पुत्रावभूताम्—त्रिशिरा विश्वरूपश्च। भृगोरपरेऽपि द्वादशतनया आसन्, ये भृगुगणनाम्ना प्रसिद्धाः जाताः। शुक्राचार्येणापि देव्या भुवन-भावन प्रभृतयो द्वादश

---

१. भृगुरङ्गिरा मरीचिः पुलस्त्यः पुलहः क्रतुः।
अत्रिश्चैव वसिष्ठश्च षष्ठी ते ब्रह्मणः सुताः॥ वा. पु. ६५।२२

पुत्रा उत्पादिताः। पौलोम्या गर्भोऽष्टमे मासि व्याधिग्रस्तत्वात् पतितोऽतस्तस्य नाम च्यवनो जातः।

भृगोः पुलोम्नः पुत्र्यां पौलोम्यां ब्रह्मनिष्ठो जितेन्द्रियः परमप्रभावशाली महर्षिश्च्यवन उत्पन्नः। भृगुपुत्रश्च्यवनो राज्ञः शर्यातेः कन्यायां सुकन्यायामात्मवन्तं दधीचिञ्चेति द्वौ पुत्रावुत्पादितवान्। सरस्वत्यां दधीचेः संयोगात् सारस्वतनाम्नः पुत्रस्योत्पत्तिरजायत। राज्ञो नहुषस्य पुत्री महाभाग्यवती रुचिरात्मवतो भार्या बभूव। आत्मवतः पुत्रो महर्षिरौर्वोऽभवत्। यो मातुरूरुं विदार्य समुत्पन्नोऽतस्तस्य नाम औौर्वो जातः। औौर्वपुत्रो ऋचीकोऽभवत् यः प्रज्वलितोऽग्निरिव परमतेजस्वी आसीत्। औौर्वपुत्रस्य ऋचीकस्य सत्यवत्यां भार्यायां शतानि पुत्रा अभवन्, येषु जमदग्निर्ज्येष्ठो जातः। जमदग्निसंयोगाद्रेणुकायामिन्द्रसमः पराक्रमी परमतेजस्वी परशुरामोऽजायत। औौर्वपुत्रस्य ऋचीकमुनेः शतपुत्राणां सहस्राणि पुत्रा अभूवन्। तेषां समेषां भृगुवंशीयानामृषीणां वंशजा अन्यर्षिवंशजैः सह विवाहकार्येषु योग्या अभिमताः।

अपि च भृगुद्वाराख्यात्रेर्गर्भात् सुखदुःखयोः प्रभू शुभाशुभफलदातारौ, धातृ-विधातृनामानौ द्वौ पुत्रौ तथा तयोर्ज्येष्ठा भगिनी लोकपावनी श्रीः (लक्ष्मीः) चैका कन्याऽजायत। यया श्रीनारायणः पतित्वेन वृतः। धात्रा मेरोः पुत्र्यामायतिनाम्न्यां पाण्डुनामकः पुत्र उत्पादितो, विधात्रा च नियतितो मृकण्डुनामकः पुत्र उदपादि। मृकण्डुद्वारा मनस्विनीगर्भात् मार्कण्डेयो मुनिर्जन्म लेभे। तस्य मूर्धन्यातो वेदशिराः पुत्रोऽभवत्। तस्य पीवरीगर्भात् बहवो वंशवर्द्धकाः तनया अजायन्त, ये मार्कण्डेयाः प्रोक्ताः। पाण्डोः पुण्डरीकागर्भात् द्युतिमान् द्युतिमन्तः सृजवन्तश्चेति त्रयस्तनया अभूवन्, यैः भृगुवंशस्य महान् विस्तारो जातः।[१]

## अङ्गिरसो वंशः—२

महर्षेरङ्गिरसः तिस्रः पत्न्य आसन्—एका मरीचिनन्दनी सुरूपा, द्वितीया कर्दमपुत्री स्वराट्, तृतीया च मनुकन्या पथ्या। तत्राङ्गिरसः सुरूपायां देवगुरोर्बृहस्पतेर्जन्म जातम्, स्वराजा गोतमो जनितः, पथ्यायास्तु अवन्ध्यो वामदेव उशिज, उतथ्यो धिष्णुश्चेति पञ्च पुत्रा अजायन्त। वामदेवस्य पुत्रो बृहदुत्थः, उशिजः पुत्रो दीर्घतमाः, धिष्णोश्च

१. भृगुवंशे भृगु-च्यवन-आप्नुवत्-और्व-जमदग्नय एते पञ्च गोत्रप्रवर्तका जाताः। एषां वंशे परस्परं विवाहकर्म निषिद्धमस्ति ॥ (वा.पु. २८।१-७; ६५।७३-९६)

पुत्रः सुधन्वा बभूव। सुधन्वनो ऋषभः तस्य रथकार नामको देवगण ऋषिगणश्चाभूताम्। बृहस्पतेः पुत्रो भरद्वाजो जातः। अङ्गिरसो मानसपुत्रस्य संवर्तकस्य सन्ततयो देवगणे गणिताः। बृहस्पतेरङ्गजा आङ्गिरसगोत्रिया देवगणा अभिमताः। ते आङ्गिरसगोत्रीया देवगणाः सुरूपाया-मौरसपुत्ररूपेणोत्पन्ना आसन्। अङ्गिरसो गोत्रे समुत्पन्नानां संख्या अत्यधिका विद्यते। एते आङ्गिरसा अन्यान्यैः ऋषिगोत्रीयैः सह विवाहादिसम्बन्धेषु अङ्गीकृताः सन्ति। अपि चाङ्गिरा मुनिः स्मृतेः गर्भाद् भरताग्नि-कीर्तिमन्तौ पुत्रौ सिनीवाली-कुहू-राका-अनुमतिनामिकाश्चतस्रः कन्यकाश्चोत्पादितवान्। भरताग्नेः संहतिगर्भात् पर्जन्यनामकः पुत्रो बभूव, तस्य कीर्तिमान् तेन च धेनुकातो वरिष्ठ-द्युतिमन्तौ द्वौ तनयौ जनितौ ययोः सहस्राणि पुत्रपौत्रा बभूवुः। अङ्गिरो गोत्रे बृहस्पति-गौतम-उतथ्य-वामदेवा गोत्रप्रवर्तका जाताः। वा० पु० २८।१४-१८; ६५।९७-१०८।

## मरीचिवंशः—३

मरीचिवंशे समस्तानां स्थावरजङ्गमानामुत्पत्तिरजायत। सर्वप्रथमं महर्षिर्मरीचिर्यदा जलकामनया सन्ततीच्छया च ध्यानमग्नो जातस्तदा तन्मनसि भावना जागृता, यत् सर्वगुणसम्पन्नस्य सन्ततिवतः पुत्रस्योत्पत्या लोके प्रतिष्ठा वर्द्धते। अनन्तरं जलस्यावाहनान्तरमुपस्थिते तस्मिन् तत्र स्थितः स महर्षिः पुत्रकामनया सहस्रवर्षपर्यन्तं ध्यानमग्नोऽतिष्ठत्। परिणामस्वरूपे एकस्यात्तुपमस्यारिष्टनेमिनाम्नो मानसपुत्रस्य प्रादुर्भावोऽभवद्, यस्य द्वितीयं नाम कश्यपोऽभवत्। कश्यपः सवितुर्जनक आसीत्। अतस्तस्य महत्ता ब्रह्मणा समा सञ्जाता। सर्वेषु मन्वन्तरेषु स ब्रह्मणोंऽशादुत्पद्यते। लोकपितामहस्य ब्रह्मणोऽनुरोधाद् दक्षप्रजापतिनाऽऽत्मन अदित्यादायस्त्रयोदशकन्यकाः कश्यपाय समर्पिताः। दक्षस्य ताः सुता ब्रह्मवादिन्यो लोकमातरश्चासन् (कश्यपवंशोऽनुपदं वक्ष्यते)। अपिच मरीचिपत्नी सम्भूतिः पूर्णमासनामकमेकं पुत्रं तया कृष्टि-पुष्टि-त्विषा-अपचिति नाम्नीः चतस्रीः कन्यका उत्पादितवती। पूर्णमासेन सरस्वतीगर्भाद् विरज-पर्वसनामानौ द्वौ पुत्रौ उत्पादितौ। विरजस्य पुत्रः सुधामा बभूव, तस्य वैराजः पुत्रस्तपसं प्राचीं दिशं समाश्रितवान्। पर्वसस्य पर्वजागर्भाद् यज्ञवाम-कश्यप नामानौ धर्मनिर्णायकौ वंशवृद्धिकरौ च द्वौ पुत्रौ जातौ। मरीचिपुत्रस्य कश्यपस्य वंशे उत्पन्ना अनेके ऋषयो गोत्रकारका अभूवन्। वा० पु० २८।८-१३; ६५। १०९-११८।

## पुलस्त्यवंशः—४

तृणविन्दुना हि अनुपमसुन्दरी - इडविडानाम्नी आत्मीया कन्यका पुलस्त्याय मुनये समर्पिता। पुलस्त्यद्वारा इडविडायां विश्वश्रवा नामकः पुत्रो जातः। विश्वश्रवसश्चतस्रो भार्या आसन्—प्रथमा देव-गुरो बृहस्पतेर्दुहिता देववर्णिनी द्वितीया तृतीया च माल्यवतः कन्यके पुष्पोत्कटा वाका च, चतुर्थी कैकसी नाम्नी मालिनः पुत्री बभूव। तासु देववर्णिनी पुलस्त्यसंयोगात् कुबेरनामकं सुतमसूत। पुष्पोत्कटायाः प्रहस्त-महापांसु-खरनामानस्त्रयः पुत्रास्तथा कुम्भीनसी नाम्नी एका कन्या च जाता। वाकायाः सन्ततिषु त्रिशिरा-दूषणो-विद्युज्जिह्वो राक्षसश्चेति चत्वारः पुत्रा असलिका नाम्नी चैका कन्यकासीत्। कैकसी तु रावणं कुम्भकर्णं विभीषणं शूर्पणखाञ्च प्रासोष्ट। एते पुलस्त्यवंश्याः क्रूरकर्माणः देवैरपि दुर्दम्या वेदाध्यायिनः, तपोनिष्ठः, यज्ञकर्तारः, लब्ध-वरा असंख्यातपुत्रपौत्रसमन्विताश्चासन्। एतेषां यातुधान-ब्रह्मधान-दिवाचर-निशाचर-नैर्ऋत-कौशिक-राक्षसेति सप्त संज्ञा आसन्। एषां बल-पराक्रम-शील-स्वभावादीनां यथार्थं ज्ञानं केषाञ्चिदपि नासीत्। यतस्ते महामायाविनः आसन्। वा० पु० २८।२२-२४; ७०।३१-६३।

## पुलहवंशः—५

पुलहपत्नी क्षमा ब्रह्मतुल्यतेजस्विनः कीर्तिमन्तः कदर्म-अम्बरीष-सहिष्णुनामकान् त्रीन् तनयान् पीवरीनाम्नीमेकां कन्यकाञ्च प्रासूत। कर्दमपत्नी अत्रिपुत्रीः श्रुतिः शङ्खपादनामकमेकं पुत्रं काम्यानाम्नीमेकां कन्यकाञ्च प्रासोष्ट। शङ्खपादेन स्वां भगिनी काम्यां मनुपुत्रेण राज्ञा प्रियव्रतेन सह विवाह्य तपस्तप्तुं दक्षिणस्यां दिशि प्रस्थितः। काम्यया च प्रियव्रतसंयोगात् स्वयम्भुवतुल्या दशपुत्राः समुत्पादिता, द्वे कन्यके अपि जनिते। येषां सन्ततिभिः क्षत्रकुलस्य वृद्धिर्जाता। पुलहस्य तृतीयेण पुत्रेण सहिष्णुना यशोधरी नाम्न्यां भार्यायां कामदेवनामक एकः पुत्र उत्पादितः। अपि च पुलहसन्ततयश्च सर्वप्रकारा मृग-व्याल-दंष्ट्रिणो जीवा आसन्। एतदतिरिक्ता भूत-प्रेत-पिशाच-सर्प-भ्रमर-मयूर-वानर - किन्नर - किम्पुरुषास्तथान्यान्यजीवा मायाविनः क्रोधवशा जीवसमूहाः पुलहसन्ततय आसन्। वायुपुराणे २८।२५-३०; ७०।६४-६६

## क्रतुवंशः—६

क्रतोः पत्नी सन्नतिः अङ्गुष्ठपर्वसमशरीरान् सूर्यवत्तेजस्विनः षष्ठि-सहस्राणि वाल्यखिल्यान् अजनयत्। एषां न भार्या आसन् नापि

पुत्रादयो जाताः, नवा तेषां विवाहोऽभवत्। इमे ऊर्ध्वरेतसो नैष्ठिक-ब्रह्मचारिणः सर्वदा ब्रह्मणि लीनाः सन्तः सूर्यरथस्य चतुर्दिशं व्याप्यारुगस्याग्रे प्रचलन्ति प्रलयपर्यन्तं च चलिष्यन्ति। एषां पुण्यात्म-सुमति नाम्न्यौ द्वे अनुजे आस्ताम्। ते द्वे अपि पूर्णमासमुतस्य पर्वसस्य पुत्रवधू बभूवतुः। महर्षिणा क्रतुना सन्तत्यभावाद् अगस्त्यस्य पुत्रः धर्मिष्ठः इध्मवहः स्वपुत्ररूपेण स्वीकृतः। अतोऽगस्त्यवंशजा अपि क्रतुवंशजा उच्यन्ते। पुलहेनागस्त्यपुत्रो दृढाश्वः पुत्ररूपेण स्वीकृता आसीत्। अतः पुलहवंशजा अपि अगस्त्यवंशजाः कथ्यन्ते। महर्षिणा पुलस्त्येनापि स्वान् वंशधरान् राक्षसकर्मणि निरतान् दृष्ट्वाऽगस्त्यपुत्रः स्वपुत्ररूपेण वृतः। अतः पुलस्त्यवंशजा अपि अगस्त्यवंशजा उक्ताः सन्ति। एते सर्वे सगोत्रत्वात् परस्परं विवाहायायोग्या अभिमताः। अर्थात् एषां समेषां परस्परं विवाहो न भवति। वायुपुराणे २८।३१-३३।

## अत्रिवंशः—७

अत्रिमुनेः दश स्त्रिय आसन् या परमसुन्दर्यः पतिव्रताश्चासन्। तासु स स्वसमानान् दश पुत्रानुत्पादयामास। ते परमकान्तिमन्तः तपोनिष्ठा वेदपारगामिनो योगिनश्च बभूवुः। तेषु त्रयोऽतिविख्याता यशस्विनः तेजस्विनो ब्रह्मवादिनश्चाभवन्-सोमो दत्तात्रेयो दुर्वासाश्च। एते त्रयः क्रमशो ब्रह्म-विष्णु-शिवानामंशैरुत्पन्ना आसन्। दत्तात्रेय सम्बन्धे पौराणिका एवं गाथा गायन्ति'।

विष्णुपुराणानुसारमत्रेः पत्नी अनसूयैव चन्द्रमसं दुर्वाससं दत्तात्रेयञ्चाजनयत्। अत्रेरनेके पुत्रप्रपौत्रा बभूवुः। सोमवंशेऽनेके गोत्रप्रवर्तका जाताः। वा० पु० २८।१८-१९; ७०।६७-७७। वि० पु० १।१०।८)।

## वसिष्ठवंशः—८

ऊर्जाया गर्भाद् वसिष्ठस्य महर्षे सप्त पुत्रा अजायन्त तथा चैका कन्या समुत्पन्ना, यस्या नाम पुण्डरीकाऽभवद् या द्युतिमतो माता पाण्डोश्च प्रिया पत्नी बभूव। रजः-पुत्र-अर्द्धबाहु-सवन अनघ-सुतपः-शुक्रा एते सप्त वसिष्ठपुत्रा सप्तर्षयः प्रोच्यन्ते। मार्कण्डेयमुनिपुत्री यशस्विनी रजसः सयोगाद् राजन्य-केतुमत्-प्रजापतिनामकान् त्रीन् पुत्रानजनयद्, यैः तपसे प्रतीची दिक् समाश्रिताः। अपिच वसिष्ठादरन्त्यां

---

१ अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषम्।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते॥ वा० पु० ७०।७७

शक्तिः, ततोऽदृश्यन्त्यां पराशरमुनिः, ततः सत्यवत्यां व्यासदेवः, ततोऽरण्यां शुकः, ततो भूरिश्रवादयः षट् पुत्रा पीवर्यां जाताः। तेषां परम्परायां वसोःपुत्र उपमन्युरभवत्। एवं वसिष्ठवंशेऽनेके गोत्रप्रवर्तका जाताः। तथा च सूर्यस्य गभस्तिभिरिव लोकपितामहस्य ब्रह्मणोऽष्टानां भृग्वादिपुत्राणां पुत्रपौत्रप्रपौत्रादिभिरिदं समस्तं भूमण्डलं व्याप्तम्।

## मनुकन्यावंशविवरणम्

सृष्ट्यादौ स्वायम्भुवस्य मनोः शतरूपायां पञ्च सन्ततयः समुत्पन्नाः। तत्र प्रियव्रत उत्तानपादश्चेति द्वौ पुत्रौस्तः। देवहूतिः, आकूतिः, प्रसूतिश्चेति तिस्रः कन्या आसन्। तासु तिसृषु कन्यासु देवहूतेर्विवाहः कर्दमेन मुनिना सहाजायत आकूती रुचिना सह विवाहिता, प्रसूतेः पाणिग्रहण दक्षेण कृतम्।

(१) मनुना शतरूपेच्छया आकूतेर्विवाहः प्रजापतिना रुचिना सह एतन्निश्चित्य कृतो यदेतस्यां यः पुत्रो भविष्यति तमहं ग्रहीष्यामि। अनन्तरं रुचितं आकूत्यां यज्ञो दक्षिणा च सममेव समुत्पन्नौ द्वावपि क्रमशो भगवंतो विष्णोः तथा लक्ष्म्या अंशौ आस्ताम्। पूर्वनिश्चयानुसारं यज्ञनामकः पुत्रो मनुना गृहीतः दक्षिणानाम्नी कन्या च रुचिना गृहीता। अनन्तरमेनयोर्द्वयोः परस्परं विवाहो जातः। यज्ञाद् दक्षिणायां द्वादशपुत्रा अभवन्, येषु सर्वप्रथमः तोष आसीत् तथा सर्वतः कनीयानासीद्रोचनः। एते सर्वे तन्मन्वन्तरस्य देवता अभवन्।

(२) कर्दमेन मुनिनो देवहूत्यां नव कन्या एकश्च पुत्रः कपिलोनाम महामुनि समुत्पादितः। कर्दमादुत्पन्नानां देवहूतेः नवानां कन्यानां विवाहो ब्रह्मणो मानसपुत्रैः मरीच्यादिभिर्नवभिर्महर्षिभिः साकमजायत। यासां वंशविवरणमग्रे वक्ष्यते।

(३) दक्षेण प्रसूतेर्गर्भात् षोडशकन्यकाः समुत्पादितः, यासु त्रयोदश धर्माय, एका अग्नये, एका पितृभ्यः, एका च शिवाय प्रदत्ता। धर्मस्य मूर्तिनामकपत्न्यां नर-नारायणौ समुत्पन्नौ। अग्निपत्नी स्वाहातः त्रयः पुत्रा समुत्पन्नाः, येभ्यः ४५ अग्नीनामुत्पत्तिरजायत। पितरपत्नी स्वधा वयुना-धारिण्यौ च द्वे कन्ये समुत्पादितवती। भवस्य पत्न्याः सत्याः कापि सन्ततिर्न जाता, यतो हि सा स्वपितरि पत्युः प्रतिकूलत्वादप्रौढावस्थायामेव दक्षयज्ञे एव योगद्वारा स्वं शरीरं त्यक्तवती। श्री. भा. ४।१।१-६६

## दक्षकन्यासन्ततिदिग्दर्शनम्

देवर्षेर्नारदस्योपदेशेन हर्यश्व-शबलाश्वसंज्ञकेषु पुत्रेषु दिगन्ते समा-

श्रयणात् पुत्रोत्पत्या विरक्तो दक्षः पुनः सृष्टिकामनया वीरणस्य प्रजापतेः पुत्र्यामसिक्नीनाम्न्यां भार्याया षष्ठिकन्या उत्पाद्य १० धर्माय १३ कश्यपाय २७ चन्द्रमसे ४ अरिष्टनेमये २ बहुपुत्राय २ अङ्गिरसे २ कृशाश्वाय च सन्तानोत्पत्यर्थं समर्पितवान्। तत्र—

## (क) धर्मवंशः

साध्या, वसुः, विश्वा, मरुत्वती, भानुः, मुहूर्ता, लम्बा, यामी, सङ्कल्पा, अरुन्धती चेति दश धर्मस्य पत्न्य आसन्, या दक्षेण धर्माय समर्पिता आसन्[1]।

तत्र साध्यया धर्मस्य संयोगाद् द्वादशपुत्रा उत्पादिताः, ये साध्यगणनाम्ना प्रसिद्धा जाता.। धर्मसंयोगाद्वस्वामष्टौ वसव उत्पन्नाः, ये साध्यानामनुजरूपेण स्मृताः। धर्मस्य विश्वानाम्न्यां पत्न्या दश विश्वेदेवा अजायन्त। एव मरुत्वत्यां मरुद्गणः, मुहूर्ताया मुहूर्ताभिमानी देवगणः, लम्बाया घोषा, याम्या नागवीथ्यः, सङ्कल्पाया सङ्कल्पः, अरुन्धत्याश्च पृथिव्या अन्यान्यजीवा उत्पन्नाः। धर्मपुत्रस्य प्रभासवसो. संयोगाद् बृहस्पतेर्भगिन्या वरस्त्रीनाम्न्या विश्वकर्मा समुत्पन्नो यो हि समस्ताना शिल्पिना प्रजापतिर्बभूव। स देवभवन प्रासादाट्टालिकोद्यान-तड़ाग-वाटिका-विविधभूषण-रथ-विमानादीना निर्माताऽभवत्। तदाविष्कृतशिल्पविद्याश्रयणेनाद्यापि बहवो जना जीविकानिर्वाहकुर्वन्तो जीवन यापयन्ति। एवं धर्मवंशेऽनेके योग्यतमाः सन्ततय. समुत्पन्ना.। वा. पु ६६।२-३५।

## (ख) कश्यपवंश :

दक्षप्रजापतिर्हि. परमसौभाग्यशालिनी. स्वकीयाः १३ कन्यका मरीचिपुत्राय महर्षये कश्यपाय समर्पितवान्। तासा नामानि यथा (१) अदितिः (२) दितिः (३) दनुः (४) अरिष्टा (५) सुरसा (६) सुरभि. (७) विनता (८) ताम्रा (९) क्रोधवशा (१०) इरा (११) कद्रू. (१२) विश्वा (१३) मुनिश्च[2]।

---

१. अरुन्धती वसुर्यामी लम्बा भानुः मरुत्वती।
सङ्कल्पा च मुहूर्ता च साध्या विश्वा तथैव च॥
धर्मपत्न्यो दशत्वेता दक्षः प्राचेतसो ददौ। वा. पु. ६६।२.३

२. यास्तु शेषास्तदा कन्या. प्रतिजग्राह कश्यपः।
त्रयोदश महाभागाः सर्वास्ता लोकमातरः॥ वा. पु. ६६।५४
अदितिर्दितिर्दनुश्चैव अरिष्टासुरसा तथा।
सुरभिर्विनता तद्वत्ताम्रा क्रोधवशा इरा॥
कद्रूर्विश्वा मुनिस्तद्वत् तासां पुत्रान्निबोधत। म. पु ६।१.२

## [१] अदितिसन्ततयः

तत्र कश्यपसंयोगाददितेर्गर्भाद् इन्द्रः, धाता, अर्यमा, मित्रः, वरुणः, अंशुः, भगः, विवस्वान्, पूषा, पर्जन्यः, त्वष्टा, विष्णुश्चेति द्वादश तनया अजायन्त । अदितेर्गर्भादुत्पन्नत्वादेते द्वादशादित्या उच्यन्ते । एषु विष्णुः सर्वेभ्यः कनीयानपि सर्वश्रेष्ठः सर्वमान्यश्चाभिमतोऽस्ति ।

इन्द्रश्च देवतासु महान् वलशाली, शताश्वमेधयज्ञपूर्णकर्ता, गुणसमूहैः, सम्पन्नः, धर्मादिकार्येष्वग्रणीः, जप-तपो-बुद्धि-बल-शास्त्रीयज्ञानपराक्रमेषु सर्वश्रेष्ठोऽस्ति । अयं त्रिलोकपालकोऽस्ति । अतः त्रिलोकनाथः प्रोच्यते । एवमिन्द्रो देवतानां राजा स्वामी नाथश्चास्ति ।

## [२] दितिसन्ततयः

महर्षिकश्यपसंयोगाद्दितेर्द्वौ पुत्रौ जातौ । यदा पुष्करक्षेत्रे कश्यपस्याश्वमेधयज्ञान्तर्गतेऽतिरात्रयागे सौत्यदिवसावसरे सहस्रवर्षगर्भवती दितिः पत्नीत्वेन कश्यपवामपार्श्वे उपविष्टाऽऽसीत् तदा प्रथमः पुत्रो गर्भान्निर्गत्य यज्ञमण्डपे ऋत्विगर्थं सुसज्जिते स्वर्णसिंहासने समासीनो भूत्वा महर्षिकश्यपवद्वेदव्याख्यानं कर्तुमारभत । अनेनाद्भुतकर्मणा स हिरण्यकशिपुनाम्ना स्मृतः[१] ।

द्वितीयः पुत्रो हिरण्याक्षः तृतीया च तयोरनुजा भगिनी सिंहिका समुत्पन्ना या विप्रचित्तेर्भार्या राहोश्च माता जाता । हिरण्यकशिपोरतितेजस्विनो महापराक्रमशालिनश्च चत्वारः पुत्रा अभवन्—प्रह्लादः, अनुह्लादः, संह्लादः, ह्रदश्चेति । तत्र ह्रदस्य ह्राद-निशुन्दौ पुत्रौ बभूवतुः । निःशुन्दस्य च शुन्दोपशुन्दौ तनयावभूताम् । सुन्दस्य ताडकायां त्रयः पुत्रा उत्पन्नाः—ब्रह्मघ्नो मूको मारीचश्च । तत्र ताडका विश्वामित्रयज्ञे विघ्नानुपस्थापयती श्रीरामेण निहता, मूकश्चेन्द्रकीले तपस्यतार्जुनेन किरातयुद्धप्रसङ्गे हतः । अनुह्लादस्य वायुः सिनीवाली च जातौ । संह्लादस्य वलिष्ठा निवातकवचा जाताः, ये महाभारतावसरे पार्थेन परलोकं प्रापिताः । प्रह्लादस्य च पुत्रो विरोचनो जातः । ततोऽजनि बलिः, बलेर्बाणासुरः पुत्रः शकुनी पूतना चेति द्वे कन्यके जाते । बलेरेव पुत्रा आसन्—गवेष्ठिः काल नेमिः जम्भो वाष्कलश्च । तत्र गवेष्ठिनः शुम्भनिशुम्भौ, कालनेमेर्देवान्तक-नरान्तकौ समुत्पन्नौ । बलेः पुत्रपौत्रसंख्या अनन्तास्ति । ते सर्वे इन्द्रवन्मनस्विनः परमपराक्रमशालिनश्च बभूवुः ।

---

१. दितेर्गर्भाद्विनिःसृत्य तत्रासीनो सुसंसदि ।
हिरण्यकशिपुस्तस्मात् कर्मणा तेन स स्मृतः ॥ वा. पु. ६६।५१

दितेरेव पुत्रा मरुद्गणा अप्यासन् ये दितेरुदरे प्रविश्येन्द्रेण कुलिश-द्वारा ४९ भागेषु विभक्ता आसन्। दित्यनुमत्या दैत्याः सन्तोऽपि ते दिवि देवैः सह विचरन्तो यज्ञभाज इन्द्रानुजा अमराश्च प्रख्याताः।[1]

### [३] दनुसन्ततयः

कश्यपसंयोगाद्दितेर्गर्भाद्विप्रचित्यादयः शतपुत्रा अभूवन्, ये दनोरुत्पन्नत्वाद् दानवाः कथ्यन्ते। तेषु मयः, शम्बरः, तारकः, स्वर्भानुः, वृषपर्वा, पुलोमा, विप्रचित्तिश्चेति प्रसिद्धतमा आसन्। स्वर्भानोः कन्या प्रभा, पुलोम्नः पुत्री शची, मयस्य तनयोपदानवी, वृषपर्वणः सुता शर्मिष्ठा चासीत्। तत्र प्रभा प्रतापिनं पुत्रं नहुषं प्रासोष्ट, शची बलवन्त तनयं जयन्तमसूत, उपदानवी चक्रवर्तिनं दुष्यन्तमजनि, शर्मिष्ठा च सार्वभौम राजानं पुरुं जनयामास। मयस्य पुत्रो मायावी दुन्दुभिः, कन्या चैका मन्दोदरी नाम्नी समुत्पन्ना या रावणेन सह विवाहिता। विप्रचित्तेः सिंहिकागर्भादतिभयङ्करा महाबलिष्ठाः १४ पुत्रा अभूवन् येषु राहुः प्रमुख आसीत्। एते देवैरपि अजेयाः परमदारुणाः सैंहिकेयाः कथ्यन्ते। दनोः पुत्राः परमपराक्रमेण क्रूरा मायाविनः तपस्विनो लब्धवराश्चासन्। एषां यज्ञेषु निष्ठा नासीत्, एते धर्मविरोधिनो ब्राह्मणद्वेषिणश्चासन्।[2]

दितेर्दनोश्च पुत्रा असुरा अप्युच्यन्ते, परं स्वर्भानुर्दैत्यः कथ्यते।[3]

### [४] अरिष्टासन्ततयः

अरिष्टया महर्षिकश्यपसंयोगात् किन्नरगन्धर्वादयो देवयोनयः समुत्पादिताः। ते हि देवलोके निवसन्तो गीतवाद्यद्वारा देवान् सुखयन्ति।

---

१. एते ह्येकोनपञ्चाशन्मरुतो नामतः स्मृताः।
प्रसंख्यातास्तथा ताभ्या दित्या चेन्द्रेण चैव हि॥
तस्मात्ते मरुतो देवाः सर्वे चेन्द्रानुजामराः।
विज्ञेयाश्चामराः सर्वे दितिपुत्रास्तपस्विनः॥ वा. पु. ६७।३०,३४

२. अभवन् दनुपुत्रास्तु वंशे ख्याता महासुराः।
विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः॥
सर्वे लब्धवराश्चैव सुतप्ततपसस्तथा।
सत्यसन्धाः पराक्रान्ताः क्रूरा मायाविनश्च ते॥
महाबला अयज्वानो ह्यब्रह्मण्याश्च दानवाः। वा. पु. ६८।१-३।

३. इत्येते त्वसुराः प्रोक्ताः दैतेया दानवाश्च ये।
स्वर्भानुस्तु स्मृतो दैत्यो ह्यनुभानुर्दनोः सुतः॥ वा० पु० ६८।१४

[५] सुरसासन्ततयः

महर्षि कश्यपसंयोगात् सुरसया एकानेकफणाः सहस्राणि सर्पा जनिताः। तेषां वंशपरम्परा असंख्याताः सन्ति। सर्पाणां राजा तक्षकोऽस्ति।

[६] सुरभिसन्ततयः

सुरभ्या तपोद्वारा भगवन्तं महादेवं प्रसाद्य महर्षिकश्यपसंयोगात् हरः, बहुरूपः, त्र्यम्बकः, अपराजितः, कृष्णाकपिः, शम्भुः, कपर्दी, रैवतः, मृगव्याधः, शर्वः, कपालिश्चेत्येते एकादश रुद्रा[1] उत्पादिताः। अपि च सुरभितः चन्द्रकान्तिवन्निर्मलः कण्ठे नीलमणिशोभासमन्वितो नन्दी नामैको वृषभो जातो यः सुरभेरनुमत्या भगवतः शिवस्य वाहनत्वेन नियुक्तः, सुरभ्या एवोश्चैः श्रवानामकमश्वरत्नमिन्द्रवाहनमुत्पन्नम्। ततो गावो महिष्योऽश्वाश्च सुरभित एव समुत्पन्नाः। (वा० पु० ६६।६८–७७)।

[७] विनतासन्ततयः

महर्षिकश्यपसयोगाद् विनताया द्वौ अरुण-गरुडौ तनयौ समुत्पन्नौ। तत्र गरुडः पक्षिणां राजा भगवतो विष्णोश्च वाहनत्वे प्रतिष्ठित.। अरुणश्च सूर्यस्य रथसारथित्वेन स्थापित। अनयो· ३६ अनुजा भगिन्योऽप्यासन्। यासु विद्युत्सौदामिन्यौ परमप्रसिद्धेस्तः। गायत्र्यादीनि छन्दांसि, पाक्षिणः हव्यवाहनगणश्च विनतात एव समुत्पन्नाः सन्ति। (वा० पु० ६६।६६-६७)

[८] ताम्रासन्ततयः

महर्षि कश्यपसंयोगात्ताम्रायाः श्येनी, भासी, शुकी, क्रौञ्ची, भद्रा, गृध्रिका, धृतराष्ट्रीनामुत्पत्तिरभवत्। तत्र श्येनी अरुणस्य स्त्रीरभवत्। तया च सम्पातिजटायुनामानौ पक्षिणौ जनितौ, सम्पातेरेका कन्या पुत्रश्चैक एव बभूव। जटायोस्तु काक-गृद्ध-अश्वकर्ण नामानः त्रयः पुत्रा अभवन्। गरुडस्य पञ्च स्त्रियोऽभवन्—भासी-क्रौञ्ची-शुकी धृतराष्ट्री-भद्रा च। गरुडस्य संयोगात् आसु बहुविधाः पक्षिणोऽभवन्। येषां संख्या गणयितुं न शक्यते। (वा० पु० ६६।२५-३३)

[९] क्रोधवशासन्ततयः

महर्षिकश्यपसंयोगात् क्रोधवशायां मृगीरावत्यादयः सन्ततयो

---

१. सुरभी कश्यपाद्रुद्रानेकादशविजज्ञिरे।
महादेव प्रसादेन तपसा भाविता सती। वा. पु. ६६।६८

बभूवुः। तासु इरावती भौवनसंयोगादैरावतनामानं गजराजमुत्पादयामास। य इन्द्रवाहनत्वेन नियुक्तो मतङ्गजानां प्रथमो राजा बभूव। *ऐरावतो हि श्वेतमेघ इव शुभ्रवर्णश्चतुर्दन्तोऽतिशोभासम्पन्नो गजराजोऽस्ति।* मृगमन्दातो मृगराज-गवय-महिषोष्ट्र-वराह-खड्गादयो वन्यपशवोऽजायन्त। हरिभद्रातो वानर-तरक्षुप्रभृतिवन्यजन्तव उत्पन्नाः। दंष्ट्रया सिंहव्याघ्रादयो मांसभक्षिण. पशव उत्पादिताः। भूत्या रुद्रानुचरा भूतादयो जनिताः। कशिपया कुष्माण्डसंयोगान्मांसादौ पिशाचदम्पती उत्पादितौ। *यत्पुत्रपौत्रप्रभृतयोऽनन्ता अतिबीभत्साकृतयो निन्द्यकर्म*-कारिणश्च जाता.। (वा० पु० ६९।२०४-३२३)

## [१०] इरासन्ततयः

इरया कश्यपसंयोगात् कमललोचना लतावल्ली-वीरुधाख्याः तिस्रः *कन्याः जनिताः, या क्रमशो वनस्पतीनां वृक्षाणां वीरुधाञ्च मातरो* जाताः। अर्थात्ताभ्य एव वनस्पति-वृक्ष-तृण-गुल्मादीनामुत्पत्तिरजायत। (वा० पु० ६९।३३९-३४२)

## [११] कद्रूसन्ततयः

महर्षिकश्यपसंयोगात् कद्रूः अनेकफणान् सहस्राणि नागान् जनयामास। यत्र शेष-वासुकि तक्षक-कपिल-शङ्ख-जम्भ-कम्बल-अश्वतर-कर्कोटक-धनञ्जय-कालीय-पुण्डरीक-मणयोऽतिप्रसिद्धानागा आसन्, एषु नागाना राजा वासुकिः, सर्पाणां राजा तक्षकश्च नियुक्त.। (वा० पु० ६९।६८-७४)

## [१२] विश्वासन्ततयः

महर्षे कश्यपस्य संयोगाद् विश्वाया कोटिशः यक्ष-रक्षांसि समुत्पन्नानि।[१]

## [१३] मुनिसन्ततयः

पुण्यात्मानो गन्धर्वा अप्सरसश्च मुनेः सन्ततय सन्ति। महर्षिकश्यपसंयोगान्मुनेः गर्भाद् यज्ञक्षेत्रे सुप्रसिद्धा गायका उत्पन्ना ये देवगन्धर्वाः प्रोच्यन्ते—चित्रसेनः, उग्रसेनः, ऊर्णायुः, अनघः, धृतराष्ट्र, पुलोमा, सूर्यवर्चाः, युगपत्, तृणवत्, कलिः, दितिः, चित्ररथा.[२]।

१. विश्वा तु यक्षरक्षांसि जनयामास कोटिशः। (म. पु. ६।४७)

२. गन्धर्वाप्सरसः पुण्या मौनेयाः परिकीर्तिताः। वा. पु. ६९।१

एवं त्रयोदशसु दक्षसुतासु कश्यपपत्नीसु देव-दैत्य-दानव-पशु-पक्षि-वृक्ष-लता-गुल्म-सर्प नाग-यक्ष-राक्षस-किन्नर-गन्धर्वाप्सिरसामुत्पत्तिरजायत ।

अग्निशिरा, पर्जन्य, नारदादय षोडशमुनिपुत्रा देवगन्धर्वा कथ्यन्ते । एभ्योऽवराः ३४ अप्सरसः सन्ति । यत्रालम्बुषा-मिश्रकेशी-तिलोत्तमा-अद्रिका-रम्भा अतिप्रसिद्धाः सन्ति । गन्धर्वा महाविद्वांसः परमतपस्विनो विक्रमशालिनश्च सन्ति । एभ्य एव विद्याधराणां किन्नराणाञ्चोत्पत्तिर्जाता । एवं देवगन्धर्वा विद्याधराः किन्नराश्च देवाना पूजका नृत्यगीतनिपुणा व्यवहारकुशलाश्च सन्ति, तथेन्द्र-महादेव-आदित्यगण-रुद्रगण-वसुगणानामुपासकाः सन्ति । वीरणया हंस-हाहा-हूहू-धीपण-वास-रुचि-तुम्बुरु-विश्वावसवोऽष्टौ गन्धर्वा उत्पादिताः, येषामप्सरसोऽर्द्धाङ्गिन्यो जाता । एतदतिरिक्ता दैविकी नाम्ना विख्याता दशाप्सरस सन्ति--मेनका, सहजन्या, पर्णिनी, पुञ्जिकस्थला, घृतस्थला, घृताची विश्वाची, पूर्वचित्ती, प्रम्लोचा, अनुम्लोचन्ती च । आभ्यो दशभ्यो भिन्ना जन्ममरणरहितस्य नारायणस्याङ्गात् निर्दोषा अनुपमसुन्दरी उर्वशीनाम्नी याप्सरा समुत्पन्ना सा स्वर्गस्यैकादशी अप्सराः प्रोच्यते । एता सर्वाप्सिरसो ब्रह्मवादिन्यो निरन्तर योगाभ्यासनिरताश्च तिष्ठन्ति । अप्सरसा १४ समूहाः प्रसिद्धा सन्ति, याभ्य इन्द्र-विष्णु प्रभृतिभिर्देवैः स्वरूपातिशयिता, प्रदत्ता । आसु तिलोत्तमा महाभाग्यशालिनी परमसुन्दरी चास्ति । स्वरूपेण यौवनेन च समृद्धा लोकविख्याता प्रभावती ब्रह्मणोऽग्निकुण्डादुत्पन्ना । परमकान्तिमती वेदवती ब्रह्मणो वेदीतलान्निर्गता । स्वरूपसम्पन्नातिसुन्दरी हेमा यमस्यास्ति पुत्री, यस्याः शरीरस्याभा तप्तस्वर्णवन्मनोहरा विद्यते । एवमनेकासा तेजस्विनीनामप्सरसा समूहाः सन्ति या विभिन्नदेवतानामृषीणाञ्च पत्न्यो मातरो वा अभूवन् । सर्वाप्सिरस एकरूपाश्चम्पकपुष्पवद्गौरवर्णा सुगन्धितशरीरा सन्ति । यासा दर्शनात् स्पर्शाच्च तत्प्रियजनाः सन्तुष्टा सन्त स्वर्गे आनन्दनिमग्ना बोभूयन्ते । (वा० पु० ६६।१-६५)

### कश्यपपत्नीनां स्वभाववर्णनम्

कश्यपपत्नीषु आदितिर्धर्मशीला, दितिर्बलशीला, दनुर्मायाविनी, सुरभिस्तपस्विनी, अरिष्टा गानप्रिया, विनता भारवहनशीला, आकाशचारिणी च, ताम्रा पाशधारिणी, क्रोधवशा क्रोधवती, इरा अनुग्रहवती, कद्रूक्रूरप्रकृतिका, मुनिश्चाध्ययनशीलास्ति । एता सर्वा कश्यपसन्ततयः धर्म-शील-स्वभाव-सदाचार-बुद्धि-क्षमा-बलैः सात्विक-राजस-तामस प्रकृतयो दृश्यन्ते । देवतासुरगन्धर्वकिन्नराप्सरो यक्ष-राक्षसपिशाचसर्पपशुपक्षि-

लतावल्ली वनस्पतिप्रभृतयः कश्यपसन्ततयः-स्वस्वमातृस्वभावसमशीला दृष्टि-गोचरी भवन्ति ।[1]

गन्धर्वा देवतापेक्षया प्रभावहीना भवन्ति, गुह्यका गन्धर्वापेक्षया प्रभावन्यूना भवन्ति, गुह्यकवद्राक्षसा भवन्ति, किन्तु पिशाचा यक्षापेक्षया प्रभावहीना जायन्ते । एवं रूपेण आयुषा, बलेन, धर्मेण, ऐश्वर्येण, बुद्धचा, तपसा, विद्याबलेन, पराक्रमेण च गन्धर्व-यक्ष-राक्षस-पिशाचा एते चत्वारो, देवतासुरापेक्षया परस्परं प्रभावहीना भवन्ति ।

## सोमसन्ततिः

दक्षप्रजापतिना चन्द्रमसे प्रदत्तानां २७ कन्यकानां नामानि २७ नक्षत्रनाम्ना प्रसिद्धानि । तत्सन्ततयश्च ज्यौतिषशास्त्रे विवृताः सन्ति ।[2]

एवमरिष्टनेमेः १६, बहुपुत्रस्य च ४, अपत्यानि जातानि । अङ्गिरस ऋचो जाताः कृशाश्वस्य च देवप्रहरणा जाताः ।

तथा च दक्षप्रजापतेः ६४ कन्यकानां सन्ततिपरम्परया समस्तं भूमण्डलं स्वर्मण्डलञ्च व्याप्तं वर्तते ।

पुराणमान्यतानुसारमष्टौ देवगणाः सन्ति । तद्यथा आदित्यगणः, वसुगणः, रुद्रगणः, साध्यगणः, विश्वेदेवाः, मरुद्गणः, भृगुगणः, आङ्गिरसगणश्च । तत्रादित्य-मरुद्-रुद्रगणास्त्रयो मरीचिनन्दनस्य कश्यपस्यात्मजाः सन्ति, तथा त्रयः साध्य-वसु-विश्वेदेवगणा धर्मस्यात्मजाः सन्ति ।[3]

## द्वादशादित्या यथा :

धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥

---

१. मातुलं भजते पुत्रः पितॄन् भजति कन्यकाः ।
यथाशीला भवेन्माता तथाशीला भवेत् सुतः ॥
मातॄणां शीलदोषेण तथाशीलगुणैस्तथा ।
विभिन्नास्तु प्रजाः सर्वास्तयाख्यातिवशेन च ॥ वा० पु० ६६।८०,८१

२. सप्तविंशत्तु याः कन्या दक्षः सोमाय ता ददौ ।
सर्वा नक्षत्रनाम्न्यस्ता ज्यौतिषे चैव कीर्तिताः ॥ वा० पु० ६६।५३

३. आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ।
भृगवोऽङ्गिरसश्चैव ह्यष्टौ देवगणाः स्मृताः ॥
आदित्या मरुतो रुद्रा विज्ञेया कश्यपात्मजाः ।
साध्याश्च वसवो विश्वे धर्मपुत्रास्त्रयो गणाः ॥ वा० पु० ६४।२,३

ततस्त्वष्टा ततो विष्णुरजघन्योऽजघन्यजः ।
इत्येते द्वादशाऽऽदित्या कश्यपस्य सुताः स्मृताः ॥ वा० पु० ६६।६६,६७
वैवस्वतेऽन्तरे चैते आदित्या द्वादश स्मृताः ।
इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणो यमः ॥
विवस्वान् सविता पूषा अंशुमान् विष्णुरेव च ।
एते सहस्रकिरणा आदित्या द्वादश स्मृताः ॥ म० पु० ६।३४

**एकादश रुद्रा यथा :**

अजैकपादहिर्बुध्न्यमूर्ध्वकेतुं ज्वरं तथा ।
भुवनं चेश्वरं मृत्युं कपालं चैव विश्रुतम् ॥
देवानेकादशैतांस्तु रुद्रास्त्रिभुवनेश्वरान् ।
तपसा तेन महता सुरभी तानजीजनत् ॥ वा० पु० ६६।६९,७०
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश गणेश्वराः ॥ म० पु० ५।२९,३०

**द्वादश साध्या यथा :**

मनोऽनुमन्ता प्राणश्च नरो यानश्च वीर्यवान् ।
चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा ॥
प्रभवोऽथ विभुश्चैव साध्या द्वादश जज्ञिरे । वा० पु० ६६।१५,१६

**अष्ट वसवो यथा:**

धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ वा० पु० ६६।२०
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ म० पु० ५।२१

**दश विश्वेदेवा यथा :**

विश्वेदेवास्तु विश्वाया जज्ञिरे दश विश्रुताः ।
क्रतुर्दक्षः श्रवः सत्यः कालः कामो धुनिस्तथा ॥
कुरुवान् प्रभवांश्चैव रोचमानश्च ते दश ।
धर्मपुत्राः स्मृता ह्येते विश्वायां जज्ञिरे शुभाः ॥ वा० पु० ६६।३१,३२

**देवासुरसङ्ग्रामः**

मरीचिपुत्रस्य महर्षेः कश्यपस्य त्रयोदशसु पत्नीषु अदितेर्गर्भाद् इन्द्रादयो द्वादशादित्याः, दितेर्गर्भाद् दैत्यौ (हिरण्यकशिपु-हिरण्याक्षौ)

तथा दनोर्गर्भाद् दानवा विप्रचित्त्यादयः शतपुत्रा अभूवन्। सात्त्विकप्रकृतितया, अदितिपुत्रा आदित्या देवताः कथ्यन्ते, आसुरीप्रकृतिकतया दितेर्दनोश्च पुत्रा असुरनाम्ना प्रख्याता सन्ति। विभिन्नासु मातृषु एकस्मादेव पितुरुत्पन्नत्वादेते परस्परं भ्रातरः सन्ति। समये-समयेऽधिकार प्राप्तये एषु परस्परं यः विवाद उपतिष्ठते स देवासुरसङ्ग्राम कथ्यते। दायनिमित्त तेषां बहवः सङ्ग्रामा अभवन्, पर वाराहकल्पे देवासुरयोः द्वादश युद्धानि बभूवुः। तत्र प्रथमे युद्धे वाराहेण स्वदंष्ट्राभ्यां समुद्रे निमग्नां पृथिवीमुद्दधार, तथा सघर्षे उपस्थिते तद्द्वारा हिरण्याक्षस्य निधनमभवत्। द्वितीये युद्धे दैत्यराजो हिरण्यकशिपुः भगवता नरसिंहेन उरो विदार्य निहितः। तृतीये युद्धे लोकत्रय विजित्येन्द्रासनारुढतया वामनेन बलिर्बद्धः। चतुर्थे युद्धेऽमृतमन्थनावसरे दैत्यराजः प्रह्लाद इन्द्रेण पराजितो येन प्रह्लादपुत्रो विरोचनो नित्यमिन्द्रस्य संहाराय प्रयततेस्म। अन्ते इन्द्रेण परमपराक्रम प्रदर्श्य पञ्चमे तारकामये घोरे संग्रामे तस्य संहारः कृतः। षष्ठ आडीवको देवासुरसंग्राम आसीत्। सप्तमे असुराणामेकः सुरचितो दुर्ग आसीत्, यस्य रक्षायां तत्परा असुरा देवतानां प्रतिष्ठां न सहन्तेस्म। भगवता त्र्यम्बकेण शिवेन तस्य त्रिपुरदुर्गस्य विध्वंसनं विधायासुरा निसंहृता। अष्टमेऽन्धकारकोऽसुरराक्षसैः सह देवानां संग्रामोऽजायत, यत्र पितरगणा अपि साहाय्यं कुर्वन्तिस्म। भगवतो विष्णोः साहाय्यमवाप्य महादेवेन तेषां दानवासुरराक्षसानां समूलोन्मूलनं कृतम्। नवमं युद्धं महाबलशालिना विप्रचित्तिना सहाभवत्, यत्र स मायारूपं धृत्वा युध्यतेस्म। इन्द्रेण तस्य ध्वजं लक्ष्यीकृत्य तच्छित्त्वा भूमावपातयत्, तेन सह युद्ध्यमानान् समस्तान् दानवासुरराक्षसान् संहृत्य स पराजितः। दशमे युद्धे राज्ञा रजिना देवैः सह महति कोलाहलनामके युद्धे सर्वेऽसुराः पराजिताः। एकादशं हालाहलं युद्धं, द्वादशन्तु घोरकोलाहलं युद्धजानम्। देवासुरयोर्मध्ये इमे एव द्वादश युद्धानि अभूवन् यत्र द्वयोरपि पक्षयोर्विनाशोऽजायत, तथा प्रजावर्गस्यापि महदमङ्गलं जातम्।[1]

दैत्यराजो हिरण्यकशिपुः १००.७२८०.००० वर्षपर्यन्तं समस्ते त्रैलोक्ये राजपदे प्रतिष्ठित आसीत्। तदनन्तरं पर्यायक्रमेण बलिर्दैत्यानां राजाजायत, यः १०००६०२० वर्षपर्यन्तं राज्यपदस्याधिकारी बभूव। यावद्वर्षपर्यन्तं बली राज्यस्य स्वामी आसीत्, तावद्वर्षपर्यन्तं प्रह्लादोऽ-

---

१. एते देवासुरा वृत्ताः संग्रामा द्वादशैव हि।
देवासुरक्षयकराः प्रजानामशिवाय च॥ वा. पु. ९७।९७

सुरैः सह तद्राज्यभारग्रहणं कृतवानासीत् । असुरेषु महाबलशाली हिरण्यकशिपुः, प्रह्लादो बलिश्चेत्येते त्रयः परमतेजस्विनोऽधिकबलशालिन इन्द्रवत्पराक्रमिणश्चाभवन् । एभिर्दैत्यैरिदं समस्तं जगद् दशयुगपर्यन्तं समाक्रान्तमासीत् । तदनन्तरं दशयुगवर्षपर्यन्तमदो राष्ट्रं निष्कण्टकमासीत् । तदवधौ इन्द्रस्त्रैलोक्यस्य रक्षां करोति स्म ।[1]

देव-दैत्य-दानव-वंशावली




पुराणानामनुशीलनेन प्रतीयते यद् देवासुराः पाण्डवकौरवसदृशा एकस्यैव वंशस्यासन्, तेषां वंशपरम्पराऽपि एकस्मादेव मूलपुरुषाद् महर्षेः कश्यपाद् विकसिता तथा तद्वदेव तेषां पारस्परिकः संघर्षोऽपि वंशक्रमा-

१. हिरण्यकशिपू राजा वर्षाणामर्बुदं बभौ ।
तथा शतसहस्राणि ह्यधिकानि द्विसप्ततिः ॥
अशीति च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत् । वा० पु० ९७।८८
दैत्यसंस्थमिदं सर्वमासीद् दशयुगं किल ।
अतः परं ततः सर्वं राष्ट्रं दशयुगं पुरा ॥
त्रैलोक्यमव्ययमिदं महेन्द्रेण तु पालितम् । वा. पु. ९७।९२

नुगत एवासीत्। पुराणेष्वनेकत्र दैत्यदानवशब्दा पर्यायरूपेण प्रयुक्ता सन्ति। दितेर्गर्भादुत्पन्नौ द्वौ हिरण्यकशिपु-हिरण्याक्षौ दैत्यौ सन्तावपि बहुत्र दानवावुक्तौ स्त। एव दनोर्गर्भादुत्पन्ना विप्रचित्यादयो दानवा अप्यनेकत्र दैत्या प्रोक्ता सन्ति। दिति-दनुपुत्राणामदिते पुत्रै साक क्रमागतो विरोध आसीदनोऽदितेर्वंशजाना विरोधे दैत्यशब्दो दानवशब्दश्च पर्यायवाचिनौ बभूवतु पुराणा विरोधे तेऽसुरा अप्युच्यन्ते।

## देवासुरसङ्ग्रामस्यैतिहासिक महत्त्वम्

भारतीय प्राचीने राजनैतिके इतिहासे देवासुराणा पारस्परिकसघर्षस्य महत्त्वपूर्ण स्थान विद्यते यस्य विवरण प्राय प्रतिपुराण प्राप्यते। देवानामसुरै सह सघर्षस्य मूल कारण राजनैतिकमस्ति। असुरास्तपस्विन पराक्रमिणश्चासन्नथापि राजसत्ताया देवानामेवाधिकार आसीन्नासुराणाम्। अतो दायनिमित्त तेषा भूयो-भूयो जायतेस्म सघर्ष। एतदतिरिक्त यज्ञधर्मेण प्रभाविता तदानीन्तना प्रजा यज्ञेषु देवेभ्य एव बलि ददतिस्म, नासुरेभ्य। तेनानादृता ईर्ष्यालवो दानवा समये समये पराजेतु देवानुपक्रमन्तेस्म।

एव शासनसत्तायामधिकारप्राप्तये देव-दैत्ययो परस्पर सघर्षो भवतिस्म। युद्धे पराजिता दैत्या तपस्यया शक्तिसम्पन्ना भूत्वा युध्यन्ते स्म। कियता समालोचकाना मतमस्ति यद्देवदानवसघर्षो धर्माधर्मसंघर्षमात्रमासीत्। अर्थात् देवाना विजयो धर्मस्य विजय, तथा दानवाना विजयोऽधर्मस्य विजय आसीत्, किन्तु सूक्ष्मेक्षिकया विचारे क्रियमाणे निष्कर्षो नि सरति यद् दानवसस्कृति सर्वथाऽधर्मस्य प्रतीकरूपा नासीत्, यतो हि अनेके दानवा महातपस्विन आसन् तथा तेषा तपश्चर्याया स्वाभिमान आसीत्। ते स्वेन तपोबलेन लोकपितामह ब्रह्माण सर्वसहारक भगवन्त सदाशिव च प्रसाद्य तयोरनुकम्पया शक्तिसम्पन्ना भवन्ति स्म। स्वेष्टदेवप्रभावेण शक्तिमन्तो भूत्वा ते देवान् पराजित्य तान् यज्ञभागाद् वञ्चितानपि कुर्वन्तिस्म। विविधतपश्चर्याप्रक्रियाया दत्तचित्ता अपि ते सर्वथा धार्मिका नासन्, किन्तु परपीडनायैव ते तपस्यन्ति स्म। देवाना तपश्चर्याया क्वाप्युल्लेखो न मिलति। ते दानवै पराभूता सन्तो ब्रह्म विष्णुमहेशाना शरणमुपेत्य स्तुतिभिस्तान् प्रसाद्य तेभ्य स्वाभीष्टसिद्धये विविधानुपायान् लब्ध्वा सफला भवन्ति स्म। त्रिदेवा दानवाना विनाशस्योपायानपि निर्दिशन्ति स्म। ब्रह्मा यस्मै दानवाय वरप्रदानमकरोत् तस्य वधो विष्णुना शिवेनान्येन वा जायते स्म। यस्मै च शिवो वर ददातिस्म तस्य वधो विष्णुद्वाराऽन्येन वा जायते स्म। एव स्वेष्टदेवाति-

रिक्तदेवद्वारा एवासुराणां वधो भवतिस्म । वस्तुतो दानवानां तपश्चरणं स्वधर्मो नासीत्, किन्तु शासनसत्तायामधिकारप्राप्त्यर्थं ते तादृशी कठिनतरां तपश्चर्या कुर्वन्ति स्म । अतोऽस्यां परिस्थितौ देवासुरसंघर्षो धर्माधर्मयोः सघर्षमात्रमिति स्वीकरणं नोचितं प्रतिभाति ।

## दैत्यदानवानां शक्तिस्रोतः

पुराणानां पर्यालोचनया प्रतीयते यद् देवानां दानवानां चाभीष्टदेवौ प्रायो ब्रह्मा शिवश्चास्ताम्, तौ प्रति तेषां महती निष्ठा चासीत् । समये समये च स्वार्थसिद्धये घोरया तपश्चर्यया तौ प्रसाद्य ते ताभ्यो वर लब्ध्वा महान्तो बलिष्ठाः सन्तः सुरान् बाधन्तेस्म । अधिकांशानां दैत्यानां दानवानामिष्टदेवो ब्रह्मदेवः शिवो वाऽसीत् । तयोरुग्रया तपस्यया ते तौ प्रसाद्य विविध वरं संप्राप्य स्वाभीष्टं साधयन्तिस्म । ब्रह्मणो भक्तेषु— हिरण्यकशिपुः, हिरण्याक्षः, अन्धकः, जालन्धरः, महिषासुर, नमुचिः, तारकः, कालनेमिः बलप्रभृतयश्चासन् । तथा शिवभक्तेष्वाडि-वृत्र-बाणासुराः प्रमुखा आसन् । तेषु नृसिंहेन हिरण्यकशिपोः, वाराहेण हिरण्याक्षस्य, रुद्रेणान्धक-जालन्धरयोः, तारकस्य गुहेन कालनेमेर्हनुमता, दुर्गादेव्या महिषासुरस्य, नमुचि - बल - वृत्रासुराणामिन्द्रेण, बाणासुरस्य विष्णुना निग्रहो जातः ।

त्रेतायुगे दैत्यदानवाना स्थानं राक्षसैर्गृहीतम् । दैत्यदानववद् राक्षसा अपि तपसि संलग्ना सन्तो यज्ञाना विरोधं कुर्वन्तिस्म । भारतस्य दक्षिणे भागे दण्डकारण्ये जनस्थाने च तेषां निवासस्थानमासीत् । मारीच-सुबाहू तेषां नेतारौ बभूवतुः । राजर्षिविश्वामित्रस्य यज्ञे इमौ बहुविधं विघ्नमुपस्थापयताम् ।[१]

तदानी लङ्काया लोकरावणस्य रावणस्याधिपत्यमासीत् । सो हि साङ्गस्य वेदस्याध्ययनं कृत्वापि तीव्रेण तपसा भगवन्तमाशुतोषं प्रसाद्य तत आत्मनोऽवध्यत्वस्य वरदानं प्राप्य स्वीयया राक्षस्या प्रकृत्या त्रिलोकं त्रस्तं चकार ।[२]

संयोगतो यदा तेन जनस्थानात् श्रीरामस्य भार्या जनकनन्दिनी-मपहृत्य सा लङ्कायामानीता तदा स ऋक्ष-वानरसेनासहयोगेनाक्रम्य

---

१. वर्तमाने महायज्ञे मारीचो नाम राक्षसः ।
भ्राता सुबाहुना तत्र विघ्नं कर्तुमुपस्थितः ॥ प०पु० सृ०खं० २६६।१२५

२. राक्षसोऽसौ महावीर्यो वरदानात्तु गर्वितः ।
त्रीँल्लोकान् पीडयामास देवदानवमानुषान् ॥ प० पु० सृ० खं० २६६।२६

सकुलं तं पञ्चत्वं प्रापयत्। दैत्य-दानव-राक्षसानां क्रमबद्ध वंशवली पुराणेषु नोपलभ्यते, किन्तु यत्र तत्र तेषां वंशानुगतसंघर्षस्य विवरणमवाप्यते। रावणस्य वैशालीराजवंशेन सह सम्बन्ध आसीदिति पार्जिटरः।[1]

ब्रह्मणो मानसपुत्रेण पुलस्त्यमुनिना इलविलायां विश्रवा नामकः पुत्र उत्पादितः। यस्य द्वे पत्न्यावास्ताम्—एका भरद्वाजस्य कन्या देववर्णिनी द्वितीया च सुमालिनो दैत्यस्य पुत्री केकशी। तत्र विश्रवसो देववर्णिन्या धनाध्यक्षः कुबेर उत्पन्नः, तस्य पुत्रो नलकूबरो बभूव। केकशीतो रावण-कुम्भकर्ण - विभीषणाख्यास्त्रयः पुत्रास्तथैका कन्यका शूर्पणखा चाजायन्त। रावणस्य पुत्रेषु मेघनादः प्रमुख असीत्।

रावण-वंश-वृक्षः

ब्रह्मा
पुलस्त्यः
विश्रवाः

| | |
|---|---|
| कुबेरः | रावणः, कुम्भकर्णः, विभीषणः, शूर्पणखा च |
| नलकूबरः | मेघनादाक्षयकुमारादयः। |

द्वापरे देव-दानव-राक्षसशब्दा न वंशसूचका आसन्, किन्तु ते संस्कृतिसूचका अभूवन्। समाजस्य कश्चिदपि वर्गो याज्ञिकसंस्कृतिप्रतिकूलं निन्दनीयं चाचरणं कृत्वा दैत्य-दानव-राक्षससंज्ञां धत्तेस्म। कंसस्य दैत्यवंशेन न कोऽपि सम्बन्ध आसीदथापि स स्वेन निन्दनीयेन कर्मणा दानवः प्रोक्तोऽस्ति। द्वापरे दानवसंस्कृतेः संस्थापकाः कंस-जरासन्ध-शिशुपाल-दन्तवक्त्रादय आसन्।

## दैत्य-दानव-राक्षससंस्कृतिः

*पुराणेषु दैत्य-दानव-राक्षसानां संस्कृतिर्मानवसंस्कृतितो न्यूना-* निन्दनीया च प्रोक्ताऽस्ति। *मानवसंस्कृतिर्यज्ञ-तपःप्रधाना* तथा दानवादिसंस्कृतिः केवलं तपः प्रमुखाऽऽसीत्। दानवाः प्रायः तप एव शक्तिसाधनं मन्यन्ते स्म। तपसैव ते स्वेष्टदेवता प्रसादाद् दुर्लभं वरं प्राप्य स्वाभिलषितं पूरयन्ति स्म। दैत्यमाता दित्या कृतस्य चान्द्रायणव्रतस्य महर्षिभ्यो धार्मिकोपदेशग्रहणस्य च चर्चा पुराणेषु प्राप्यते।[2]

---

१. एन्शियण्ट इण्डियन हिस्टारिक ट्रेडीशन। पृ० २२७

२. दितिर्वै दैत्यमाता तु ऋषिकार्येण सुव्रता।
फलाहारास्तपस्तेपे कृच्छ्रचान्द्रायणादिभिः॥ प०पु० सृ०ख० ७।६

## द्वितीयः परिच्छेदः

# भक्तितत्त्वविवेचनम्

विदितचरमेवास्ति धर्मधुरीणानामास्तिकजनानां यदिह जगतीतले चतुरशीतिलक्षयोनिषु जन्ममरणपरम्परामनुभूयानेकजन्मार्जितपुण्यपुञ्ज-प्रभावैर्मनुष्यशरीरमासादयति जीवलोकः—'कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्'। तदिदमतिदुर्लभं मानवशरीरमवाप्यापि न सर्वे जीवा जन्ममरणपरम्परानुभवदुःखसागरमुत्तर्तुं प्रभवन्ति, किन्तु तत्राधिकतराः पुनरपि तासु चतुरशीतियोनिषु बंभ्रम्यमाणाः कठिनतरां दुःखपरम्परा-मनुभवन्तो भूयो भूयो ,जन्ममरणचक्रे चङ्क्रमन्ते एव। तादृग्विधे च वैषम्ये नान्यदुपलभ्यते मूलम्, ऋते अनन्यभगवद्भक्तेः। अनन्यया भक्त्या भगवन्तं प्राप्य भक्तः ससारे आवागमनचक्राद् विमुक्तः शाश्वत सुखमुप-लभते। तस्माद् भगवत्प्राप्तिरूपशाश्वतसुखसाधनं भक्तिरेवास्ति।

यद्यपि 'अपाम सोमममृता अभूम' इति श्रुत्या सोमपानादिभिर्लभ्यस्य स्वर्गादेरपि सुखसाधनत्व प्रतीयते, तथापि 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति गीतावचनानुसारं भोगेन पुण्यक्षयानन्तरं स्वर्गाच्च्युतिदर्शनान्न तदात्यन्तिकं सुखं मन्यन्ते विद्वांसः। वेदान्तसिद्धान्तानुसारमभेदोपासनया निरतिशयानन्दरूपं पूर्णसुखस्वरूपं च ब्रह्म साक्षात्कृत्यैव जीवः सर्वदु.ख-विनिर्मुक्तो भूत्वा परमानन्दं विन्दते शाश्वतीं च शान्तिं लभते। पुराणा-नामनुसारं भेदोपासनया परमात्मनः साक्षात्कारं सम्पाद्य जन्ममृत्युबन्धन-क्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत्सान्निध्यसुखमनुभवति। अतो भगवत्स्वरूप-साक्षात्कारमन्तरा न किमप्यस्त्यन्यद् वास्तविकं सुखम्।

'रसो वै सः, रसं लब्ध्वा ह्यानन्दी भवति' इति श्रुत्यनुसारं भगवतो रसरूपत्वाद् ब्रह्मानन्दप्रदायिनं भक्तिरसमेव द्वारीकृत्य रसरूपस्य भगवतः सान्निध्यमवाप्तुं शक्यते। यथा पदार्थवादिनी न्यायवैशेषिक-दर्शने पदार्थज्ञानद्वारा निःश्रेयसपथं प्रदर्शयतः। योगदर्शन च जीवेश्व-रयोरेकत्वाधिगमपूर्वकसमाधिना कैवल्यप्राप्तिं प्रतिपादयति। सांख्यदर्शनं

तु त्रिविधदुःखात्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषयोर्विवेकात्मकज्ञानेन मुक्तिमार्गमुपदिशति। मीमांसादर्शनमपि वैदिकैः कर्मभिः संस्कारशुद्ध्या निर्वाणोपलब्धिं निर्दिशति। वेदान्तदर्शनं चाद्वयब्रह्मज्ञानेन मोक्षाधिगममुद्घोषयति तथैव भगवत्सान्निध्योपलब्धिहेतुभूतं भक्तिदर्शनमपि भगवत्तत्त्वसाक्षात्कारद्वारा अपवर्गद्वारमुद्घाट्य परमं पदं प्रापयति भक्तप्रवरान्।

अतो भक्त्या भगवतो वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थं निर्वाणपदं प्राप्तुं शक्यते, इत्यत्र नास्ति कश्चन सन्देहः। तथा चोक्तं स्वयमेव भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्[1]।

पुराणानुसारं समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वाद् भक्तियोगोऽपि परमपुरुषार्थोऽभिप्रेतः। अतएव जीवन्मुक्तानाममलात्मनां ज्ञानिनामपि भक्तिरावश्यकत्वेन अनिवार्या प्रतिपादिता श्रीमद्भागवते।[2]

अत एवाद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानं द्रुतचित्तस्य च भगवल्लीलाकथाश्रवणादिश्रद्धापूर्विका भक्तिरिति द्वयमप्युपात्तम्।[3]

तत्तत्पुराणेषु भगवतो भक्तिर्भक्तान् दुःखबहुलादस्मात् संसारात् परमानन्दपूर्णपरिस्थितौ समुपस्थापयितुमेकमात्रं सर्वसुगमं साधनं निर्दिष्टमस्ति। तत्त्वस्यास्य प्रतिपादनं तु प्रायः प्रतिपुराणं प्राप्यत एव, अथापि पुराणमूर्धन्ये सर्ववेदान्तसारे वैष्णवतिलके श्रीमद्भागवते महापुराणे भक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। तदनुसारं प्रेमपयोधौ पूर्णात्मनि परमात्मनि भगवत्या भक्त्या समः कल्याणकारी कश्चन अन्यो मार्गो न दृष्टिगोचरतामायाति, तदुक्तं श्रीमद्भागवते।[4]

भक्त्या भक्तो यावत् पुलकिताङ्गो द्रवीभूतहृदयो विगलितानन्दाश्रुश्च न भवति तावद् आन्तरिकी पवित्रता नासादयति। यथा समाधिद्वारा चेतसः समताधिगमाद् मानसिको भावो विषयेभ्यः समूलमपलीयते, तथैव भगवद्भक्त्या गाढं परमानन्दसम्बन्धमवाप्य पापराशिः प्रणश्यति। तदनन्तरं यथाऽग्निना सुवर्णं निर्मलं सत् स्वकीयं स्वाभाविकं स्वरूपं

1. भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ गीता १८।५५॥
2. आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥ श्री. भा. १।७।१०॥
3. तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥ श्री. भा. ११।२०।९
4. न [illegible] भक्त्या [illegible]।
[illegible] दृश्यते॥ श्री. भा. ११।१४।[illegible]

प्रतिपद्यते, तथैव जीवोऽपि भगवद्भक्त्या गलितमलिनसंस्कारः सन् नैजं स्वाभाविकं स्वरूपमासाद्य शाश्वतीं शान्तिमनुभवति। तथा चोक्तं श्रीमद्भागवते भगवद्भजनायासुरबालकान् प्रेरयता प्रह्लादेन।[1]

परमस्य तत्त्वस्य प्राप्तये पुराणानुसारं भक्तेर्महत् किमपि साधनं नास्ति। भक्तितुलनायां धर्मार्थकामाना किमपि मूल्यं नास्ति। यदा भक्तिसाधनद्वारा सर्वश्रेष्ठं परमतत्त्वमपि सर्वतोभावेन साधकस्याधिकारे आगच्छति तदा किं पुनरवशिष्यते। तस्मात् पुराणानां मतेन भक्तिः परमपदप्राप्तये सर्वश्रेष्ठमस्ति साधनम्।[2]

सर्वमिदं मानवयोनावेव सम्भवति नान्यत्र। विधातु- सृष्टेर्वैचित्र्याद् मानव एव केवलमेतादृगस्ति यो विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात्। अत एव सृष्टिनिर्माणावसरे ब्रह्मदेवस्य मानवनिर्माणादेव परमः सन्तोषोऽजायत। तथा चोक्तं श्रीमद्भागवते।[3]

अत एव सम्प्राप्य मानव शरीर नून सम्पादनीयमात्मतत्त्वविज्ञानम्। अयमेव परमः पुरुषार्थः, उत्कृष्टा सिद्धिः, श्रेष्ठा च सम्पदस्ति। अनेनैव मानवजन्मनः साफल्यम्, एतेनैव कृतार्थोऽयं लोकः, अमुनैव वसुन्धरा वस्तुतो वसुन्धरा। मानवजन्म लब्ध्वा य आत्मज्ञानाय न प्रयतते तस्य महती हानिर्भवति। अत एवोक्तं पूज्यपादैः श्रीशङ्कराचार्यैः।[4]

---

१. तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रभावेण समेत्यधोक्षजम्॥
अधोक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम्।
तद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः
ततो भजध्वं हृदये हृदीश्वरम्॥ श्री.भा. ७।७।३६-३७

२. धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि॥ वि० पु० १।२०।२७

३. सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
नाना सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः॥ श्री. भा. ११।९।२८

४. लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।
यस्त्वात्ममुक्तौ न यतेत मूढधीः स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात्॥
—विवेकचूडामणौ ४

श्रीमद्भागवतेऽपि उद्धवं प्रति भगवान् श्रीकृष्णोऽपि—

नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्।
मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा ॥

—श्री. भा. ११।२०।१७

राजा मुचुकुन्दोऽपि भगवन्तं श्रीकृष्णं प्रोक्तवान्—

लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्गमयत्नतोऽनघ!
पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥

—श्री. भा. १०।५१।४७

एतत्सर्वं लक्ष्यीकृत्यैव श्रुत्यापि स्पष्टमुद्घोषितम्—

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैव सेतुः।
इह चेदवेदीथ सत्यमस्ति नो चेदवेदीन्महती विनष्टिः॥

—कैवल्योपनिषद् १।५

अत एव श्रीमद्भागवते सर्वकामनया भगवद्भजनमेव सिद्धान्तितं वैयासकिना शुकेन[1]।

श्रीमद्भागवतानुसारं मुक्तेः प्रधानानि त्रीणि साधनानि सन्ति—निष्कामकर्म, ज्ञान, भक्तिश्चेति। तेषु ज्ञानस्य कृपाणधारासमानत्वेन-सर्वसुलभत्वाभावात्-निष्कामकर्मणश्च कष्टसाध्यत्वाद् भक्तिरेव सर्वं साधारणा सुभगा सुलभा च प्रतीयते।[2]

सत्ययुगादौ ज्ञानवैराग्ययोर्मोक्षसाधकत्वेऽपि कलियुगे भक्तेरेव प्राधान्यमस्ति। तथाचोक्तं पद्मपुराणीय श्रीमद्भागवतमहात्म्ये।[3]

किञ्च पद्मपुराणानुसारं भगवन्त स्वानुकूलं कर्तुं न तपस आवश्यकता स्ति, न वा वेदाध्ययनमनिवार्यं विद्यते, नापि ज्ञानोपार्जनं श्रेष्ठं वर्तते, न च कर्मणः कर्तव्यत्व भवति, किन्तु भगवत्साधनाय भक्तिरेव सर्वोत्कृष्ट

---

१. अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥

—श्री. भा. २।३।१०

२. योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥

—श्री० भा० ११।२०।६

३. धर्मैर्भिर्भगवद्भक्तिर्भवतीशरूपा तथा।
ज्ञानं वेद विमुक्तिश्च माक्षधर्मार्थसंग्रहः॥
सत्यादिस्त्रियुगे बोधवैराग्यौ मुक्तिसाधकौ।
कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी ॥ श्री० भा० मा० २।४

साधनमस्ति। एतत्सत्यत्वे गोपिका एव सन्ति प्रमाणम्। नहि ताभिस्तपस्तप्तं, न च वेदाध्ययनं विहितं, न वा ज्ञानमुपार्जितं, नापि किञ्चित्कर्तव्यानुष्ठान कृतम्। अपि तु भक्त्यैवैताः श्रीकृष्णं वशीचक्रुः। यथा वृक्षस्य पूर्णता फलेनास्ति, तथा भक्तेः पूर्णता भगवत्यनन्यप्रेम्णैवास्ति।[1]

यद्यपि भगवद्भक्तौ जीवमात्रस्यास्त्यधिकारो न्याययुक्तो हनुमज्जाम्बवद्गरुडगजेन्द्रकाकभुशुण्डिजटायुप्रभृतीनां पशुपक्षिप्लवङ्गमादीना भगवद्भक्त्या परमपदप्राप्तिदर्शनात्, तथापि सर्वसाधारणपशुपक्षिषु ज्ञानसाधनयोरभावादीश्वरभक्तिं कर्तुमसमर्थतया शास्त्रकारा ईश्वरभक्तौ प्रधानतया मनुष्याणामेवाधिकारं वदन्ति। तथा च बादरायणसूत्रम्—'शास्त्राधिकारत्वान्मनुष्यस्य।' भगवद्भक्तौ रूपस्यायुषश्च न मूल्यमस्ति, न च विद्याया उत्कृष्टत्वम्, नहि धनस्य जातेश्चोत्कर्षोऽप्यपेक्ष्यते, न वा सदाचारस्य सद्गुणस्य च प्राधान्यं वर्तते, नापि बल मुख्यं विद्यते, किन्तु प्रेमैवानन्यं प्रतीक्षते भक्तिप्रियो भगवान्। तथाचोक्त जीवगोस्वामिना[2]।

भक्तिर्भगवत प्राणतोऽप्यधिका प्रियाऽस्ति। भक्त्या प्रार्थितो भगवान् नीचगृहेष्वपि गच्छति। तथाचोक्तं नारदेन भक्तिं प्रति पद्मपुराणीय श्रीमद्भागवतमाहात्म्ये।[3]

प्रगाढया भक्त्या प्रसन्नो भगवान् सर्वमपि कार्यं परित्यज्य एकस्य भक्तस्य कृतेऽलौकिक कर्म निर्वर्तयति, असम्भवञ्च सम्भावयति। तथाच सर्वशक्तिसम्पन्नः कर्तुमकर्तुमन्यथाकर्तुं समर्थोऽपि भगवान् श्रीकृष्णः पाण्डवकुलनन्दनस्य धर्मराजस्य भक्तिगुणगरिम्णा उत्कृष्ट कौरवकुल दूरे परित्यज्य पाण्डवकुलस्य मङ्गलचिन्तायां नियत व्यापृतो बभूव, अर्जुनस्य रथे हीनकर्म सारथ्यमपि स्वीचकार।

भगवान् प्रह्लादस्य भक्त्याऽऽकृष्टो यत्र यत्र तस्य विपदमभिलक्षितवान् तत्र तत्र ता वारयितुं प्रवृत्ते। मदोन्मत्तस्य करिणः पादतलेन मर्दितः,

---

१. न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा।
हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः॥ श्री० मा० मा० २।१८

२. व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का,
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम्।
कुब्जायाः कमनीयरूपमधिकं किं तत् सुदाम्नो धनम्,
भक्त्या तुष्यसि केवलं न च गुणैर्भक्तिप्रियो माधवः॥ ह. भ. र.

३. त्वं तु भक्ते! प्रिया तस्य सततं प्राणतोऽधिका।
त्वयाहूतस्तु भगवान् याति नीचगृहेष्वपि॥ २।३

शैलशिखराद् भूमौ प्रक्षिप्तः, जीवनापहारकं च विषलड्डुकं मधुरमोदकत्वेन परिणमय्य भगवता पालितः प्रह्लादः। हरिनामस्मरणमात्रेण भक्तिरसाभिप्लुतः प्रह्लादः 'क्व ते नारायणः' ?' इति पित्रा हिरण्यकशिपुना यदा पृष्टस्तदा 'सर्वत्रैव वर्तते मे नारायण' इत्युक्तवान्। यदि 'सर्वत्रैव वर्तते ते नारायणस्तदत्र स्तम्भे अपि वर्ततां नाम' इत्युक्तवति पितरि 'बाढम्' इति यदा प्राह प्रह्लादः, तदैव तेन सवेगमभिहतात् स्तम्भान्नारायण उत्कृष्टनृसिंहरूपेणाविर्भूय भक्तस्य प्रतिकूलाचारिणं हिरण्यकशिपुं नखैर्विदार्य पञ्चत्वं प्रापयामास। प्रह्लादं च तस्यैव राज्येऽभिषिच्य भक्तस्य भगवच्चिन्तनपरस्य साहाय्यं सम्पादयामास। तथा चाह श्रीमद्भागवते व्यासदेवः।[1]

एवं पञ्चवर्षवयस्कस्य ध्रुवस्य हिंस्रश्वापदसमाकीर्णेऽरण्ये रक्षां चकार। तस्य परमया भक्त्या सुतरां सन्तुष्टो भगवान् स्वकीयवैकुण्ठलोकस्याप्युपरि कञ्चिन्नूतनं लोकं तदर्थं निर्माय दर्शितवान् भक्तजनेऽपूर्वं स्नेहातिरेकम्।

द्वापरे यदा दुष्टो दुःशासनः कौरवसभायां द्रौपद्या वस्त्रं बलात् समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे तदा सा वसिष्ठोपदेशानुसारं भगवतः स्मरणे मनो दधे[2]। इत्येव विचार्य आपत्तिकालेऽभयदातारं भगवन्तं श्रीकृष्णं सस्मार[3]। अनन्यशरणया आर्तया तया समभ्यर्थित आर्तत्राता भगवान् श्रीकृष्णः तस्या अनन्यया भक्त्या वसनरूपेण परिणतो भूत्वा लज्जां परिरक्ष्य दर्शितवान्, भक्तिमर्यादां प्रचारितवांश्च द्रौपद्याः पातिव्रत्यधर्मप्रकर्षम्।[4]

---

१. सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः।
अदृश्यतात्यद्भुतरूपमुद्वहन् मध्ये सभायां न मृगं न मानुषम्॥ ७।८।१८

२. ज्ञातं मया वसिष्ठेन पुरा गीतं महात्मना।
महत्यापदि सम्प्राप्ते स्मर्तव्यो भगवान् हरिः॥

३. गोविन्द ! द्वारिकावासिन् ! कृष्ण ! गोपीजनप्रिय,
कौरवैः परिभूतां मां किं न जानासि केशव।
कौरवार्णवमग्नां मामुद्धरस्व जनार्दन,
प्रपन्नां पाहि गोविन्द ! कुरुमध्येऽवसीदतीम्॥
—म. भा. सभापर्वणि ६८।४१-४३

४. कृष्णं च विष्णुं च हरिं नरं च त्राणाय विक्रोशति याज्ञसेनी।
ततस्तु धर्मोऽन्तरितो महात्मा समावृणोद्वै विविधैः सुवस्त्रैः॥
— म० भा० सभापर्वणि ६८।४६

भक्तेः प्रणयस्य हृदयातुरागरूपस्य स्नेहस्य च दृश्यते समुत्कर्षो वृन्दावनलीलायाम्। तत्र हि परमया भक्त्या प्रणयादिना वा समाकृष्टो हरिः सर्वेषामेव काम्यं फलं सम्पादयामास। बालोऽपि कृष्णः शिशुजनैरसाध्यानि कानिचित्कर्माणि सम्पाद्यात्मन ईश्वरतां दर्शितवान्।

अम्बरीषपृथुप्रभृतयो राजानः प्रेम्णा भगवन्तमर्चयित्वाऽनायासेन तं प्रापुः। सुदामा केवलैः पृथुकतण्डुलकणैः, गजेन्द्रः केवलेन पुष्पेण, शबरी च बदरीफलैरेव भगवन्तं सन्तर्प्य स्वीयां स्वीयामभिलाषां पूरितवन्तः, प्राप्तवन्तश्च तत्कृपया परमं पदम्। एतत्सर्वं पर्यालोच्येदं वक्तुं शक्यते यत्सत्यमुक्तं भगवता गीतायाम्[1]।

एवमुत्कृष्टया भक्त्या सन्तुष्टो भगवान् भक्तस्य सर्वविधां विपदं वारयति, मनोरथं च सर्वं पूरयति। भगवत्पादपद्मपरागसमासक्तचेता भक्तो भवाम्बुधिं वत्सपदमिवोलङ्घ्य परमं पदं प्राप्नोति।[2]

सर्वदा कल्याणकरं भगवतो नामोच्चारयन् रूपं चिन्तयन् लीला आकर्णयन् यशश्च चिन्तयन् भगवति समासक्तो भक्तो मुक्तिं लब्ध्वा न च पुनः जन्ममरणचक्रे चङ्क्रमितो भवति। तथाचोक्तं श्रीमद्भागवते।[3]

### भक्तेर्विकासक्रमः

स्नेहप्रेमश्रद्धाभेदेन लौकिकोऽनुरागस्त्रिविधः। तत्र पुत्रकन्याशिष्यादिषु निम्नगामी अनुरागः स्नेह उच्यते। मित्रकलत्रादिषु समानगामी अनुरागः प्रेम निगद्यते। मातृपितृगुरुजनादिषु च मान्यगामी अनुरागः श्रद्धानाम्ना व्यपदिश्यते। ईश्वराभिमुखी प्रवर्द्धमाना श्रद्धैव भक्तिपदवाच्यतां धत्ते।

अनुरागोऽपि द्विविध—काममूलकः प्रेममूलकश्च। काममूलके

---

१. पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥

२. समाश्रिता ये पदपल्लवप्लवम्, महत्पदं पुण्ययशो मुरारेः।
भवाम्बुधिर्वत्सपदं परं पदम्, पदं पदं यद्विपदां न तेषाम्॥
—श्रीमद्भागवते १०।२।३७

३. शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते।
क्रियासु यावच्चरणारविन्दयोः आविष्टचेता न पुनर्भवाय॥
—श्री. भा. १०।२।३७

आसक्तिः, प्रेममूलके च भावः प्राकट्यमासादयतः। कामस्य मूलं स्वार्थः, तस्य लक्ष्यमनात्मेन्द्रियादिकम्। प्रेम्णो मूलं परार्थः, तदीयं लक्ष्यमात्मा। अतः कामी यावती स्वार्थपरतां परित्यजति तावत्येव तत्र परार्थपरता व्यज्यते, स च प्रेमिको जायते। वस्तुतः प्रेमवृद्ध्या सहैव प्रेमिकस्य स्वार्थवृत्तिरपि क्षीयते, परिवर्द्धते च परार्थवृत्तिः। तदन्तःकरणानुराग-तरङ्गिणी कामभूमिं विहाय प्रेमभूमौ प्रवहति। स्वार्थस्याज्ञानमूलत्वात् कामिनि विशुद्धप्रेमोदयाभावाद् नासौ पुरुषः भक्तेरधिकारी, अपि तु भगवदुन्मुखः प्रेमिक एव भवति भक्तेरधिकारी। तथा चोक्तं स्वयमेव भगवता श्रीकृष्णेन।[1]

स्नेहादयस्तिस्रोऽपि वृत्तयो लौकिकत्वाद्विनश्वरशीलाः, यतो जगतो नश्वरत्वात् तदाश्रयोऽपि विनश्वरशील एव, किन्तु भक्तिस्तद्विलक्षणा; यतः सा अनश्वरे परमात्मन्यलौकिकप्रीतिरूपा। लौकिकं व्यवहार-मनुसृत्य मित्र-पुत्र-कलत्रादिभिः सह यः स्नेह-प्रेम-श्रद्धादिसम्बन्धो भवति स नश्वरो बन्धनकारणं च; यतो हि तन्मूले मोहस्य काममूलकममत्व-बुद्धिसद्भावाद् जीवेन बन्धनमेव लभ्यते, न मुक्तिः। परमेश्वरविषयि-कालौकिकेऽनुरागे तु तदभावाभावः, तस्य नित्यसत्यसनातनसकलकाम-नाश्रयभावाधीश्वरत्वात्। अत ईश्वरे स्नेहादिव्यवहारो नूनमेव भक्ति-पदवाच्यः। वस्तुत आत्मसुखेच्छासम्बन्धसंयुक्तत्वाद् मोहमिश्रिता लौकिकानुरागरूपा स्नेहप्रेमश्रद्धादयः सत्त्वोन्मुखरजःप्रधानाः, भगवद-

---

1. मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा॥
भजन्त्यभजतो ये वै करुणाः पितरो यथा।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः॥
भजतोऽपि न वै केचिद् भजन्त्यभजतः कुतः।
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः॥
नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिसिद्धये।
यथाऽधनो नष्टधने विनष्टे तच्चिन्तयाऽन्यन्निभृतो न वेद॥
एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः।
मया परोक्षं भजता तिरोहितं माऽसूयितुं मार्हथ तत् प्रियं प्रियाः॥
न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः।
या माऽभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना॥
१०।३२।१७-२२

नुरागरूपिणी भक्तिस्त्वलौकिकी मोहातीता शुद्धसत्त्वगुणमयी च प्रोच्यते। अतो भगवद्भक्तहृदयविहारिणी साक्षान्मुक्तिप्रदायिनी भक्तिर्लोकातीतेत्यत्र न कश्चित् सन्देहलवः।

यथा हिमालयप्रदेशान्निर्गमकानेऽतिशयचाञ्चल्यात् कापि धारा अलकनन्दा, काचन मन्दाकिनी, काचिच्च भागीरथीति गीयते, पश्चात्तिस्रो मिलित्वा समतलभूमौ प्रवहन्त्य. पुष्टा शान्ताश्च भूत्वा गङ्गानाम्ना व्यपदिश्यन्ते, तथैवानुरागमयी धारा स्नेहप्रेमश्रद्धारूपेण पति-पुत्र-मित्र-पितृप्रभृतिषु प्रवहन्ती चञ्चलरूपा पावनी गीयते। ततश्च स्वीयविविधनामरूपस्वभावान् परित्यज्य स्वार्थरहितभगवद्भावमयसमतलप्रदेशे एकीभूय शान्तधारारूपेण यदा प्रवहति तदैवासौ धारा भक्तिरिति प्रोच्यते। तया च पुत्रमित्रपितृप्रभृतिषु या अनुरागोत्पत्तिः स्नेहप्रेमश्रद्धारूपेण जायते सैव पश्चाद् भगवद्भावोन्मुखी ईश्वरानुरागरूपिणी भक्तिरित्यभिधीयते।

वस्तुतोऽनुरागोत्पत्तिः प्रथमावस्थाया मानवान्तःकरणे स्नेह-प्रेम-श्रद्धारूपेण जायते। नानारूपधारिण्यामस्यामनुरागवृत्तौ यथायथाऽज्ञानस्वार्थेन्द्रियमूलिकाऽऽसक्तिर्ह्रासमुपैति तथातथाऽनुरागवृत्तिरसौ पवित्रा सती भगवद्भावं प्राप्नोति। इयमेव भक्तेः क्रमविकासरहस्यमवधेयम्।

जीवो हि स्वस्वरूपं विस्मृत्य प्रकृतिसम्बद्धत्वात् तद्गतेच्छासुखदुःखादिधर्मान् आत्मन्यारोपयन् घटीयन्त्रवद् जन्ममृत्युचक्रे परिभ्राम्यन्नाध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति दुःखत्रयमुपभुङ्क्ते, परन्तु यदा परया भक्त्या इदमेवावधारयति यदहं शरीरत्रयानवच्छिन्नः, तद्गतसुखदुःखासम्बद्धः, सर्वव्यापकपूर्णानन्दसच्चिदानन्दस्वरूपस्तदानीमसौ ज्ञानी भक्तः स्वस्वरूपमधिगच्छन् पूर्णसच्चिदानन्दसागरे निमज्जति। तदुक्तं श्रीमद्भागवते उद्धवं प्रति भगवता श्रीकृष्णेन।[1]

---

[1] तस्माद् ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव !
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः ॥११।१९।५॥
ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥ ११।१९।६॥
भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ११।२६।३०॥
भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ११।१८।४५॥

आत्मसाक्षात्कारं कुर्वता ज्ञानिना भक्तेन परमपदमधिदगम्यते आनन्दस्वरूपे सर्वाधारे परमात्मनि परां भक्तिं लभमानस्य साधकस्य न किञ्चिदपि प्राप्तुमवशिष्यते। निर्विकल्पकसमाधिं प्राप्तवता साधकेन योऽसौमानन्दोऽधिगम्यते नासौ वाचा वर्णयितुं शक्यते। सच्चिदानन्द-महासागरे निमग्नस्य भक्तशिरोमणेः समस्तमपि संसारबन्धनं विच्छिद्यते। पञ्चभिः कोशैः सह आत्मनः सम्बन्धेन या किल जीवभावसमुत्पत्तिः सा प्रणश्यति; भक्तिप्रभावेण योगी भगवदानन्दसत्तामधिगम्य संसारचक्र-जन्ममृत्युभयाद् विमुच्यते।

स्वभ्रातुरुत्तमस्य वधेन सञ्जातरोषं पुण्यजनान् निघ्नन्तं स्वकीयं पौत्रमौत्तानपादिं भक्तप्रवरं ध्रुवं पुण्यजनवधान्निवारयता भगवता स्वायम्भुवेन मनुना स्पष्टमुक्तं श्रीमद्भागवते।[1]

## भक्तिलक्षणमीमांसा

कोऽस्ति भगवान्, किञ्चास्ति तस्य भक्तेः स्वरूपमिति प्रश्ने संक्षेपादिद-मेव वक्तुं शक्यते यत्—यः सर्वसाक्षी, सर्वान्तर्यामी, सर्वशक्तिमान्, सर्वेश्वरः, सर्वशासकः, सर्वज्ञो निरतिशयज्ञानवांश्चास्ति, यस्य भक्त्या मानवः सकलदुर्गुणदुःखविमुक्तो भूत्वा विशुद्धो भवति, योऽजन्मापि जीवेषु दयां कृत्वा पुराणेषु गीतायाञ्च कृतस्वकीयप्रतिज्ञानुसारं 'प्राणिनां *कल्याणाय, धर्मस्य स्थापनाय, अधर्मस्य निराशाय, सतां संरक्षणाय,* दुष्टानां दलनाय च' समये-समये स्वमायया देवमानवपश्वादिषु योनिषु, सत्ययुगे मत्स्य-कूर्म-वाराह-वामन-नृसिंहरूपेण, त्रेतायां रामरूपेण, द्वापरे श्रीकृष्णबलरामरूपेण, कलियुगे च बुद्ध-कल्किरूपेणावतीर्य भक्तानाह्ला-दयति, शास्त्रीयमर्यादां पालयति, सुखयति च समस्तं लोकम्[2]। स एव नित्योऽविनाशी सच्चिदानन्दघनस्वरूपः सर्वव्यापकः परमात्मा भगवान् बोद्धव्यः। तस्मिन् परमानुरक्तिरनन्यं प्रेम वा भक्तिर्ज्ञेया। एवञ्च जगदा-धारपरमेश्वरविषयकोऽनन्योऽनुरागो भगवद्विषयकान्तःकरणवृत्तिविशेषो वा भक्तिरिति प्रतिफलति।

---

१. त्वं प्रत्यगात्मनि तदा भगवत्यनन्ते आनन्दमात्र उपपन्नसमस्तशक्तौ।
भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति, प्ररूढः॥
—४।११।३०॥

२. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ गीतायाम् ४।७॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ तत्रैव ४।८॥

यतिवर्यश्रीमधुसूदनसरस्वतीसिद्धान्तानुसारं भगवद्भावेन द्रवीभूतस्य चित्तस्य सविकल्पा तदाकारतापत्तिरेव भक्तिर्निगद्यते। तथा हि भक्तिरसायने—'द्रवीभावपूर्विका मनसो भगवदाकाररूपा सविकल्पा वृत्तिर्भक्तिः।'

अत एव श्रीमद्भागवते महापुराणे भगवद्गुणगानश्रवणमात्रेणैव भगवदभिमुखी समुद्रगामिन्या गङ्गाया अविच्छिन्नया धारया समा चित्तस्य कामनाहीना अविच्छिन्नागतिरेव भक्तियोगः प्रोक्तः स्वयमेव भगवता कपिलेन स्वमातरं देवहूतिं प्रति[1]।

ईदृशमेव धारावाहिकमविच्छिन्नं पूततमं प्रेम प्रार्थयता प्रह्लादेनापि भगवन्तं नृसिंहं प्रति निवेदितमासीद् यत्—भगवन्! यथा विषयलोलुपा अज्ञानिनो मानवा विषयान् प्रत्येकचित्ताः सन्त आन्तरिकीं प्रीतिं कुर्वन्ति तथैव ममाप्यविच्छिन्नं प्रेम परमात्मनि स्यात्, न ममान्तःकरणात् तत् प्रेम कदाचिदपि दूरीभवतु[2]।

सिद्धान्तममुमेवादाय भक्तिदर्शनस्य सूत्रकारा देवर्षिनारद-महर्षि-शाण्डिल्यप्रभृतयो महामुनयः स्व-स्वग्रन्थेषु भक्तिलक्षणं कृतवन्तः। तत्र देवर्षिणा नारदेन स्वकीये नारदभक्तिसूत्रे 'सा त्वस्मिन् परमप्रेमरूपा' (सू० २) इति सूत्रयता परमेश्वरे परमं प्रेमैव भक्तिः प्रोक्ता।

महर्षिणा शाण्डिल्येन स्वात्मीयशाण्डिल्यभक्तिसूत्रे ईश्वरं प्रति परमानुराग एव भक्तिर्निगदिता, यतो हि परमेश्वराभिमुखेन प्रेम्णैव जीवोऽमृतरूपं मोक्षं लभते। तथा हि—'सा परानुरक्तिरीश्वरे' (१।१।२), 'तत्संस्थस्यामृतत्वोपदेशात्' (१।१।३)।

अङ्गिरसो मुनेर्मतेन भक्तिर्भगवन्तं प्रत्यनुरागविशेषः, अलौकिकेश्वरानुरागरूपा वा। तन्मते सर्वासु चित्तवृत्तिषु प्राधान्येन वृत्तिद्वयं कारणस्वरूपतां भजते—रागो द्वेषश्च। तत्र रागो रजःप्रधानः, द्वेषश्च तमःप्रधानः। सुखानुशायी रागः, दुःखानुशायी द्वेष इति योगसूत्रानुसारेण सुखानुस्मरणपूर्वकं प्रवृत्तिरेव रागः, दुःखानुस्मरणपुरःसरं विरुद्धभावनोत्पत्तिरेव द्वेषः। तथा च तमःप्राधान्याद् द्वेषवृत्तिर्द्वेषस्य रागवृत्तिश्च सत्वोन्मुख-

---

१. मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥ ३।२६।११-१२।

२. या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥
विष्णुपुराणे १।२०।१६

रजःप्राधान्येन सुखस्य हेतुर्भवति । भक्तिः किल द्वेषप्रतिकूला रागानुकूला चालौकिकी वृत्तिः । अलौकिकी भगवद्भक्तिः सात्त्विकी यतस्तया साकं भगवदनुरागस्यास्ति सम्बन्धः । फलतोऽधोगतिदायिन्या द्वेषवृत्तेर्विपरीता समुन्नतिसम्पादिकाऽनुरागवृत्तिरूपिणी भक्तिरूपता भवति । एवञ्च द्वेषातीता रागानुरूपा परमेश्वराभिमुखगमनशीला सत्त्वगुणमयी भगवति विशिष्टालौकिकानुरागवृत्तिरेव भक्तिः । अलौकिकेश्वरानुरागरूपा वा भक्तिः। भक्तिरसायनस्य प्रथमे उल्लासे धर्मपूर्वकं भगवद्गुणानामाराधनेन द्रवीभूतस्य चेतसस्तैलधारावदविच्छिन्नधारावाहिका भगवदाकारवृत्तिरेव भक्ते. सामान्यलक्षणमभिहित श्रीमधुसूदनसरस्वतीपादेन ।[१]

भक्तिविशेषप्रतिपादके द्वितीये उल्लासे तु द्रवीभूते चेत स मनस गोविन्दाकारता वृत्तिरेव भक्तिरित्युक्तम्[२] । हरिभक्तिरसामृतसिन्धौ रूपगोस्वामिना तु[३]—नारदपाञ्चरात्रे तु भक्तिलक्षणमेव कृतमस्ति[४] ।

पूज्यपादैः श्रीशङ्कराचार्यैस्तु स्वकीये विवेकचूडामणावात्मस्वरूपानुसन्धानमेव भक्तिः प्रोक्तास्ति[५] ।

एवमेभिस्तत्तदाचार्यैः स्वस्वग्रन्थेष्वेवंविधं भक्तिलक्षण कृतमस्ति । परमेषा समेषां समीक्षया इदमेव तात्पर्यमवसीयते यदखिलात्मनि भगवति परमात्मन्यनन्यसाधारणं प्रेमैवास्ति भक्तिः ।

भज सेवायामिति धातोर्भावे क्तिन्-प्रत्ययेन निष्पन्नस्य भक्तिशब्दस्याप्यर्थः प्रेम्णा भगवत सेवैव प्रतीयते । यथा वृक्षस्य पूर्णता फलेन भवति, तथैव भक्तेरपि पूर्णता परमप्रेमास्पदे पुरुषोत्तमे परमेण

---

१. द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ भ. र. १।३॥

२. द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा ।
सा भक्तिरित्यभिहिता ( विशेषस्त्वधुनोच्यते ) ॥ भ. रा. २।१ ॥

३. अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥ पूर्वभागे १।११ ॥

४. सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते ॥
अनन्यममता विष्णौ ममता प्रेमसङ्गता ।
भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः ॥

५. स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते ॥

प्रेम्णैव निष्पद्यते । तस्माद् भगवति जगदीश्वरेऽनन्यानुराग एव भक्तिरिति निःसरतिभक्तिलक्षण निष्कर्षः ।

## भक्तेर्भेदविवेचनम्

यद्यपि भक्तेर्वर्गीकरणविषये विदुषां विभिन्न मतं विलोक्यते तथापि प्रधानतया निम्नाङ्कितं मतद्वयं सर्वसाधारणं प्रचलति ।

(१) भक्तिस्तावद् द्विविधा, गौणी-परा-भेदात् । गौणी पुनर्द्विधा—वैधी, रागात्मिका च । वैधी अपि पुनः श्रवणादिभेदेन नवधा, रागात्मिका च हास्यादिरसभेदेन चतुर्दशधा विभज्यते । तथा च वैधी—रागात्मिका-पराभेदाद् भवति भक्तिस्त्रिविधा । पूर्वं वैधी, ततो रागात्मिका, तदनन्तरं च पराभक्तिः समुज्जृम्भते । साधनदशायां गौणी एव सिद्धावस्थायां परा निगद्यते । अतः पराया भक्तेः प्राप्तये या साधनावस्था सैव गौणी प्रोच्यते ।

गुरुशास्त्रोपदेशद्वारा निषिद्धसाधनपरित्यागपूर्वकं विहितसाधनाभ्यासेन प्रथमदशायां विधीयमाना भक्तिरेव वैधी समाम्नायते । भवतेः समुन्नतिभूमिमासादयितुमियं किल सोपानरूपा ।

यदा वैधीं भक्तिमनुष्ठितो भक्तस्य हृदये भगवन्तं प्रत्येवंविधोऽपूर्वोऽनुराग उत्पद्यते येनाहर्दिवं भक्तो भगवद्भावसागरे निमग्नोऽमन्दमानन्दसन्दोहं लभते, तदानीं तस्य चेतसि तैलधारावदानन्दामृतसिञ्चनकरोऽनवच्छिन्नो भक्तिरसप्रवाहो विजृम्भते । इयं दशैव रागात्मिका प्रोच्यते ।

दशायामस्यां भक्तस्य मनोमधुपः प्रभुपादपद्ममकरन्दरसास्वादनोन्मत्तः सर्वत्र प्रभुमेव पश्यन्नानन्दनिमग्नो निरन्तरं तिष्ठति । भक्तहृदयं सांसारिकेभ्यो विषयेभ्यो विरक्तं सन्नहर्निशं भगवति लीनं भवति ।

## भक्तिशास्त्रपरम्परापर्यालोचनम्

योगसाधनद्वारा चित्तवृत्तिनिरोधपूर्वकमन्तःकरणं निर्मलं विधाय साधको भक्तः प्रभावेण भगवन्तं साक्षात्कृत्य तत्सन्निधानं लभमान आत्मज्ञानमधिगम्य निर्वाणपदं प्राप्तुं शक्नोतीति निश्चित्य, उपासनापरिपुष्टये निरन्तरप्रयासकामनया महर्षिभिः सुगमोपायं भक्तिशास्त्रमाविष्कृतम् ।

तत्र देवर्षिणा नारदेन भक्तिविषयकाणि चतुरशीतिसंख्याकानि (८४) सूत्राणि प्रणीतानि, महर्षिणा शाण्डिल्येन च द्व्यधिकशतानि (१०२) सूत्राणि निर्मितानि । तत्र नारदभक्तिसूत्रापेक्षया शाण्डिल्य-

भक्तिसूत्रं भक्तिसम्प्रदाये विशिष्टं स्थानं महत्त्वं च बिभर्ति। अत एव तत्र द्वाभ्यां स्वप्नेश्वर-भवदेवमिश्राभ्यां पृथक् पृथक् स्वतन्त्रं भाष्यद्वयं कृतम्। श्रीस्वामिना नारायणतीर्थेन च विशदभावपूर्णा चन्द्रिकाख्या व्याख्या विहिताऽस्ति। एवं भाष्यद्वयव्याख्याविभूषितस्य शाण्डिल्य-भक्तिसूत्रस्य भक्तसमाजे विपुलोऽस्ति प्रचारः प्रसारः समादरश्च। नारदभक्तिसूत्रे किमपि भाष्यं व्याख्यानं वा नेदानीं यावदवलोकितम्, किन्तु केवलं तत्सूत्राण्येव दृष्टिपथमायान्ति।

वर्तमाने युगे प्रामाणिकतया समुपलब्धस्य पूर्वोक्तमहर्षिद्वयप्रणीतस्य भक्तिसूत्रद्वयस्य पर्यालोचनया प्रतीयते यदाभ्यां द्वाभ्यां भक्तेराचार्याभ्यां, देवर्षिनारद-महर्षिशाण्डिल्याभ्यां पूर्वमपि भक्तिशास्त्रस्यासन्ननेके आचार्यास्तद्ग्रन्थाश्च सन्। परमस्माकं दौर्भाग्याद् दैवदुर्विलसितया परिस्थितेः पारवश्याद् हिन्दुधर्मेऽनेकाक्रान्त्युपस्थितेश्चेदानीं ते कालकवलिता जाताः। तेषां मध्ये एकस्यापि कस्यचन ग्रन्थरत्नस्य दर्शनं न जायते; किन्तु केवलं शाण्डिल्यभक्तिसूत्रे भक्तिविषयकमतान्तरप्रतिपादनप्रसङ्गे येषां पूर्वाचार्याणां चर्चाऽस्ति ते सन्ति काश्यप-बादरायण-शाण्डिल्य-जैमिनिमुनयः। तथाहि—

(१) तामैश्वर्यपरां काश्यपः परत्वात् ॥ शा. भ. सू. २।१।३ ॥
(२) आत्मैकपरां बादरायणः ॥ तत्रैव २।१।४ ॥
(३) उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम् ॥ तत्रैव २।१।५ ॥
(४) नाम्नेति जैमिनिः सम्भवात् ॥ तत्रैव २।२।६ ॥

एषां मध्ये (२।१।५) सूत्रे प्रोक्तः शाण्डिल्योऽयमेतस्माद् भक्तिसूत्र-निर्मातुः शाण्डिल्यादन्यः प्रतीयते। यतो हि शाण्डिल्याभिधा अनेके महर्षयस्तत्तद्ग्रन्थेषु श्रूयन्ते (१) एकस्तावत् शाण्डिल्यो भक्तिसूत्रप्रणेता महर्षिः शाण्डिल्यः। (२) अपरो बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य वंशनिरूपके षष्ठे ब्राह्मणे प्रथममन्त्रे "कौशिकात् कौशिकः, कौण्डिन्यात् कौण्डिन्यः, शाण्डिल्याच्छाण्डिल्यः (४।६।१) इत्यादिना वर्णितो वंशर्षिः शाण्डिल्यः। (३) अन्यो व्यासशिष्यः शाण्डिल्यः संहिताप्रणेता महर्षिः शाण्डिल्यः। (४) इतरस्तु जयासंहितानिर्माता नारदशिष्यत्वेन प्रथित-यशा महर्षिः शाण्डिल्यः। परमेषु भक्तिसूत्रप्रणेता महर्षिः शाण्डिल्यः पञ्चरात्रानुयायीति स्पष्टं प्रतिभाति, एतत्सूत्राणां तदनुसारित्वात्।

एवमपि नारदभक्तिसूत्रे स्मृता भक्तेराचार्याः सन्ति पाराशर्य-गर्ग-शाण्डिल्य-ब्रह्मकुमार-व्यास-शुक-विष्णुकौण्डिन्य-शेष-उद्धव-आरुणि-बलि-हनुमद्विभीषणादयः। तथा हि—(१) पूजादिषु अनुराग इति पाराशर्यः

॥१६॥ (२) कथादिपु इति गर्गः ॥१७॥ (३) आत्मरत्यविरोधेनेति शाण्डिल्यः ॥१८॥ (४) नारदस्तु तदर्पिताखिलाचारिता तद्विस्मरणे परमव्याकुलतेति ॥१९॥ (५) तस्या ज्ञानमेव साधनमित्येके ॥२८॥ (६) अन्योन्याश्रयत्वमित्यन्ये ॥२९॥ (७) स्वयं फलरूपतेति ब्रह्मकुमाराः ॥३०॥ (८) इत्येवं वदन्ति जनजल्पनिर्भया एकमताःकुमार-व्यास-शुक-शाण्डिल्य-गर्ग-विष्णु कौण्डिन्य-शेष-उद्धव-अरुणि-बलि-हनुमद्विभीषणादयो भक्ताचार्याः ॥ ८३ ॥

नारदभक्तिसूत्र-शाण्डिल्यभक्तिसूत्रातिरिक्तान्यपि कियन्ति भक्ति-सूत्राणि साम्प्रतं दृष्टिगोचरतामायान्ति। यथा श्रीहरिहरारण्यस्वामिभिर्विरचितानि षड्विंशति (२६) संख्याकानि परभक्तिसूत्राणि। श्रद्धेय-महामहोपाध्याय पं० गोपीनाथकविराजमहोदयद्वारा टिप्पणविवरणादिभिः सनाथीकृत्य सरस्वतीभवनग्रन्थमालातो मुद्रिते भक्तिमीमासानामके ग्रन्थेऽज्ञातकर्तृकानि द्व्यधिकशत(१०२)सूत्राणि, भारतधर्ममहामण्डलतो मुद्रिते दैवीमीमांसादर्शने( ३४२ )सूत्राणि, सत्यनारायणशर्मणो भक्तिसूत्रं च भगवद्भक्ताना हृदयान्यावर्जयन्ति।

एतद्भगवद्भक्तिसूत्रातिरिक्ता अनेकैर्भक्तिशिरोमणिभिर्विद्वन्मणिभिर्भक्तिविषयमधिकृत्य समये-समयेऽनेके ग्रन्थाः प्रणीताः, विविधा निबन्धाश्च लिखिताः। यत्रैतेऽतिप्रसिद्धाः प्रामाणिकाश्च सन्ति।

| | |
|---|---|
| (१) श्रीमधुसूदनसरस्वतीस्वामिनाम् | भक्तिरसायनम् |
| (२) श्रीस्वामिनारायणतीर्थानाम् | भक्त्यधिकरणमाला |
| (३) श्रीनृसिंहभारतीमहोदयानाम् | भक्तिसुधातरङ्गिणी |
| (४) श्रीहरिहरानन्दसरस्वतीनाम् | भक्तिसुधा |
| (५) श्रीरूपगोस्वामिनाम् | (क) भक्तिरसामृतसिन्धुः<br>(ख) उज्ज्वलनीलमणिः<br>(ग) दानकेलिकौमुदी च |
| (६) श्रीजीवगोस्वामिनः | वैष्णवतोषिणी |
| (७) श्रीगीतास्वामिविजयस्य | नवभक्तिरसायनम् |
| (८) श्रीवोपदेवस्य | मुक्ताफलम् |
| (९) श्रीरघुनाथशास्त्रिणः | भक्तितरङ्गिणी |
| (१०) श्रीअनन्तदेवस्य | भक्तिनिर्णयः |
| (११) श्रीसुरेश्वरमिश्रस्य | भक्तिकुसुमाञ्जलिः |
| (१२) श्रीनारायणभट्टस्य | भक्तिसागरः |

| | |
|---|---|
| (१३) श्रीजीवगोस्वामिनः | षट्सन्दर्भः |
| (१४) श्रीरसिकोत्तंसस्य | प्रेमपत्तनम् |
| (१५) श्रीविट्ठलेशस्य | भक्तिहंसः |
| (१६) श्रीलक्ष्मीधरस्य | भगवन्नामकौमुदी |

## भक्तिरससमीक्षा

पुण्यस्थलीभारतभूमिर्हि सरसस्य भक्तिरसस्य स्निग्धया धारया सिक्ता आप्यायिता च वर्तते। भारते भक्तिरसस्य प्रवाहोऽनादिकालत एव प्रचलन्नास्ते। स्निग्धानुरागसम्बन्धा भावप्रवणा भक्तिरसप्लाविता बहवो विद्वांसः सन्तो महात्मानश्चानायासेन परमात्मानमवाप्य कृतकृत्यतामगुः यान्ति यास्यन्ति च।

यद्यपि रसविषयकचिन्तनपरम्पराया उदयस्तु बहुपूर्वत एव जात आसीत्, परन्तूपलब्धसामग्रीप्रामाण्यात् तस्य प्रवर्तनं भरतमुनित एव मन्यते रसज्ञैः। भारते भरतेन मुनिना रसनिष्पत्ति सूत्ररूपेण निर्दिशता तत्र पानकरसन्यायेन दृष्टान्तमुपस्थायात्मसन्तोषो लब्धः। आनन्दसाधनमेव रसतत्त्वस्य चरम लक्ष्यम्। 'रसो वै सः, रसं लब्ध्वा ह्यानन्दी भवति, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, आनन्दाद् ह्येव भूतानि जायन्ते' इत्यादि श्रुतिवचनानि आनन्दस्य परमात्मस्वरूपता प्रतिपादयन्त्यो जीवनस्य परम पुरुषार्थमानन्दमेवामनन्ति। दुःखस्यात्यन्तिकनिवृत्तेरपि समावेश आनन्द एव जायते। आनन्दस्याधिष्ठानमस्त्यात्मा। स चास्ति द्विविधः—एको जीवात्मा, द्वितीयश्च परमात्मा। तत्र वस्तुतः परमात्मैवास्ते आनन्दस्याधिष्ठानम्, तथापि जीवात्मन्यपि सच्चिदानन्दस्वरूपस्य परब्रह्मणोऽशस्य विद्यमानत्वादग्निस्फुलिंग इव समुद्रजलबिन्दुवद्वा जीवे आनन्दानुभूतिर्जायते, आनन्दप्रतिभासो वा भवति।

विषयजन्य आनन्दोऽस्थायी भवति, स्थायी तु त्वात्मगत एवानन्दो भवति। भरतमुनेर्लक्ष्यं जीवगतस्यानन्दांशोद्बोधनमात्रमस्ति। जीवो ह्यनादिकालतो नानायोनिषु बंभ्रम्यमाणोऽनेकाभिर्वासनाभिः परिव्याप्तो भवति। मानवमानसे विविधा वासनाः सूक्ष्मतया तिष्ठन्ते, काव्यार्थचिन्तनयोग्यताऽपि तत्र स्वभावत एव समुद्भवति। अतो विभावानुभावसञ्चारिभावमाध्यमेन रसास्वादस्य प्रक्रियायां 'विचारो रसाचार्यस्य भरतस्यास्ति लक्ष्यम्। वस्तुतोऽयं रसोपक्रमः परमानन्दास्वादस्यास्ति पूर्वपीठिकैव विविधवासनासक्तचेतसां सचेतसां कृतेऽधिकः सुगमश्च।

परमतत्त्वपुरुषोत्तमगताया पूर्णाया रसानुभूतेः सर्वेंदुंष्करत्वाद् भरतादिभिराचार्यैर्न निःश्रेयसाप्तौ समर्थानां श्रवणादिसाधनानां विचारः

प्रस्तुतः, न वा निखिलानर्थनिदानभूतस्याज्ञानस्योन्मूलने प्रयासो विहितः। भरतमुनिना हि महता परिश्रमेण दिव्यज्ञानमन्दरेणागमसिन्धोर्मन्थनं विधाय पीयूषवपुषो यस्य नाट्यशास्त्रस्य प्रणयनमकारि तस्य लक्ष्यं जीवगतानन्दांशस्यास्वादनमात्रमेवास्ते, न तु पूर्णब्रह्मानन्दानुभूतिरपि तस्यास्ति लक्ष्यभूता।

भक्तिरसाचार्यैस्तु न जीवगतानन्दांशमात्रमेव लक्ष्यीकृतम्, प्रत्युत आनन्दराशिभगवद्गतानन्दस्यास्वादनमेवास्ति तेषां वास्तविकं लक्ष्यम्। पुष्कलानन्दरसास्वादस्तु तदैवोद्भवति यदा परमानन्दस्वरूपो भगवान् स्वयमेव मनोगतो भवेत्। तथा चोक्तं श्रीस्वामिवर्यैर्मधुसूदनसरस्वतीपादैः।

भगवान् परमानन्दस्वरूपः स्वयमेव हि।
मनोगतस्तदाकारो रसतामेति पुष्कलम्॥ भ० र० १।१०

अपि च यदा भक्त्या भक्तस्य द्रवितं चित्तं नित्यं विभुं पूर्णबोधं सुखात्मकं च परमात्मानं नितरां समाश्लिष्यति, तदा किमप्यन्यत् कर्तव्यं नावशेषतया अवतिष्ठते। अर्थात् सर्वदेशव्यापकस्य नित्यसुखस्वरूपस्य सर्वतः परिपूर्णस्य परमेश्वरस्य द्रवीभूतेन चेतसा ग्रहणे कृतकृत्यतया न किञ्चिदवशिष्यते। अत एवोक्तं ब्रह्मणा श्रीमद्भागवते भगवन्तं श्रीकृष्णं प्रति।

पुरेह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम्॥१०।१४।५

भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम्।
यद् गृह्णाति द्रुतं चित्तं किमियदवशिष्यते॥

यथा बिम्बस्थानीयं मुखमेव दर्पणाद्युपाधिसम्बन्धात् प्रतिबिम्बरूपं धत्ते, तथैवेश्वरो देहोपाधिसंयोगाद् जीवरूपं गृह्णाति। अत एव जीव ईश्वरवत् पूर्णरसरूपः, तयोर्भेदो नास्ति। दृश्यदर्शकयोरभेदानुभव एव रसस्य परमं प्रयोजनम्। कान्तादिलौकिकविषयेष्वपि रसप्रतीतिकारणं सुखस्वरूपचैतन्यघनमेवास्ति; किन्तु मायाया आवरणशक्त्या आवृतत्वान्न तत्प्रतीयते विशुद्धं भगवत्तत्त्वम्। अत एवोक्तं भर्तृहरिणा वैराग्यशतके।

यदासीदज्ञानं स्मरतिमिरसञ्चारजनितं,
तदा दृष्टं नारीमयमिदमशेषं जगदिति।
इदानीमस्माकं पटुतरविवेकाञ्जनदृशां,
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते॥

अतो द्रवीभूतचित्तवृत्तावाविर्भूतश्चिदानन्द एव रसरूपत्वं प्रतिपद्यते।

यत्र च भरतेन मुनिना नाट्यशास्त्रे नव रसाः स्वीकृतास्तत्र भक्तिसम्प्रदाये पञ्च मुख्याः सप्त च गौणा इति गौणमुख्यभेदाद् द्वादश भक्तिरसाः स्वीक्रियन्ते। भक्तेः सप्त गौणरसाः, साहित्ये तथैव स्वतन्त्रतया स्वीकृताः

शिष्टौ द्वौ शान्तशृङ्गाररसौ भक्तिशास्त्रे शान्तमधुरभक्तिभेदेऽन्तर्गतौ कृतौ। तत्र मुख्यभक्तौ शान्तस्य नामग्राहं ग्रहणं कृतम्, किन्तु शृङ्गारस्य न नामग्राहं ग्रहणमस्ति। वस्तुतो मधुरभक्तिरेवास्ति साहित्यशास्त्रस्य शृङ्गाररसः।

(१) मुख्यो भक्तिरसः

शान्तरसः प्रीतरसः प्रेयान् रसः वात्सल्यरसः मधुररसः

(२) गौणो भक्तिरसः

हास्यरसः अद्भुतरसः वीररसः करुणरसः रौद्ररसः भयानकरसः वीभत्सरसः

भक्तिरसामृतसिन्धौ दक्षिणविभागे पञ्चमलहर्यां स्थायिभावस्य विस्तृतविवेचनप्रसङ्गे स्थायिभावपरिभाषा कुर्वता रूपगोस्वामिना प्रोक्तं यद् यो हि भावो विरुद्धान् अविरुद्धान् वा भावान् स्ववशे कृत्वा उत्तमराजवत् शोभेत स स्थायी भावो निगद्यते।[१]

भक्तिशास्त्रे श्रीकृष्णविषयकरतिरेव स्थायीभावः स्वीकृतोऽस्ति। सा द्विविधा—मुख्यरतिर्गौणरतिश्च। गोस्वामिना स्थायीभावस्य स्वरूपं तु तदेव स्वीकृतं यत् साहित्यशास्त्रे स्वीकृतमस्ति, किन्तु तद्वर्गीकरणव्यवहारो भिन्नप्रकारेणोपस्थापितः। श्रीकृष्णविषयकरतेर्गौणमुख्यस्थायिभावस्य वर्गीकरणं तेन स्वकीयया शैल्या समुपस्थापितम्।




१. अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
सुराजेव विराजेत स स्थायीभाव उच्यते॥




लक्ष्यभेदाद् रसस्य निष्पत्तावास्वादे च भवति भेद स्वाभाविक । 'विभावानुभावसञ्चारिसंयोगाद् रसनिष्पत्ति' इति भरतसूत्रमवलम्ब्य रसनिष्पत्तिविषये यावत्यो व्याख्या उपलभ्यन्ते ता सर्वा अपि भक्तिविषयक रसनिष्पत्तिव्याख्यातो विभिन्ना एव दृष्टिगोचरतामायान्ति ।

भट्टलोल्लटस्योत्पत्तिवादो यत्र विभावादिकारणै सह स्थायिभावस्य ( दमयन्त्यादिदर्शनजनलादिसमवेतरत्याद्युद्बोधस्य तत्कार्यकटाक्षासहचरितोत्कण्ठादीना च ) अनुकार्यनलादिनैव सम्बन्धात् तत्रैव रस उत्पद्यते, नटे तु तत्तदनुकृत्या सादृश्यमूलकारोपो विधीयते । शङ्कुकस्यानुमितिवादो यत्रानुकार्ये नलादौ गृहीतैर्विभावादिभिर्हेतुभिरनुकार्यभिन्ने नटे रसस्यानुमान क्रियते । आभ्यामाचार्याभ्यां प्रदर्शितरसनिष्पत्तिप्रकाराद् भिन्नो भक्तिरसनिष्पत्तिप्रकार । भक्तिरसदृष्ट्या न रसोत्पत्तिरनुकार्ये भवति, नापि नटेऽनुमीयते, प्रत्युत तत्र भक्तस्य भाव एवास्वादगोचरो भूत्वा रसरूपता प्रतिपद्यते ।

नाट्येऽनुकार्यगतभावस्य नटे आरोपसम्भवेऽपि भक्तिक्षेत्रीयरसानुभूतौ यत्त्व श्रवणकीर्तनादावेवाधारितमस्ति । अत एव भट्टनायकस्यापि भावकत्व-भोजकत्वरूपयोर्द्वयोर्व्यापारयोर्नवीनकल्पनाऽपि न कृतकार्या भवति, यत्रैकया विभावादीना साधारणीकरण क्रियते, द्वितीयया च सत्त्वोद्रेकाज्जायमानामानन्दात्मिका संविद्विश्रान्ति ससाध्य रसस्यानुभव क्रियते । न वा व्यञ्जनावादिनोऽभिनवगुप्तस्य प्रमातृगतसहजातमनोभावस्यास्वादनादत्र निर्वाहो भवितुमर्हति, यतो ह्यत्र पात्रगतभावस्य प्रधानपात्रगताभाव विनयस्य सिद्धान्ता न भक्तिरससिद्धान्त मान्यतामर्हन्ति । वस्तुत्वेतेषु मतप्रकारमस्वरूपस्य रसस्य नियतता न सिद्ध्यति । अतो भावनयोत्थमूलान्यतमज्ञानानन्तर जायमाना स्वरधारारूपिणी

प्रतीतिरेव भक्तिरसः। अतएव भक्तिरसायनेऽयं सर्वमान्यः सिद्धान्तः समुद्घोपितः श्रीयतिवर्यमधुसूदनसरस्वतीपादैः।

सानन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम्।
तद्रसः, केचिदाचार्यास्तामेव तु रसं विदुः ॥३।१३॥

अपि च—नित्यं सुखमभिव्यक्तं रसो वै स इति श्रुतेः।
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥३।२२॥

किञ्च—परमानन्द आत्मैव रस इत्याहुरागमाः।
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥३।२४॥

भरतसूत्रे पञ्चमी हेत्वर्था, हेतुत्वं च कारकत्व-ज्ञापकत्वान्यतररूपम्। ज्ञापकत्वं च तद्विषयकज्ञानजनकज्ञानविषयत्वम्, ज्ञानं चात्र त्रिविधम्-प्रत्यक्षम्, अनुमितिः शाब्दबोधश्च। तत्र प्रत्यक्षं द्विविधम्—यथार्थमयथार्थञ्च। अयथार्थं पुनर्द्विधा-दोषजन्यं भ्रमत्वेन प्रसिद्धम्, इच्छाजन्यमारोपत्वेन ख्यातम्। तथा च भट्टलोल्लटादीनां मते रसास्पदनलयुधिष्ठिरादिनायकेपूत्कण्ठादिभिर्हेतुभी रस उत्पद्यते, ज्ञापकहेतुना नटादिपात्रेषु रस आरोप्यते। व्यञ्जनावृत्त्या वा नलदमयन्त्यादीनां गुणक्रियादीनि नटनटीष्वारोप्य अयथार्थानुभवस्वरूपो मनसो रसः साध्यते। एवं च स्वस्वशेमुषीविकासानुसारेण भरतसूत्रघटकसंयोगपञ्चमीनिष्पत्त्यर्थविविधतया अभियुक्ता भट्टलोल्लट-भट्टनायकाभिनवगुप्ताचार्या रसतत्त्वं सोपष्टम्भं प्राचीकसन्।

भक्तिरसे भावस्याश्रयो भक्त एव भवति, न नाट्यगतपात्रं यथा लौकिके रसे जायते। लौकिके रसे शृङ्गाररसास्याश्रयो भवति नलदुष्यन्तादिः आलम्बनविभावस्य च दमयन्तीशकुन्तलादिः, किन्तु भक्तिरसक्षेत्रे राधाकृष्णयोर्द्वयोरपि विवेचनमालम्बनप्रकरणे एव कृतमस्ति। अत एव भक्तिरसानुयायिभिराचार्यैः रसानुभूतेरभिनवा प्रक्रिया कल्पिता।

## मधुरभक्तिपरम्परापर्यालोचनम्

विविधकण्टकाकीर्णं सङ्कीर्णं वर्त्म विहाय परिष्कृतेन घण्टापथेन सञ्चरिष्णुना रसविदां विदां विपश्चितां मतेन "रसो वै सः, रसं लब्ध्वा ह्यानन्दी भवति" इति श्रुत्यनुसारं स्वरूपतटस्थलक्षणलक्षितो ब्रह्म-परमात्मेत्यादिपर्यायो भगवानेवास्ति रसः, तमेव साक्षात्कृत्य स्वल्पानन्दो जीवः प्रशस्तानन्दो भवतीति परमपुरुषार्थप्रापकतया भगवत्प्राप्तये भक्तिमार्गोऽस्त्यतिसुगमो मार्गः यथा सुखेन भक्तैरवाप्यते भगवान् न तथा ज्ञानिभिः[1]।

1. नायं सुखापो भगवान् देहिनां गोपिकासुतः।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥ (श्री० भा० १०।६।२१)

नित्यकर्मानुष्ठानाद् विशुद्धेऽन्तःकरणे श्रवणकीर्तनादिना भवति भगवति प्रेमोद्भव इत्याभिलक्ष्य विपश्चिदग्रेसरा यतिवर्याः श्रीमधुसूदन-सरस्वतीमहोदया भक्तिरसायने सपरिकरं सोपपत्तिकं च भक्तिरसं व्यवातिष्ठपन्। विद्वद्भिश्च भक्तिः ज्ञान-कर्म-योगेभ्यः श्रेष्ठतमा स्वीकृतास्ति।

यथा समुद्रजलं वाष्पमेघवर्षादिक्रमेण परिणतं सत् पुनर्नदनदीद्वारा समुद्रमेवोपगच्छति, तथैव रसस्वरूपात् प्रेमस्रोतसो भगवतः प्रेमधारा निःसृत्य भक्तानां मनांसि सिञ्चन्ती भूयः प्रेमस्रोतःस्वरूपं परमात्मानमेवोपतिष्ठते।

भारतीयप्रेमपद्धतौ प्रेम अनेकेषु रूपेष्वभिव्यक्तं भवति गुरु-शिष्ययोः श्रद्धास्पदं परस्परं प्रेम, पतिपत्न्योरन्योन्यमनुरागाभिधं प्रेम, पितापुत्रयोश्चेतरेतराश्रयं स्नेहाख्यं प्रेम, प्रेमप्रेरितः पित्रादिर्यथा स्वसन्ततिं पालयति, पोषयति, अभिरक्षति च सर्वाभ्यो बाधाभ्यः, तथैवेश्वरोऽपि भक्तप्रेमाभिभूतो भक्तान् पालयति, तेषां हितं विधत्ते, निरन्तरं च तदर्थं चिन्तयति।

यथा पर्वतीयोच्चावचप्रदेशेषु मेघात् पतितं पानीयं शिलाखण्डैः संहन्यमानमितस्तत उपढौकमानं यावत् समतलभूमौ नोपतिष्ठते तावद् निर्मलं स्थिरं वा न भवति, तथैव सृष्टिसमये जीवोऽपि प्रभुपादपद्मतः पृथग्भूय विभिन्नासु योनिषु बंभ्रम्यमाणोऽनेकान् क्लेशांश्च सहमानो विविधां यातनामनुभवन् यावत् प्रभुपादपद्मं नोपतिष्ठते, तावत् तस्य पापतापयोः शान्तिर्न जायते। अतो जीव आनन्दधामानं परमात्मान-मुपस्थायैव परमानन्दमनुभवितुमर्हति, नान्यथा; तदर्थं जगदाधारे भगवति परमप्रेमरूपा, परमात्मनि पराकाष्ठाया अनुरक्तिरेव वा भक्तिरस्ति सरलं साधनम्। तत्राप्यनादिकालतो विविधविषयासक्तस्य जीवस्यानायासेन भगवत्पदप्राप्तये मधुरभक्तिः परमतमं साधनं समवस्थीयते।

यद्यपि मध्ययुगो ह्रासस्य युगः कथ्यते, अथापि भक्तिसाधनसाहित्य-दृष्ट्याऽयमुत्कर्षस्य युगः स्वीक्रियते तज्ज्ञैः। अस्मिन् युगे प्रायो भारतस्य सर्वेषु भागेषु तत्त्वज्ञानिनो दार्शनिकाः, मननशीलाः गभीरविचारकाः, उच्चकोटिकाः साधकाः, वीतरागा महात्मानो भगवद्भक्ताः सन्तश्च प्रादुरभवन्। न केवलं शास्त्रवेत्तारो विद्वांस एव, अपि त्वनधीतशास्त्रा अपरिचिताक्षरा अप्यनुभविनः साधवः सन्तो महान्तश्च भगवद्भक्ति-विषये शास्त्रसम्मतान् स्वानुभूतिनिर्भरान् स्वतन्त्रान् विचारान् वोपस्थापितवन्तः। फलतस्तदानीं योगतन्त्रसाधनोपासनार्चनादयो विविधा मार्गा दृष्टिगोचरतामागताः।

। बृहद्धारीतस्मृतौ सूक्ष्मतया त्रिविधायाः श्रौतस्मार्तागमोपासनापद्धतेः समुपलब्धावपि संहिताग्रन्थेष्वाराधनाप्रक्रियायाः सविस्तरा विचारो विहितः। अभिसंहितानुसारं समाराधनाया द्वे प्रक्रिये स्तः। एकाऽमूर्तोपासना, द्वितीया च समूर्तोपासना। तत्राग्नावाहुतिप्रक्षेपमाध्यमेन क्रियमाणोपासनाऽमूर्तोपासना, प्रतिमादिपूजनञ्च समूर्तोपासना कथ्यते।

*मध्यकालीनवैष्णवसम्प्रदाये मधुरभक्तेः प्रथममुदयो जातः। दाम्पत्य-*प्रेमवर्णनं माधुर्यभावस्य मूलं स्रोतः। ऋग्वेदीयमधुविद्याया अथर्ववेदीय-मधुलतायाश्च प्रतिपाद्या मधुरोपासनेति केषाञ्चिदस्ति मतम्।

वैष्णवभक्तौ माधुर्योपासनाभावस्य मूलान्वेषणे क्रियमाणे तन्त्रेव स्रोतस्सु अवगाहनं समीचीनं प्रतीयते, येषु मधुराया भक्तेस्तत्त्वं स्पष्टतो लक्ष्यते। पाञ्चरात्रसंहितासु ज्ञानपाद-योगपाद-क्रियापाद-चर्यापादाख्याश्चत्वारः पादा विद्यन्ते। तत्राद्ये ज्ञानपादे ब्रह्म-जीव-जगत्-सम्बन्धिनां सिद्धान्तानां निरूपणं विद्यते। द्वितीये योगपादे यौगिकप्रक्रियाया विवेचनं वर्तते। तृतीये क्रियापादे मूर्तिमन्दिरनिर्माणस्थापनपूजनादिविधीनां समावेशः। चतुर्थे च चर्यापादे सगुणोपासनायाः प्रामुख्यं दृश्यते। जयाख्यसंहितायां समूर्तार्चनस्य विस्तारो विहितः। अहिर्बुध्न्यसंहितायां वर्णिताः षड्विधा शरणागतिर्मधुरभक्तेः पूर्वस्थितौ प्रपत्तेः पुष्टेर्वा परिचयं प्रददाति।

आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः। अ० बु० सं० ३।५१

ज्ञानामृतसंहितायां प्रभोः सेवायाः षड् विधयो वर्णिताः सन्ति। ते यथा—स्मरणम्, कीर्तनम्, प्रणतिः, पादवन्दनम्, अर्चनं समर्पणं च। तत्र भगवतः श्रीकृष्णस्य तत्प्रियगोपीनाञ्च प्रचुरं प्रेम वर्णितमस्ति।

मध्ययुगस्योत्तरभागे पाञ्चरात्रसंहिता अनुसरन्त्यो नृसिंहतापिनी-रामतापिनी-गोपालतापिनीत्यादिनाम्ना अनेका उपनिषदो दृष्टिगोचर-तामागताः।

भगवत्पूज्यपाद श्रीस्वामिशङ्कराचार्य-अप्पयदीक्षिताभ्यां पाञ्चरात्र-संहितानां वर्ण्यविषयं विविच्य तासामवैदिकत्वमुद्घोष्य तत्प्रतिपादित-पद्धतेरपेक्षत्वं प्रतिपादितम्। परिणामतः श्रीशङ्कराचार्यस्य विरोधे विशिष्टाद्वैतमतप्रवर्तकेन श्रीरामानुजाचार्येण पाञ्चरात्रसिद्धान्तस्य वेदवत् प्रामाण्यमङ्गीकृत्य साटोपं तत्समर्थनं कृतम्।

पाञ्चरात्रमते क्रियाचर्यातिरिक्ता प्रेममाधुर्ययोरप्यप्रत्यक्षरूपेण स्वीकृतिरस्ति। मध्ययुगे शैवशाक्तमतयोरपि प्रभावश्चरममुत्कर्षमुपगत आसीत्। शासकवर्गेऽपि वैष्णवमतापेक्षया शैवमतानुयायिनोऽधिका आसन्। शैवागमशाक्ततन्त्रशासनपद्धतेरांशिकः प्रभावोऽपि मधुरभक्तेः राधातत्त्वे बहुभिर्विद्वद्भिः प्रदर्शितः।

शैवपु भक्तेपु शिवभक्तेर्यादृशी कल्पनास्ति, शाक्तेपु च त्रिपुरसुन्दर्या यद्रूपमुपवर्णितम्, तादृगेव वर्णनं राधाभावेन गोपीभावेन च बहुत्रो-पलभ्यते। युगलतत्त्वस्य मूलबीजमपि शैवसाधनासरणिपु लक्ष्यते। तन्त्रे भगवान् श्रीकृष्णः कामबीजात्मकः, राधादेवी च रतिबीजात्मिका प्रोक्तास्ति। बौद्धतान्त्रिकसमाराधनाया अपि मधुरभक्तिविकासेऽप्रत्यक्षो योग आसीत्। दक्षिण-भारतीयालवारभक्तानां मनो मुग्धकारिपु गीतेपु मधुरभक्तेः सुन्दरं रूपं दरीदृश्यते। सूफीमतसाधकेष्वपि मधुरभक्तेश्च-मत्कारो विपुलो विलोक्यते। साहित्यस्य शृङ्गाररस एव भक्तिसम्प्रदाये मधुरभक्तिरस्ति।

राष्ट्रभापाया हिन्द्या मध्यकालीननिर्गुणधारायां सन्तकवीनामभि-व्यक्तिष्वपि माधुर्यभावस्य प्राचुर्यं विलोक्यते। दाम्पत्यसम्बन्धरूपकेपु बाहुल्यं तु दादू-कबीर-नानकादीनां रचनासु समुपलभ्यते। निर्गुणो-पासकानां सन्तकवीना माधुर्यभावस्य मर्यादारूपे दृढो विश्वास आसीत्। सन्तकवीरस्त्वात्मानं श्रीरामस्य वधूं मत्वा अमन्दमानन्दमनुभवति स्म। एवं सत्यपि उच्छृङ्खलं प्रेम अनैतिकाचरणवर्णनञ्चैतेपां सन्तकवीनां रचनासु न दृश्यते। कौलकापालिकपाशुपतादिमतेपु साधनावर्णनप्रसङ्गे नारीपुरुपमाध्यमेन मधुरभावस्याभिव्यक्तिर्जाता। परिवर्तिनि सहजिया-सम्प्रदाये तु मधुरभाव परकीयाभावमाध्यमेन चरमं विकाससीमानमुपगतं दृश्यते। इत्थं पाञ्चरात्रसंहितात आरभ्य सहजियासम्प्रदायसाधनपद्धति-पर्यन्त मधुरभक्तेरुपकरणचयनमुपलभ्यते।

मधुरभक्तेः शास्त्रीयरूपस्य विकासस्तु चैतन्यमतानुयायिना वृन्दा-वननिवासिनां षड्गोस्वामिनां ग्रन्थैरेव जातः। तेपां ग्रन्थप्रणयनमूल-प्रेरकः स्वयं चैतन्यमहाप्रभुरेवासीत्। तेन तु स्वयमहर्निशं श्रीकृष्ण-लीलायां निमग्नतैव स्वीकृतासीत् किन्तु तद्भक्तानां कृते शास्त्रीयसुदृढा-धारेण मधुरभक्तेः शास्त्रीयं पक्षं प्रतिपाद्य भक्तेः समुज्वल रूप समुपस्था-पयितुं गोस्वामिचर्या प्रेरिताः सततं प्रोत्साहिताश्च महाप्रभुणा।

तत्प्रेरणामवाप्य तैश्चैतन्यमतानुयायिभिः पण्डितैर्न केवलं मधुरभक्ते रूपरेखैव प्रस्तुता, प्रत्युत तस्या बाह्याभ्यन्तरं रूपमपि सर्वाङ्गपूर्णं परि-

कल्पितम्। एकतस्तैस्तस्यै शास्त्रीयं रूपं प्रदत्तम्, अन्यत्र च तत्सिद्धये शास्त्रतो दर्शनतश्च प्रचुराणि प्रमाणान्युपस्थाप्य सुदृढांश्च तर्कान् संगृह्य स्वस्वग्रन्थेषु साहित्यिकाधारेण भक्तिरसरूपे प्रतिष्ठापिता मधुरभक्तिः, यत्र श्रीमद्भागवतब्रह्मवैवर्तादिपुराण-महाभारत-नारदभक्तिसूत्र शाण्डिल्य-भक्तिसूत्रादीनामपि पर्याप्तं योगदानं दरीदृश्यते।

भक्तेराचार्यैर्गोपीनां भगवति श्रीकृष्णेऽपूर्वा भक्तिः, आदर्शभक्तिरभिमता। तथा हि नारदभक्तिसूत्रे—यथा व्रजगोपिकानाम् (२१), शाण्डिल्यभक्तिसूत्रे च—अत एव तद्भावाद् वल्लवीनाम् (१।२।५)।

वस्तुतो गोपीनां भगवति वासुदेवे आदर्शमयस्य प्रेम्णस्तुलना विश्वप्रेमपरम्परायां न क्वचिद् भवितुमर्हति। साधनामार्गे यावती प्रेममात्रा अधिका भवति, तावत्येव श्रेष्ठतमा भवति भक्तिः।

गोपिकानां प्रेम्णः केन्द्रबिन्दुः षोडशकलश्चन्द्र इव पूर्णकलो भगवान् श्रीकृष्णचन्द्र एवासीत्, यस्मिन् ताभिः सकलाः शारीरिक्यश्चेष्टा मानसानि सुखानि दुःखानि च समर्पितान्यासन्। क्षणमात्रमपि श्रीकृष्णविरहे तासां जीवनं जलविहीनो मीन इव व्याकुलमासीत्। केवलं तत्प्राप्तिलालसायामेव ताभिः प्राणधारणं कृतम्। तदुक्तं श्रीमद्भागवते स्वयमेव भगवता श्रीकृष्णेनोद्धवं प्रति व्रजे गोपीनां सविधे स्वसन्देशं प्रहिण्वता।

> गच्छोद्धव! व्रजं सौम्य! पित्रोर्नौ प्रीतिमावह।
> गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय॥
> ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः।
> मामेव दयितं प्रेष्ठमात्मानं मनसा गताः।
> ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम्॥
> मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः।
> स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः॥
> धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन।
> प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिकाः॥ ४६-३-६

इदमेव विशुद्धस्य प्रेम्णः सत्यं स्वरूपम्, यतो हि तत्र न लौकिकरागजन्यबन्धनस्य विषयवासनाया वा सत्ता तिष्ठति। अत एव भक्तिसम्प्रदाये विशुद्धस्य प्रेम्णोऽपूर्वं स्थानमङ्गीकृतमस्ति। विशुद्धं प्रेमैवास्ति भक्तिभूमिकाया आधारस्तम्भः। समस्तानि साधनानीदमेव लक्ष्यीकृत्य भक्तेरैकान्तिकावस्थापर्यन्तमुपस्थापयितुं मार्गं प्रशस्तं कुर्वन्ति। भगवत्य-

नन्यं प्रेमैव भक्तिमार्गस्यास्ति प्राणः, यद् विना भक्तिर्भवति निष्प्राणा आडम्बरमात्रं वा। महत्त्वमेतदेव स्वीकुर्वता देवर्षिणा नारदेनात्मीये भक्तिलक्षणे प्रेम्णः निवेशः कृतः—सा त्वस्मिन् परमप्रेमरूपा ॥२॥

अत एवानन्दसिन्धौ परमप्रेमास्पदे भगवति श्रीकृष्णे गोपीनामपूर्वं भक्त्यात्मकं स्वाभाविकं प्रेम पर्यालोच्य ज्ञानिनाप्युद्धवेन तासां चरण-रेणुस्पर्शस्पृहया वृन्दावनस्थेषु तृणतरुगुल्मलतादिषु किमपि जन्म वाञ्छता प्रेमगद्गदया वाचा आत्मनः सौभाग्यवैभवं सूचितम्[1]।

योगिराजस्यारविन्दस्य मतेनापि भगवत्प्राप्तिमार्गे प्रचुरं प्रेमैवैकं पाथेयमस्ति, येन निश्चप्रचं प्रभुं प्राप्तुं शक्यते। अनिर्वचनीयं प्रेमस्व-रूपम् (५१) इति सूत्रयता भगवता नारदेन प्रेमस्वरूपस्यानिर्वचनी-यत्वमुपस्थाप्य प्रोक्तम्, यदस्यामवस्थायां भक्तो भगवत्स्वरूपामृतमास्वा-दयन्नपि न वाणीद्वारा स्वानुभवं प्रकटयितुं प्रभवति। "तत् प्राप्य तदेवा-वलोकयति, तदेव शृणोति, तदेव चिन्तयति च (५५)।"

भक्तो यदाऽऽत्मानमसहायं मत्वा प्रेममयस्य परमात्मनश्चरण-कमलयोरात्मनं समर्प्य तदिच्छानुसारी जायते, तदा स एव तस्य योगक्षेमं निर्वहति। इयमेवास्ति गीतोक्ता मुख्या शरणागतिः, इयमेव च संसार-सागरसन्तरणाय सुगमं साधनं, सर्वाश्रयाश्रये परमात्मनि सच्चिदानन्द-स्वरूपे तल्लीनतासम्पादनाय च श्रेयस्करः पन्थाः।

वस्तुतो रूपगोस्वामि-सनातनगोस्वामिनोः प्रगल्भया प्रतिभया चैतन्यमतस्य धार्मिकं दार्शनिकं साहित्यिकं च स्वरूपं प्रकाशे समागतम्। भक्तिरसनिरूपणे गोस्वामिवर्याणां योगदानं सर्वाभ्यर्हितं महत्त्वपूर्णं चास्ति। भक्तिरसामृतसिन्धौ रूपगोस्वामिना तर्कसम्मतया शास्त्रीय-पद्धत्या सप्रमाणं भक्तेः रसरूपता प्रसाधिता। उज्ज्वलनीलमणौ च मधुरभक्तेः शास्त्रीयं निरूपणं कुर्वता राधाकृष्णयोः परस्परं प्रेमपर्या-लोचनप्रसङ्गे तेन विभावानुभावसञ्चारिभावानां साङ्गोपाङ्गविवेचन-पूर्वकं भक्तिरसो रसपदे प्रतिष्ठापितः। दानकेलिकौमुद्यां श्रीकृष्ण-विषयिणी भक्तिः प्रतिपादिता। भक्तिरत्नाकरस्तु अन्वर्थनामैवास्ति, यत्र च साङ्गोपाङ्गाः सर्वे भक्तिविषयाः सविस्तरं समुपस्थापिताः सन्ति।

---

1. आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्॥
—श्रीमद्भागवते १०।४७।६१।

जीवगोस्वामिनस्तु भक्तिरसामृतसिन्धावन्वयंनाम्नीं 'दुर्गसङ्गमनी' नाम्नीं टीकां कृत्वा वस्तुतो दुर्गमानि मूलस्थलानि समजीगमन्।

एवं वेदोद्भूता उपनिषद्भ्यश्च स्पष्टमग्रेसरन्ती, भगवद्गुणलीलाधामचरितानि चर्चयन्ती तदर्चनादिविधानं बोधयन्ती, निराकारं च ब्रह्म भक्तानां कृते साकाररूपेण स्थापयन्ती पौराणिकी भगवद्भक्तिविचारधारा मध्यकालीनानां महात्मनां सतां विद्वद्धौरेयाणां च वृद्धिषु विशदतया अभिनवरूपेण परिणता सती शैवशाक्तवैष्णवादिधारासु प्रसृता। अनन्तरं भक्तकवीनां हृदयपटलेषु काव्यप्रवृत्त्या सह भक्तिप्रवृत्तिर्जागृता, या शनैः शनैः संस्कृतप्रणयिभिः, हिन्दीप्रेमिभिः, अन्यभाषाविज्ञैश्च विद्वद्भिरप्रसारिता प्रसार्यते च निरन्तरम्।

मानवयोनौ समुन्नतजीवनमभिलक्ष्य भक्तिभावनाया विषये बहुभिविपश्चिद्भिर्विवेकपूर्णो विपुलो विचारः प्रस्तुतः, येन भव्या भक्तिस्रोतस्विनी भारतीयलोकमानसमनन्तकालत एव भगवदुन्मुखं विदधाना संस्कृत-प्राकृत-पालि-अपभ्रंश-हिन्द्यादिभाषाद्वारा प्रस्फुटिता जाता। काव्यानन्द-ब्रह्मानन्दयोः सहोदरत्वरूपस्य चारितार्थ्यं भक्तिसाहित्येऽप्यवलोक्यते। साधकैरनुभूते यस्मिन्नुच्चशिखरे ब्रह्मानन्दस्योपलब्धिः कृता, तत्रैवानिर्वचनीयानन्दस्याभिव्यक्तिर्भक्तकवीना रचनास्वप्युपलभ्यते।

यद्यपि भक्तिसम्बन्धिनी रचना प्राचीनसाहित्येऽपि प्रचुरमात्रायां प्राप्यते, किन्तु मध्यकालीनभक्तकवीनां कृतिषु यथा निपुणतया, तल्लीनतया, एकात्मतया च भक्तिभावनाया यादृश विविधं मनोरमं रूपं व्यक्तीभवति, न तादृशमन्यत्रोपलभ्यते।

युगेऽस्मिन् प्रधानतया हिन्दीसाहित्यक्षेत्रे निर्गुण-सगुण भक्तिविकासाय कबीर सूफी-जायसी-कृष्णभक्तसूरदास-रामभक्तगोस्वामितुलसीदासप्रभृतीनां सन्तकवीनां महत्त्वपूर्णं योगदान जातम्। अत एव हिन्दीसाहित्यस्यायं कालो भक्तिकाल इति नाम्ना व्यवह्रियते। भक्तिकालोऽयमादौ द्वयोर्धारयोर्विभक्तः, यत्रैका निर्गुणधारा, द्वितीया च सगुणधारा कथ्यते। इमे द्वे अपि धारे पुनर्द्वयोर्द्वयोः शाखयोर्विभक्ते। तथा च निर्गुणधारायां ज्ञानाश्रयी प्रेमाश्रयी चेति द्वे शाखे जाते। सगुणधारायां रामभक्तिः कृष्णभक्तिश्चेति मान्यतमे द्वे शाखे अभूताम्। तत्र ज्ञानाश्रयीशाखायाः प्रमुखः प्रतिनिधिकविः कबीरोऽस्ति, प्रेमाश्रयीशाखायाश्च मुख्यो मलिकमुहम्मदजायसी। यत्र कृष्णभक्तिकाव्यस्य प्रातिनिध्यं कविवरः सूरदासः करोति, तत्र रामभक्तिकाव्यस्य गोस्वामी तुलसीदासः।

एवं पारसीक-बौद्ध-जैन-ईसाई-इस्लामधर्मेष्वपि भक्तिप्रणालीनां प्रचुरा चर्चाऽस्ति ।

वस्तुतः स्वेष्टदेवताराधनं विना न कैश्चिदपि सम्प्रदायैः, न वा कैश्चित् पुरुषैरुत्कर्षमवाप्तुं शक्यते । अत एव विश्वस्मिन् सर्वेषु सम्प्रदायेषु स्व-स्वविश्वासानुसारं विभिन्ना भक्तिसम्बन्धिनो विशेषा दरीदृश्यन्ते ।

भगवन्नामगुणादिश्रवणं भक्तेरस्त्यारम्भिकं सोपानम्, यद्धि यदा कीर्तनस्मरणात्मनिवेदनादिद्वारा साधकं भगवत्-पादपद्मप्रासादे प्रापयति, तदा स कृतकृत्यो भूत्वा लोकातीतं पूर्णं सुखमनुभवति ।

मधुरभक्तेरस्ति महत्त्वपूर्णमेकमिदं वैशिष्ट्यं यद् मधुरभक्तिमार्गो हि न लौकिकं जीवनमुपेक्षते, अपि तु लोकवासनां स्वीकृत्य तस्या मार्जनं संशोधनमुन्नयनं वा प्रक्रिययाऽनया क्रियते । अस्याः प्रधानं लक्ष्यं सांसारिकव्यवहारस्वीकृतिपूर्वकं मानवमनस्यनुद्बुद्धानन्दोद्बोधनमेवास्ति । यथा उच्चतमसाधकवर्ग इन्द्रियदमनेनान्ते भगवत्प्रेमैव प्राप्यते, तथैव माधुर्यभावस्य साधकोऽपि तदेवाभिलक्ष्य तत्र प्रवर्तते । क्रियमाणेऽप्यनेके प्रयासे मानवोऽनादिकालतोऽनुस्यूतां मनसि स्थितां कामवासनां न सहसा सर्वथा समुच्छेत्तुं पारयति । अतस्तां साधनं विधाय तस्या उन्नयने संशोधने मार्जने च प्रवर्तते । अत एव शाक्तैः, तान्त्रिकैः, बौद्धैः, ईसाई-सूफी-मतानुयायिभिर्भिन्नैः साधकैरपि काममतिरस्कृत्य भक्त्या तं दिव्यप्रेम्ण उदात्तभूमौ शनैः शनैः प्रतिष्ठाप्य तस्य संशोधनाय उन्नयनाय च महान् प्रयासो विधीयते । भगवति विलीनः कामो न किमप्यनर्थं कर्तुं प्रभवति ।

मधुरभक्तौ यस्योदात्ततमस्य प्रेम्णः कल्पनाऽस्ति, न तद् यौनेन सम्बन्धेन समुद्भूतं कामेच्छापरकं प्रेम अभिमतमस्ति । यतो हि कामजन्ये प्रेम्णि स्वसुखस्य प्राधान्यं तिष्ठति, न तत्र प्रियतमस्य सुखेन सुखित्वमपेक्षितं भवति, किन्तु भगवति प्रेम स्वसुखविवर्जितम्, तत् सुखप्रधानमेव भवति । तत्र न जायते स्वसुखसुखित्वस्य लेशोऽपि, अपित्वात्मविस्मृति-पूर्वकं परमात्मनः सुखसुखित्वस्यैवोत्कृष्टा कामनैव जागर्ति ।

लोके दाम्पत्यभावसंश्लिष्टः शृङ्गारात्मको भावो निम्नकोटिको मन्यते, तदुन्नतो वात्सल्यभावः, ततः सख्यस्याऽस्ति स्थानम्, तदुपरि दास्यभावः, तदनन्तरं निर्वेदपोषकः शान्तभावो मान्यो भवति, किन्तु माधुर्यभावे क्रमस्याऽस्य पूर्णतया विपर्ययो दृष्टिगोचरो भवति । अयं शान्त-दास्य-सख्य-वात्सल्य-दाम्पत्यभावक्रम उत्तरोत्तरोत्कृष्टतया ग्राह्यो

भवति। दाम्पत्यभावः कान्तभावः, शृङ्गारभावश्चैकस्यैव भावस्य सन्ति द्योतकाः, मधुरभावो वा अस्यैवास्ति परिचायकः।

मधुरभक्तेरियमेकाऽस्त्यपरा विशेषता—अस्यां विधिनिषेधयोर्बाह्य-प्रपञ्चाज्जायते विमुक्तिः। विधिनिषेधयोः प्रपञ्चो हि भवति सदैव बाह्या डम्बरे पर्यवसितः। अतो यदि तं परिहाय भक्तिपथं प्रशस्तं क्रियेत, तर्हि स निश्चप्रचं सर्वजनसुलभ आकर्षकश्च भवितुमर्हेत्।

गृहस्थाश्रमे स्थितानां पुंसां भक्तिपथे समारोढुमनया मधुरभक्त्या संभवति सुखदं साहाय्यम्। समाराध्ययो राधाकृष्णयोर्दाम्पत्यभावं स्वीय-लौकिकजीवनस्य दाम्पत्यभावेन सह मेलयित्वा शनैः शनैः कामवासना-समुन्नयनपूर्वकं भक्तिमार्गेऽग्रेसर्तुं शक्यते। मार्गस्यास्य रहस्यं सम्यगन-वबुध्य यदि सामान्यलौकिककामवासनारूपेण ग्रहणं क्रियेत, तर्हि मन्ये समस्तं माधुर्यतत्त्वं कामकेलिकर्दमकलुषितं सद् यौनभावनात्मिपर्यन्तमेव सीमितं स्यात्। दशायामस्यां न शृङ्गारस्योन्नयनं मार्जनं संशोधनं वा सम्भवति, नापि साधकस्याभ्युदयो भवितुमर्हति। अत उच्चकोटिकाः साधकाः सर्वथा स्वसुखमुपेक्ष्य भगवत्सुखाय तदात्मानं समर्प्य मधुरभावेनादर्श-मुपस्थापयन्ति। तन्मयताद्वारा पृथक् सत्ताया अभावात् भक्तहृदयेषु पूर्णं सुखं जायते। वैषयिकसुखे न पूर्णता प्रत्युत पूर्णं सुखमस्ति आनन्द-रूपिः सच्चिदानन्दस्वरूपः साक्षाद् भगवानेव। यतो विषयानन्दो न ब्रह्मानन्दः, न हि ब्रह्मानन्दाभासस्वरूपः। साधको यथा यथा विषयानन्दं परित्यजन् ब्रह्मानन्दाभिमुखमग्रेसरति, तथा तथा यथार्थमस्याधिकाधिका

श्रीकृष्णः व्रजगोपिका उद्दिश्य स्वमुखेनाह[1]।

भक्तेर्विकासेन सह परमात्मानं प्रत्यनुरागस्याभिव्यक्तेः क्रमिकविकासस्यानुशीलनेन स्पष्टं प्रतीयते यत् पाञ्चरात्रसम्प्रदाये साधकैरीश्वरभक्तेर्यद्रूपमङ्गीकृतं तत्र प्रेमानुरागयोर्विशिष्टं स्थानमासीत्। महाभारतकाले भक्तानां मनःसु अनुरागस्य प्रेम्णो वा भावः पूर्णतया समाविष्टः पुराणकाले च नवधाभक्तिमूले भावस्यास्य प्राधान्यं प्रचुरता वा दरीदृश्यते, चैतन्यमते त्वस्य भावस्यांशः सर्वाधिकया मात्रया विकसितो जातः, यत्र पञ्चमपुरुषार्थरूपस्य स्वतन्त्रस्य भक्तिरसस्य साङ्गोपाङ्गं निरूपणं विधाय मधुरभक्तेः विकासश्चरमं सीमानमुपगतः।

## भक्तेरुद्गमस्थानम्

भारते भक्तेरुद्गमः कदा कथं च जात इति प्रश्नस्योत्तरे पाश्चात्त्यविपश्चितां प्राच्यविद्याविशारदानां च कथनमस्ति यद् भारते भक्तिकल्पना ईसाईधर्मस्यास्ति दाय-। पाश्चात्त्ये जगति कर्मप्रधानयहूदीधर्मापेक्षया ईसाईधर्मे प्रेम्णः प्रचुरता विद्यते, यतो हि ईसाईधर्मस्य मूलसिद्धान्तोऽस्ति भगवति प्रेमप्राचुर्यं भगवतो भक्तिर्वा। अतः पाश्चात्त्यानां विदुषां मतेन ईसाईधर्मे एव सर्वप्रथमं भक्तेः समुदयो जातः। तत एव लब्धप्रतिष्ठा भक्तिर्भारतवर्षेऽपि प्रविष्टा सती सर्वत्र सादरं प्रचारिता प्रसारिता चाभवत्। एवं भारतवर्षं भक्तेः कल्पनायामीसाईधर्मस्यास्ति अधमर्णः। तस्माद् भारतभूमौ भक्तिप्रचारे प्रसारे च ईसाईधर्मस्यास्ति प्रचुरः प्रभावः।

किन्तु समीक्षाजगति पाश्चात्त्यविपश्चितामिदं मतं नितान्तं निर्मूलं निराधारं कपोलकल्पितं सर्वथा अप्रामाणिकञ्च मन्यते। वैदिकवाङ्मयस्यानुशीलनेनैव निष्कर्षो निःसरति यद् यथा वेदो ज्ञानकर्मणोरुद्गमस्थलं तथैव भक्तेरपि मूलं स्रोतो वेद एव विद्यते।

यद्यपि वेदेषु स्पष्टतया भक्तिशब्दो नोपलभ्यते, तथापि वेदमन्त्रेषु देवानां स्तुतिषु तैः साकं मातृ-पितृ-भ्रातृ-सुहृदादीना स्निग्धसम्बन्धा विविध-

1 न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः।
या माभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद् वः प्रतियातु साधुना॥
—श्रीमद्भागवते १०।३२।२२

प्रकारको हृदय क्रमः सम्बन्धः स्तुतिकर्तृ॒णामन्तःकरणेषु देवान् प्रति स्पष्टतः प्रेम्णोऽनुरागस्य वा सद्भावं व्यञ्जयति येन तदुन्मुखीभवति प्रवृत्तिः।

वेदे वैदिकदेवेषु प्रधानो देवराज इन्द्रः शौर्यस्य प्रतीकः प्रोक्तः। दस्यूनां दमने मानवाः तस्य सततं साहाय्यं कामयन्ते। तदनुकम्पया चार्याः शत्रून् शातयितुं समर्था जायन्ते। स न केवलमुपासकानां सखा, माता पिता वा स्वीकृतोऽस्ति, अपि तु पितॄणामपि श्रेष्ठतमो वर्णितोऽस्ति।[1]

एवमिन्द्रो मित्रतायाः सहृदयताया मातृत्वस्य पितृत्वस्य चावासभूमिरभिमतोऽस्ति। किं तेन सहैवंविधं भावपूर्णं स्निग्धानुरागसम्बन्धं विलोक्य वेदेष्वनुरागातिशयसूचकभक्तेरसद्भावं कल्पयितुं शक्यते? तस्मात् स्तवनकाले विभिन्नदेवानां भावप्रवणासु स्तुतिषु श्रूयमाणा तादृशी सरसतापूर्णभावुकता नीरसहृदयेषु न सम्भवतीति स्तोतॄणां हृदयेषु भक्तिसद्भावः कल्प्यते। देवानां स्तवनकाले स्तोतॄणां हृदयेष्वनुरागविशेषस्य सत्तया पूज्येष्वनुरक्तिसूचकभक्तेरपि स्फुट आभासः प्रतीयते।

ब्राह्मणग्रन्थेषु कर्मकाण्डस्य प्राधान्येऽप्युपासकानां हृदयेषु भक्तिभावस्यानुरागात्मिका प्रवृत्तिरुत्तरोत्तरं वर्द्धमानैव दृष्टिगोचरी भवति। आरण्यकेषु बहिर्यागापेक्षया आन्तरयागायैवाधिकं महत्त्वं दत्तमस्ति। उपनिषत्सु च चित्तवृत्तिनिरोधात्मकेन योगेन पुष्टं साधकानां हृदयं भक्त्यावधिकमाकृष्टं जायते। श्वेताश्वतरोपनिषदि स्पष्टतया भक्तिशब्दस्य प्रयोगो दृष्टिपथमायाति अग्रे उपनिषत्सु प्रतिपाद्याया एव भक्तेर्विशदतया विकासो महाभारते, श्रीमद्भगवद्गीतायाम्, श्रीमद्भागवतादिमहापुराणेषु भक्तिसूत्रेषु वैष्णवादीनां साम्प्रदायिकग्रन्थेषु च जातः। प्राय इमे ग्रन्थाः पाश्चात्यजगता सार्द्धं भारतवर्षस्य सम्पर्कात् पूर्वमेव निर्मिताः, प्रामाणिकरूपेण स्वीकृताः सर्वमान्याश्च जाताः सन्ति।

---

१. त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ अधा ते सुम्नमीमहे।
(ऋग्वेदे ८।९८।११)

अपि च—सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः।
(ऋग्वेदे ४।१७।१७)

२. यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥६।२३॥

महर्षिणा शाण्डिल्येन स्वकीये भक्तिसूत्रे स्पष्टतया प्रतिपादितमस्ति यद् भक्तिः श्रुतितो ज्ञातुं शक्या—"भक्तिः प्रमेया श्रुतिभ्यः" (१।१२।६) सूत्रस्यास्य व्याख्यानं कुर्वता स्वामि नारायणतीर्थेन भक्तिचन्द्रिकाभिधायां टीकायां भक्तेस्तद्भेदानां च प्रदर्शनाय व्याख्यासहिता अनेके वेदमन्त्राः समुद्धृताः सन्ति, येषु श्रवणकीर्तनभगवदर्पणानां स्पष्टं प्रतिपादनं भवति।

इत्थं वैदिकवाङ्मयस्य समीक्षया निष्कर्षो निःसरति यद् भक्तिसिद्धान्तो वैदिकोऽस्ति य उपनिषद्द्वारा परिपुष्टः पुराणेषु च पूर्णतया विकसितः सन् विविधैश्च भक्तिग्रन्थैः समस्तासु भारतभूमिषु प्रचारितः प्रसारितश्च जातः। यथा वेदो ज्ञानकर्मणोरुद्भवभूमिरस्ति, तथैव स भक्तेरप्युद्गमस्थलो वर्तत इत्यत्र नास्ति काचित् संशीतिः। भारतीयानां विदुषां मतेन समेषां सिद्धान्तानां मूलं वेद एव वर्तते। अतो भक्तिसद्भावोऽपि वेदत एव जातः। तस्माद्भक्तेरर्वाचीनत्वमवैदिकत्वं चेति मन्यमानानां पाश्चात्यविपश्चितां मतं सर्वथा निर्मूलम्।

यच्च डॉ० ग्रियर्सनमहोदयेन प्रबन्धमेकं लिखित्वा रायल-एशियाटिक-सोसायटी-सभायां पठितस्तत्र तेनेदं साधयितुं प्रयतितं यद् भारतवर्षे भगवद्भक्तिरीसासंप्रदायानुयायिभिः प्रचालिता। ईसामसीहस्य धर्मप्रचारकः सेन्टटामसनामक एकः शिष्यो भारते आगत्य दक्षिणदेशे मद्रासे स्थितः, तत्र तेन स्वीयः संप्रदायः प्रसारितः। तत्कालादेव भारतवर्षे भक्तिमार्गः प्रचलितः, पश्चाद्दक्षिणत एव समस्ते भारते भक्तिमार्गस्य प्रसारो जातः इतः पूर्वं हिन्दुषु भक्तिमार्गो न प्रचलित आसीदिति।

तन्न युक्तिसहम्, यतो हि ईसामसीहात् प्रागपि भारतवर्षे भक्तिमार्गः प्रचलित आसीदिति ग्रीकदेशीयस्येतिहासकारस्य मेगस्तनीजस्य लेखैरेव प्रमाणितं भवति। ग्रीकदेशाधिपतेः सेल्यूकसस्य राजदूतो मेगस्तनीजो मगधेश्वरस्य सम्राजश्चन्द्रगुप्तमौर्यस्य राजधान्यां पाटलिपुत्रे बहुतिथं कालमुषित्वा पुस्तकमेकं लिखितवानस्ति। तत्र तेनोल्लिखितमस्ति यत् शौरसेनीषु मथुराप्रदेशे वासुदेवस्योपासना प्रचलिता आसीत्। पुस्तकमदस्तेन ईसामसीहात् त्रिशतीपूर्वमेव लिखितम्। मेगस्तनीजानुसारमीशापूर्वं चतुर्थशताब्द्यामपि भारते भक्तिमार्गः प्रचलित आसीत्। घोसुण्डीशिलालेखे (ई० पू० २००) भगवत्सङ्कर्षणवासुदेवयोः पूजार्थं शिलाप्राकारनिर्माणस्योल्लेखो विद्यते, नानाघाटलेखे (ई० पू० १५) सङ्कर्षणवासुदेवयोः पूजाया वर्णनमुपलभ्यते।

महाभारते वासुदेवः (प्रकृतिः), संकर्षणः (जीवः), प्रद्युम्नः (मनः), अनिरुद्धः (अहङ्कारः) इति चत्वारो व्यूहाः प्रोक्ताः। एते ईश्वरस्यैव

रूपान्तराणि सन्ति। अहङ्कारत एव शनैः शनैर्भक्तिद्वारा भक्तो वासुदेवं प्राप्नुवन्ति। किञ्च भगनावशिष्टा प्राचीनामुत्तुङ्गभूमिं च खनित्वा खनित्वा प्रस्तरान् खर्पराणीनि च नि.सारयितुं सतत सन्नद्धेन पाश्चात्यविद्वद्बहुलेन पक्षपातरहितेन भारतीयेनोत्खननविभागेन तत्तत्स्थानेपु या मूर्तयो मुद्रा *शिलालेखाश्चोपलभ्यन्ते,तेभ्योऽपि ईसामसीहात् पूर्वं भारते वासुदेवोपास*नाविषये स्पष्ट प्रमाण मिलति। उत्खननविभागेनैको भेलसा ( विदिशा ) समीपे बेसनगरे वसुदेवनिमित्तमेवंविधो गरुडध्वजस्तम्भोऽवाप्तोऽस्ति यं निर्माय तक्षशिलानिवासी वासुदेवोपासको हिलियोडोरनामको ग्रीकराजदूत ईसामसीहात् सार्द्धशतवर्षपूर्वमेव स्थापितवानासीत्। भक्तिमन्तरा उपासनाया सम्भवो नास्ति, यत्तो भक्तिरस्त्युपासनाया. प्राण, नापि भक्ति विना यज्ञादिकर्म अनुष्ठातु शक्यते। अतो भक्तिमार्ग ईसामसीहाद् बहुपूर्वत एव भारते प्रचलितो वर्तते। गीताया भक्तियोगस्य विशिष्ट विवेचनमस्ति। भगवता श्रीकृष्णेन चार्जुनाय स्थाने स्थाने भगवत्प्रपत्तेरुपदेशो दत्तोऽस्ति। कलिकातास्थ इम्पीरियल - लाइब्रेरीभूतपूर्वग्रन्थाध्यक्षो बहुभाषाऽभिज्ञो हरिनाथदे-महोदयश्चीनभाषायामेकं *गीतानुवादं दृष्टवानस्ति, य ईसामसीहाद् द्विशतीपूर्वमेव लिखितोऽस्ति।* अपि च डॉ० ग्रियर्सनादपि पूर्वं सर्वप्रथम शर्मण्यदेशायो डॉ० लोरिनजरनामा विद्वानपि स्वकीये श्रीमद्भगवद्गीतानुवादेऽस्या समस्याया दृष्टिपात कुर्वाणो लिखितवानासीद् यद् न्यूटेस्टामेन्टस्य बहव उपदेशा गीतायामुपलभ्यन्ते। अतो न्यूटेस्टामेन्टोऽस्तस्ति प्राचीनस्त परं गीताया निर्माण जातम्। एतदभिप्रायक एकैक प्रबन्ध इण्डियन-आन्टिक्वेरिनामिकाया मासिकपत्रिकायामपि प्रकाशित आसीत्, किन्तु डॉ० म्यूरो नैतत्स्वीकृतवान्। शर्मण्यदेशीया डॉ० लासन विर्टलिकप्रभृतयो महाविद्वांसो डॉ० म्यूरस्य निर्भय समर्थन कृतवन्त। एतेनापीसामसीत् पूर्वमेव गीताया निर्माण जातमिति निर्विवाद सिध्यति। तस्माद् डॉ० ग्रियर्सनप्रभृतीनामुक्तय सर्वथा निर्मूला भ्रान्तिपूर्णा उपेक्ष्याश्च सन्तीत्यत्र नास्ति कश्चित् सन्देहलेश.। अतो भक्तेरुद्गमस्थान भारतवर्षमिति निर्विवादम्।

## भक्तेरुपासनामूलकत्वम्

उपासना किल भवति भक्तिमूला। यथा स्थूलशरीरेण सह प्राणाना सम्बन्ध तथैव भक्त्या सहोपासनाया अप्यस्ति स्वाभाविक सम्बन्ध। यथा स्थूलशरीराद् नि सृतेपु प्राणेपु तद्धि शवरूपं भवति, तथैव भक्ति-

मन्तरोपासनाऽपि व्यर्थैव। यद्युपासनाया भक्तेः सम्बन्धो न स्यात्तर्हि नासावुपासनाशब्दवाच्या भवितुमर्हति। अतो यथा प्राणान् विना शरीरं नैव स्थातुं शक्नोति, तथैव भक्तिं विनोपासनाऽपि न सम्भवतीति फलतो भक्तिरूपोपासनायाः प्राणस्वरूपा सिध्यति। अत एवोक्तम्- 'तस्याश्चैव द्विजा ज्ञेया भक्तिः प्राणस्वरूपिणी।'

सकाम-निष्कामभेदेनोपासना द्विविधा। तत्र निष्कामोपासनैव मुख्या, तस्या एव भक्तिशास्त्रेषु प्रशंसा कृताऽस्ति। यत्र कुत्राप्युपासनामूलकस्य कर्मकाण्डस्यावरत्वप्रदर्शनमुपलभ्यते तत्र सकामत्वमेव कारणमस्ति। यतो हि वैष्णवैः केवलं निष्कामोपासनाया एव महत्त्वं स्वीक्रियते, तस्या एव च सर्वत्र प्राशस्त्यमुच्यते। भक्ता हि व्यक्ताव्यक्तोपासनारूपेण भगवन्तमुपासते। तत्र व्यक्तोपासनैव सरला, अव्यक्तोपासना तु महती कठिनाऽस्ति। सगुणसाकारादिरूपेण भगवत उपासना व्यक्तोपासना कथ्यते। तत्रोपास्योपासकभावो यावत्तिष्ठति तावद् द्वैतभावोऽवश्यमेव तिष्ठति। पराभक्तेरवस्थायां यदा उपासको भक्त उपास्यदेवतया सह तन्मयो भवति, तदा द्वैतभावो विनश्यति। सैवास्ति परमानन्दस्यावस्था। अनेके एवंविधा भक्ताः सन्ति, य उपासकभावं कदाऽपि त्यक्तुं न वाञ्छन्ति, तैस्तत्रैव महानन्दोऽवाप्यते। एवमपि सन्ति भक्ता ये मुक्त्यवस्थायामपि भक्तेरानन्द एव श्रेयोमार्गं मन्यन्ते। शैव-शाक्त-वैष्णव-सौर-गाणपत्यभेदेनोपासना पञ्चायतनमुच्यते। तत्र पञ्चसु देवेषु स्वेच्छया स्वरुच्यनुसारं प्राधान्येन यं कञ्चिद् देवमिष्टदेवं मत्वा विशिष्टरीत्या तदाराधना कर्तव्या, परमन्येषां देवानां निन्दा न विधेयेत्येवायमस्त्युदारो मार्गः।

उपासना हि हिन्दुधर्मस्यास्त्येकं स्वतन्त्रं मननीयमावश्यकं चाङ्गम्। उपपूर्वकाद् आसु उपवेशने इत्यस्माद्धातोर्भावे ल्युट्प्रत्ययेन निष्पद्यते उपासनाशब्दः, यस्य निर्गलितोऽर्थः सम्पद्यते—स्वकीयस्योपास्यदेवस्य समीपेऽन्तःकरणस्योपस्थापनम्। उपासको ह्युपासनया नैजमन्तःकरणं स्वोपास्यदेवस्य चरणकमलयोरुपस्थाप्य कृतकृत्यः सन्ननल्पमानन्दमनुभवति। पुराणेषु भक्तिरुपासनायाः प्राणः प्रोक्तः, योगश्चोपासनाया अङ्गं निर्दिष्टमस्ति। अतः प्राणाङ्गस्थानीयाभ्यां भक्तियोगाभ्यामुपासनाया अस्त्यान्तरिको नैकटतमः सम्बन्धः। अत उपास्यसान्निध्यहेतुका उपायसमूहा अपि भवन्त्युपासनाशब्दवाच्याः।

भक्तिसम्बन्धिनो विचारस्य भेदादुपासना पञ्चप्रकारा अभिमताऽस्ति—(१) आसुरोपासना, (२) देवर्षिपित्र्युपासना, (३) अवतारोपासना, (४) सगुणब्रह्मोपासना (५) निर्गुणब्रह्मोपासना च।

अपि च—बहिर्मुखचित्तवृत्तीनां निरोधं विधाय आत्मसाक्षात्काराय भगवत्सान्निध्यलाभाय च यावत्य. साधनापद्धतयः सम्भवन्ति, ताः सर्वा अपि योगशास्त्रसरणिमनुसृत्य चतुर्षु भागेषु विभक्ता. सन्ति। तथा च योगसाधनप्रणाल्यनुसारमुपासनाभेदश्चतुर्विधो भवति—(१) मन्त्रयोग, (२) हठयोग, (३) *लययोग* (४) *राजयोगश्च*[1]।

आसामेव नवविधानाम् ( ५ + ४ = ९ ) उपासनाना सात्त्विक-राजस-तामसभेदाद्भवति उपासना सप्तविंशतिप्रकारा[2]।

प्रतिमनुष्यं प्रकृति. प्रवृत्तिश्च भिन्ना भिन्ना भवति। अतो यस्य पुंसो यादृशी प्रवृत्तिः प्रकृतिश्च भवति स तदनुकूले एवाहारे विहारे व्यवहारे भक्तावुपासनायाञ्च प्रवर्तते। अत एव च शास्त्रेपूत्तममध्यमाधमानाम-धिकारिणा भेदादुपासनाभेदोऽपि निर्दिष्ट। तत्र सात्त्विका उपासका उच्चकोटिकोपासनायामेवाग्रेसरन्ति, राजसा अधिकारिणो मध्यममार्ग-माश्रयन्ते, तामसप्रकृतयस्त्वासुरोपासनामेवात्मन.' श्रेयस्करीं 'मन्यन्ते। भगवता श्रीकृष्णेनाऽपि श्रीमद्भगवद्गीताया' त्रिविधोपासनाभेदं प्रदर्श-यता प्रोक्तं यत् सात्त्विकप्रकृतय उपासका देवानुपासन्ते,' राजसप्रकृतयः पुमांसो यक्षराक्षसान् पूजयन्ति, तामसस्वभावाश्च मानवा भूतप्रेतादिकमेव समाराधयन्ति[3]।

यथा भगवान् भास्कर. स्वतेजसा भूमिगत वाष्पराशि स्वाभिमुखमा-कर्षति तथैवोपास्यदेवोऽप्युपासकान् स्वाभिमुखमाकृष्य तेषामीप्सितं फलं पूरयति। अत एवोपासका स्वस्वलक्ष्यसिद्धये स्वस्वस्वभावानुसारं साधनमवलम्ब्य तत्तद् देवतानामुपासनायामग्रेसरा भवन्ति। भगवानस्ति

१. मन्त्रो हठो लयो राजयोगोऽयं भूमिकाक्रमात्।
एक एव महादेवि! चतुर्धा संप्रकीर्त्यते॥ ह० दी० २५

२. पितृदेवर्षिरुद्राणामवतारगणस्य च।
पञ्चानां सगुणब्रह्मरूपाणां निर्गुणस्य च॥
ब्रह्मणश्चानुरोधेन ह्युपास्ते भक्तियोगतः।
मन्त्रो हठो लयो राज एते योगेन च क्रमम्॥
अस्या भेदाश्च चत्वारो भेदा एवं नवागताः।
एते भेदा नवैवात्र देवार्चायुग्मयोगतः॥
उपास्ते प्रतिसारं स्युः [illegible] सप्तविंशतिः। स०गी० २७-३०

३. यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः॥ गीता १७।४

प्रेममयः, अतस्तदुपलब्धये उपासनापथमपि प्रेमप्रचुराया भक्तेराश्रयमवलम्बते। तस्मादुपासना भक्तिरसस्य मधुरधारायामेव विकाशमाप्नोति, नान्यथा।

केषाञ्चिन्मते—सालम्बननिरालम्बनभेदादप्युपासना भवति द्विविधा। तत्रालम्बनेन सम्पाद्यमानोपासना सालम्बनोपासना कथ्यते, आलम्बनराहित्येन क्रियमाणोपासना च निरालम्बनोपासना गीयते। आलम्बनं हि भवति भावमूलम्। तत्र ध्येयस्य प्राधान्यं जायते। मनसो ध्येयाभिमुखीकरणमन्तरा ध्यानसिद्धिरसम्भवा। एवञ्च वेदशास्त्रसम्मता योगविज्ञानमूलिकोपासनाप्रणाली सालम्बना; तदन्या प्रमाणविरहिता केवलमनसा कल्पिता ध्यातृ-ध्येय-ध्यानविवर्जिता मतान्तरप्रचारिता अवैदिक्युपासनाप्रणाली निरालम्बनान्तर्गता ज्ञेया।

वैदिकविज्ञानयुक्ता निराकारब्रह्मोपासना किल अध्यात्माधिदैवाधिभूतभावसंयुता विद्यते। एवं ब्रह्मस्वरूपध्यानमपि सच्चिदानन्दमयमेव। सगुणपञ्चोपासना लीलाविग्रहोपासनाप्रभृतयश्च मूर्तिध्यानसंयुक्ताः सन्ति। अतो वैदिक्युपासनापद्धतयः सावलम्बनेत्यत्र न कस्याप्यस्ति काचिद्विमतिः, किन्त्ववैदिकमार्गप्रचारितोपासनाप्रणाल्यो निजभावविज्ञानमनुसृत्य स्वस्वसरण्यनुसारेण सिद्धिप्रदा भवन्तीति हेतोस्ता निरालम्बना इत्यत्र न मनागप्यस्ति सन्देहलेश.।

निर्गुणस्य ब्रह्मण उपासना ॐकारध्यानद्वारा निष्पद्यते। 'तस्य वाचकः प्रणवः' (१।२७) इति योगसूत्रेणेश्वरस्य प्रणववाचकता निरूपिता। तस्मात् प्रणवशब्द ईश्वरवाचकः, ॐकारश्च प्रणवस्यैवास्ति नामान्तरम्, तदनुसारमीश्वरस्य ॐकारो मुख्यं नामास्ति, तेन तदुपासनया स परमं प्रसीदति।[1] ब्रह्मणः साक्षात् सम्बन्धनिबन्धनत्वात् प्रणवस्यालम्बनं सर्वाभ्यर्हितमुक्तम्[2]।

अतः प्रणवाश्रयेण साध्यमानोपासना मुख्या अवगन्तव्या। एका स्वतन्त्रा उद्गीथोपासनापद्धतिरपि वेदे वर्णिताऽस्ति। एवं वेदेषु बहुविधानां धारणानामवलम्बनेन बहुविधं ब्रह्मोपासनाविधानं दरीदृश्यते। तदनुसारमेव तत्तदुपासनाचार्या महर्षयः प्रधानविधीनामालम्बनेनोपासनाविज्ञानरहस्यस्योद्घाटनं स्वेषु स्वेषु ग्रन्थेषु कृतवन्तः। अतोऽधिकं जिज्ञासुभिस्तत एवावसेयम्।

---

१. अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति॥ चे० च० २७

२. एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥ भा० सं० ३१

## अवतारतत्त्वस्य समीक्षा

अवतारतत्त्वं हि हिन्दुधर्मस्यास्त्येकः प्रधानो विषयः। वेदेषु केवलमवतारस्याभासमात्रमस्ति, किन्त्ववतारतत्त्वस्य विस्तृतं विवेचनं पुराणेष्वेवोपलभ्यते। उपासनाप्रणाल्या सहावतरतात्त्वस्य महान् घनिष्ठः सम्बन्धो विद्यते। यद्यपि धर्मान्तरेष्वपि रूपान्तरेणावतारतत्त्वस्य सिद्धान्तः समुपलभ्यते। यथा बौद्धधर्मे भगवतो बुद्धस्याराधना, जैनधर्मे तीर्थङ्कराणां समुपासना, इस्लामधर्मे पैगम्बराणां पूजा, ईशाईधर्मे ईशामसीहस्येश्वरपुत्रत्वेन स्वीकारः। एवं विश्वस्य सर्वधर्मावलम्बिनो येन केन प्रकारेणावतारतत्त्वं स्वीकुर्वन्त्येव, तथापि हिन्दुधर्मस्येदं वैशिष्ट्यं वर्तते यदेतदीयमवतारतत्त्वस्य विज्ञानमेकस्यां सुदृढभित्तौ स्थितं वर्तते। वेदपुराणदर्शनशास्त्रानुसारमीश्वरो मणिमालायां सूत्रमिव सर्वत्र व्यापकोऽस्ति। तस्य चित्कला उद्भिज्जस्वेदजाण्डजजरायुजमानवदानवदेवादिपिण्डेषु व्यापिकाऽस्ति। अत एवेश्वरः सर्वान्तिर्यामी सर्वशक्तिमान् सर्वव्यापकश्च कथ्यते। सर्वव्यापित्वेऽपीश्वरस्य चित्कलाया विकासे नियमोऽस्ति। यथोद्भिज्जयोनिष्वेकस्या एवेश्वरीयकलाया विकासो विद्यते, स्वेदजेषु द्वयोः, अण्डजेषु तिसृणाम्, जरायुजेषु चतसृणां कलानां विकासो जायते। मनुष्येषु पञ्चकलातोऽष्टकलापर्यन्तं विकासो भवति। अष्टकलातोऽधिकानां कलानां धारणसामर्थ्यं मनुष्येषु न तिष्ठतीति हेतोरितोऽधिकानां कलानां यत्र विकासो भवति, तच्छरीरं दिव्यैरुपादानैराविर्भवति। अतोऽष्टकलातोऽधिकाः कला अवतारकलाः कथ्यन्ते, । ८ कलातः १५ कलापर्यन्तं विकासोंऽशावतारेषु भवति। पूर्णावतारे च १६ कलानां विकासो जायते। एवं भगवतोऽवतारा विभिन्नासु कलासु भवन्ति।[1]

१. मयैवेका कलाशक्तेरुद्भिज्जेषु विकासते।
स्वेदजेषु कलाद्वैतमण्डजेषु कलात्रयम् ॥
चतस्रश्च कला भान्ति जरायुजगणेऽखिले।
पञ्चकोशप्रपूर्णत्वान्मर्त्येषु प्रायशोऽमराः ॥
या कलाः पञ्चकादष्ट कला नूनं चकासते।
नवारम्य कला यावत् षोडशं मे यथायथम् ॥
संविकास्यावतारेषु नानाकेन्द्रोद्भवेषु च।
पुत्रधिन्ये प्रपूर्यन्तेऽवतारे पूर्णसंज्ञके ॥ श० गी० ४।६–१२

यथा षोडशकलाभिर्युक्तश्चन्द्रमाः पूर्णः कथ्यते, तथैव यत्रेश्वरस्य षोडशापि कला आविर्भवन्ति, स ईश्वरस्य पूर्णोऽवतारो निगद्यते। तथा चोक्तं तैत्तिरीयब्राह्मणे—'षोडशकलो वै पुरुषः' (१।३)। छान्दोग्योपनिषदि च—'षोडशकलः सौम्य ! पुरुषः' (६।७।१)। एवञ्च दैत्य-दानव-दुष्ट-मानवैरुपद्रुतस्य जगतो रक्षार्थं स्वयं परब्रह्मपरमात्मा विविधाभिः कलाभिः समये-समयेऽनेकेषु रूपेषु अवतीर्य धर्मधुरं व्यवस्थापयति सुखयति च समस्तं लोकम्। तत्र सर्वेष्ववतारेषु श्रीकृष्णावतारः पूर्णावतारोऽस्ति। अन्ये चावतारा अंशावताराः सन्ति।[1]

भारतीयसंस्कृतिर्येषु श्रुति-स्मृत्यादि शास्त्रेष्वाधारिताऽस्ति तेषु मूलतत्त्वस्य सच्चिदानन्दस्वरूपस्य भगवतो द्विविधं रूपमभिमतमस्ति-एकं निर्गुणं रूपं, द्वितीयं च सगुणस्वरूपम्। तत्र भगवतो निर्गुणं रूपं मनोवागगोचरो विद्यते। योगिनो यौगिकसाधनया निर्विकल्पकसमाधौ तत् साक्षात् कर्तुं शक्नुवन्ति, ज्ञानिनश्च तत्त्वचिन्तनद्वारा विषयेभ्यो मनो व्यावर्त्य द्रष्टृस्वरूपेण तत्रावस्थिता भवन्ति, परन्तु सर्वसाधारणा जनास्तस्य रूपस्य भावनां कर्तुं न प्रभवन्ति। उत्पत्ति-स्थिति-प्रलयहेतोः दयाभावेन लीलार्थं भावमयरूपेणाविर्भूतस्य तस्य सगुणरूपस्य ध्यान-स्मरण-नामजप-लीलाचिन्तनादिद्वारा मानवहृदयं विशुद्धं जायते। मनुष्यः सगुणरूपेषु भगवतः किमपिरूपं स्वहृदये विराजमानं विधाय नूनं संसारसागरात् पारं तर्तुं शक्नोति। एवं प्रभो रूपद्वयं विद्यते नित्यं (सर्वेश्वरस्वरूपं) तथाऽवताररूपञ्च। तत्र जगति धर्मस्थापन-ज्ञानसंरक्षण-भक्तपरित्राणार्थमाततायिनां निर्दलनाय प्रेमिणामुत्कण्ठापूर्तये लोकशिक्षायै च स भूयो भूयोऽवतरति भूतले भगवान् विष्णुः।

वेदकाले प्रणवोपासनाप्रचुरतया प्रचलिताऽसीत्। ब्राह्मणारण्यकोपनिषत्काले च ब्रह्मणो महत्त्वं विकसितमासीत्, परं पुराणकाले त्रिदेवानां ब्रह्मा-विष्णु-महेशानां महत्त्वं व्यापकरूपेण सर्वजनसमुदाये समागतं येन जनतया महती शान्तिरवाप्ता। अतो जगतः सृष्टिकर्तृत्व-पालयितृत्व-संहारयितृत्व रूपेणैक एव भगवान् विष्णुः पुराणेषु वर्णितो विद्यते।[2]

सर्वेश्वरो नारायणः पुराणेषु परमतेजस्वी, अचिन्त्योऽजरोऽमरो व्यापकः, सर्वशक्तिमांश्च प्रोक्तः। तस्यैव लीलावतारकर्मणां चित्रणं विष्ण्वादिपुराणेषु कृतं विद्यते।

---

१. अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे॥ श्री० भा० १।३।२७

२. सृष्टिस्थित्यन्तकारिणी ब्रह्म-विष्णु-शिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः॥ वि० पु० १।२।६५

, ब्रह्मवैवर्ते लीलापुरुषोत्तमस्य भगवत श्रीकृष्णस्य। स्वरूपपरिचय-प्रसङ्गे प्रोक्तमस्ति यद् वेदा ज्योति स्वरूपं निर्गुण निरञ्जन य स्तुवन्ति, सरस्वती भीता सती यस्याजस्रं गुणगान करोति, प्रकृतिश्च प्रसन्नतया य परमपुरुषरूपेण स्तौति स एव परमात्मा स्वेच्छया मायामधिष्ठाय भूभारहरणाय गोपालबालवेशेनावतीर्ण आसीत् ।[१] एतद्वचनानुसार स्वय परब्रह्म परमात्मैव द्वापरे श्रीकृष्णरूपेणाविर्भूत आसीदत स पुराणेपु पूर्णावतार प्रोक्तोऽस्ति।

अल्पज्ञत्वाज्जीव सर्वज्ञो भवितु नार्हति, किन्तु सर्वव्यापित्वादीश्वर एव सर्वज्ञोऽस्ति। सर्वज्ञत्वादेवेश्वरस्यावतारो भवति। ब्रह्माण्डस्य रक्षको भगवान् विष्णुरेवास्ति। अतस्तस्यैवावतारो भवति। यदा ससारे साधारणशक्तित कार्य न प्रचलति तदा परमो दयालु परमात्मा भगवान् विष्णु प्राणिष्वहैतुकी दया कृत्वा विश्वस्य कल्याणायास्मिन् धरातलेऽवतरति। भगवान् विष्णुर्दयासमुद्रो वर्तते। प्राणिपु कृपा तस्यास्ति स्वाभाविको धर्म । यदा यदा भक्तेष्वापत्तय उपतिष्ठन्ते, दुष्टानामत्याचारा असह्याश्च भवन्ति, तदा तदा भूभार हर्तु भगवतोऽवतारो भवति। तथा च भक्ताना प्रार्थनया स्वय परमात्मा मायाया सयोगेन नानारूपेष्ववतरति। तथा च श्रुति —'इन्द्रो मायाभि पुरुरूप ईयते' (ऋग्वेदे ६।४७।१८)।

यजुर्वेदेऽपि लिखितमस्ति यद् अजन्मापि भगवान् ,स्थूले गर्भे आविर्भवति। यद्यपि तस्य किमपि वास्तविक रूप नास्ति ,तथापि मायाया माध्यमेन सोऽनेकेपु रूपेपूत्पद्यते।

'प्रजापतिश्चरति गर्भेऽन्तरजायमानो बहुधा विजायते।' ३१।१६

किञ्च, समस्तस्य चराचरात्मकस्य जगतो रक्षार्थ ज्ञानस्वरूप परमात्मा विभिन्नेपु सत्त्वस्वरूपेष्ववतरति। तस्यावतारो हि धार्मिकाणा कृते सुखकरो भवति, किन्त्वधार्मिकाणा कृते दु खाय जायते,। तथा चोक्त देवकीगर्भे स्थित त स्तुवद्भिर्ब्रह्मादिभिर्देवै श्रीमद्भागवते।[२]

---

१. वेदा स्तुवन्ति यं नित्य स्तौति भीता सरस्वती।
स्तौति य प्रकृतिर्हृष्टा प्राकृत प्रकृते परम्॥
नित्य ज्योति स्वरूप च भक्तानुग्रहविग्रहम्।
सोऽवतीर्णो भगवान् भारावतरणाय च॥
गोपालबालवेशश्च मायशो मायया विभु। ब्र०ज०ख० ७२।१०१-३

२ बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य।
सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहु खलानाम्॥ १०।२।२६

वामनपुराणे स्वयं भगवता वामनेन भरद्वाजं मुनिं प्रति स्वावतारं चर्चयता प्रोक्तं यत्, मुने। ममानुरूपैर्मदवतारैः आकाश-पृथ्वी-पाताल-स्वर्ग-समुद्र-पर्वत-मेघा व्याप्ता: सन्ति।[1]

गरुडपुराणे लिखितमस्ति यद् देवानामपि देवः परब्रह्मपरमात्मा-यतोऽस्य समस्तस्य विश्वस्योत्पत्तिर्जायते, सोऽजन्मापि भगवान् नारायणः संसारसंरक्षणायानेकानवतारान् गृह्णाति।[2]

विष्णुपुराणे आत्मन उद्धारार्थं भगवन्तं विष्णुं प्रार्थयन्त्या पृथिव्या प्रोक्तं यद्, 'भगवन्! भवतः परमं तत्त्वं न कोऽपि जानाति। अतोऽवतार-माध्यमेन यद्रूपं प्रकटीभवति तदेव देवता अर्चयन्ति'।[3]

अपि च तत्रैव भगवान् स्वलीलया देवतिर्यङ्मनुष्यादीनां चेष्टया युक्तानि सर्वशक्तिमयानि रूपाणि गृह्णाति। एषु रूपेषु अप्रमेयस्य भगवतो या व्यापिका अव्याहता च चेष्टा भवति स जगत उपकाराय भवति।[4]

पद्मपुराणे गोपकन्यकया गायत्र्या सह ब्रह्मणो विवाहावसरे भगवता विष्णुना गोपेभ्यो वरं ददता प्रोक्तम्, 'यदहं देवकार्यार्थं भवतां कुलेऽवतारं करिष्यामि, तत्रैवानेका लीला भविष्यन्ति।'[5]

ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डेऽङ्कितमस्ति यत् भगवान् विष्णुः दिव्यं स्वं रूपं धृत्वा मथुराया देवक्या हृदयकमलतः श्रीकृष्णरूपेणाविर्भूत आसीत्।[6]

---

१. ममावतारैर्वसुधा नभस्तलं पातालमम्भोनिधयो दिवश्च।
दिशः समस्ता गिरयोऽम्बुदाश्च व्याप्ता भरद्वाज ममानुरूपैः॥ ६२।११

२. एको नारायणो देवो देवानामीश्वरेश्वरः।
परमात्मा परं ब्रह्म जन्माद्यस्य यतो भवेत्॥
जगतो रक्षणार्थाय वासुदेवोऽजरोऽमरः।
स कुमारादिरूपेण अवतारान् करोत्यजः॥ ग० पु० ३१।२३

३. भवतो यत् परं तत्त्वं तन्न जानाति कश्चन।
अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः॥ वि० पु० १।४।१७

४. समस्तशक्तिरूपाणि तत्करोति जनेश्वरः।
देवतिर्यङ्मनुष्यादि चेष्टावन्ति स्वलीलया॥
जगतामुपकाराय न सा कर्मनिमित्तजा।
चेष्टा तस्याप्रमेयस्य व्यापिन्याव्याहतात्मिका॥ तत्रैव ६।७।७१-७२

५. युष्माकं च कुले गोपा! देवकार्यार्थसिद्धये।
अवतारं करिष्येऽहं सा क्रीडा तु भविष्यति॥ सृ० ख० १।१७।१६

६. तत्रैव भगवान् कृष्णो दिव्यं रूपं विधाय च।
हृत्पद्मकोशाद् देवक्या हरिराविर्बभूव ह॥ १०७।७२

वायुपुराणे कथितमस्ति यदव्यक्तः शाश्वतो नारायणः स्वयं श्रीकृष्णरूपेण व्रजे जन्म गृहीत्वा स्वकीयया स्नेहमय्या मधुरदृष्ट्या व्रजवासिनोऽमोहयत् ।[1]

पुराणानुसारं श्रीकृष्णजन्मनः पूर्वमेकस्मिन् जन्मनि भगवान् श्रीकृष्णो नारायणर्षिरूपेण, अर्जुनश्च नरनामकर्षिरूपेणावतीर्य बदरिकाश्रमे परमं तपः तेपाते । एवं भगवतोऽनेकानि जन्मानि प्रादुरभवन् । यस्मिन् मानवपिण्डेऽवतारो भवति तत्र द्विविधं कार्यं जायते । एकं भगवतो विष्णोः कार्यं यद् अवतारी प्रतिनिधिरूपेण कुरुते । द्वितीयं जीवस्य भोगकार्यं यद् जन्मान्तरीयप्रारब्धानुसारं भोक्तव्यमेव भवति । यस्मिन् जन्मनि भगवान् श्रीकृष्णो निःशस्त्रो भूत्वा महाभारतसमरमकारयत् । बाल्याद् यावज्जीवं लोकमर्यादाविघातकान् अनेकान् असुरान् जघान । भक्तान् अलौकिकीर्विभूतीः प्रादर्शयत् । सर्वोपनिषत्सारमद्भुतं दार्शनिकं गीताग्रन्थमर्जुनमुपदिदेश । एतानि यानि लोकातीतानि कर्माणि कृतवान् भगवान्, तानि जगद्रक्षकस्य भगवतो विष्णोः प्रातिनिध्येनावतीर्य कृतवान् । तथा तत्रैव जन्मनि बाललीलाविलासो रासलीला, द्वारकायां भोगसमूहः, अन्ते च किरातबाणेन देहपात इत्यादीन्यशुभानि कार्याणि पूर्वजन्मार्जितानां कर्मणां प्रतिक्रियारूपेण जातानि । एवं भगवतो रामचन्द्रस्य ताडकामारीचसुबाहुरावणादिवधो विष्णोः प्रातिनिध्येन जातः, किन्तु वनवास-सीताहरणजन्यविलापादिदुःखजातं प्राक्तनकर्मपरिणामरूपेणैवाजायत ।

## अवतारप्रयोजनम्

यदा धर्मस्य ह्रासो भवति, अधर्मः प्रवर्द्धते, गावः सीदन्ति, विषीदन्ति ब्राह्मणाः, असुरभावापन्ना भावना सज्जनानुद्वेजयति, पापाचारैराक्रान्ता भवति भूमिः, तदा स्वयमाविर्भूय भगवान् धर्मं रक्षति, अधर्मं नाशयति, दुर्जनान्निहत्य सज्जनान् पालयति । तथा चोक्तं स्वयमेव भगवता श्रीकृष्णेन श्रीमद्भगवद् गीतायाम् ।[2]

---

१. अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः ।
जायतेस्मैव भगवान् नयनैर्मोहयन् प्रजाः ॥ वा० पु० ९६।६

२. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ गीता ४।७-८

एवं भगवतो विष्णोरवतारस्य मुख्यानि त्रीणि प्रयोजनानि सिध्यन्ति। (१) सज्जनानां संरक्षणम् (२) दुष्टाना दमनम् (३) धर्मस्य स्थापनं च। इत्थं ब्रह्मपुराणादिष्वपि भगवता व्यासेन धर्मस्य ग्लानौ, अधर्मस्य चाभ्युत्थाने वा भगवतो विष्णोरवतारग्रहणस्योल्लेखः कृतोऽस्ति[1]।

एतत्प्रयोजनातिरिक्तमेकमपरं मुख्यतमं प्रयोजनं सङ्केतयता श्रीदभागवते महर्षिणा व्यासेन प्रोक्तमस्ति, यदस्मिन् पूततमे भूतले निर्विकारस्याप्रमेयस्य भगवत आविर्भावो मानवजीवनस्य मुख्यलक्ष्यपरमपुरुषार्थमोक्षसाधनायैव जायते। यदि मायामाश्रित्य निर्गुणो निराकारो भगवान्नारायणो न प्रकटीभवेत्तर्हि तस्यालौकिकसौन्दर्यरुचिरचरित्रविकाशलीलामाधुर्यलोकोत्तरचमत्कारादीनामशेषगुणगणानामाकर्षकः परिचयोऽस्माभिरल्पज्ञै र्जीवैः कथङ्कारं प्राप्येत।[2]

यदि धरातलेऽस्मिन् अवताररूपेण भगवतोऽभिव्यक्तिरस्माकं समक्षे न स्यात्तदा तस्य चारित्रिकविकास-मनोहरहास-मधुरमूर्ति-स्निग्धभाषण-सरससौन्दर्य-मुखमाधुर्यादीनां दर्शनं न स्यात्। वस्तुतो भगवतोऽलौकिकाभा-लीलाविलासादर्शमयव्यवहारादिद्वाराऽस्माकं मनोबुद्धीन्द्रीयाणि अन्यविषयेभ्यो विमखानि भूत्वा तथैव केन्द्रितानि, भवन्ति, येन वयं भगवत्तन्मयतां प्राप्य अस्माद्दुःखदात् संसारान्मुक्ता भवामः।

जीवो हि सांसारिकविषयाणां बन्धनाद्बद्धोऽस्ति, भगवांस्तु नित्यः शुद्धो बुद्धो मुक्तश्च विद्यते। अतो मुक्त्यै भगवानेव बद्धाना जीवानां बन्धनं छेतुं प्रभवति, नान्यः। 'ऋतेज्ञानान्न मुक्तिः' इत्यनुसारं ज्ञानं विना मुक्तेः प्राप्तिरसम्भवा। भगवानेव ज्ञानस्याधार आदिस्रोतश्चास्ति तत एव लोकमङ्गलाय ज्ञानधारा अजस्रं प्रवहति, यस्या बिन्दूनां कतिपयान् कणानवाप्य जीव. कृतकृत्यो भवति। श्रीमद्भागवतानुसारं

---

१. यदा यदा च धर्मस्य ग्लानिः समुपजायते।
अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसौ॥ ब्र० पु० १८०।२६
यदा यदा हि धर्मस्य ग्लानि र्भवति भूपर।
अभ्युत्थानमधर्मस्य तदा वेषान् बिभर्म्यहम्॥ दे० भा० ७।३६।२२
असतां निग्रहार्थाय धर्मसंरक्षणाय च।
अवतीर्णो मनुष्याणामजायत यदुक्षये॥
स एव भगवान् विष्णुः कृष्णेति परिगीयते। वनपर्वणि २७२।७१

२. नृणां निःश्रेयसार्थाय व्यक्ति र्भगवतो नृप।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः॥ श्री०भा० १०।२९।१४

बद्धस्य जीवस्य मुक्तिरपि भगवतोऽवतारस्यैकं मुख्यं प्रयोजनं विद्यते। मुमुक्षुभ्य आत्मज्ञान प्रदानायैव स्वयमजन्मनाऽपि भगवता महर्षिकर्दमद्वारा देवहूत्यां मायामाश्रित्य कपिलरूपेणातीर्य सांख्यज्ञानस्योपदेशो दत्तः।[1] यतो हि भगवता कपिलेन स्वयमत्रलोके आत्मनो जन्मन उद्देश्यं निर्दिशता प्रोक्तम्।[2] तस्माद् बद्धस्य जीवस्य मुक्तिरपि भगवदवतारस्यैकं मुख्य प्रयोजनं सिध्यति।

गर्गसंहितायां भीष्मपितामहेन देवर्षये नारदाय भगवतः श्रीकृष्णस्यावतारप्रयोजनं निर्दिशता प्रोक्तमस्ति, यद् देवानां रक्षायै दैत्यानां वधाय च पूर्णतम पुरुषोत्तमो नारायणो वसुदेवगृहेऽवतीर्णोऽस्ति।[3]

किञ्च सिन्धुनरेशस्य राज्ञो विमलस्य राजदूतेन तु अनन्तगुणसम्पन्नं भगवन्तं श्रीकृष्णं नमस्कुर्वता तस्यावारप्रयोजनानि च वर्णयता प्रोक्तं यद् भगवता विष्णुना पण्णां-गो ब्राह्मण देवता-वेद-साधु धर्माणां रक्षार्थं तथा कंसादीनां दुष्टानां भूभुजां वधाय यदुकुले जन्म गृहीतमस्ति।[4]

ब्रह्मपुराणे लिखितमस्ति यद् भूभारहरणाय विष्णोरवतारो भवति। यदा यदा धर्मस्य ह्रासोऽधर्मस्य च वृद्धिर्भवति तदा तदा भगवान् विष्णुः दिव्ये देहद्वये विभक्तो भूत्वा एकेन विग्रहेण वैकुण्ठे विराजते तथाऽपरेण विग्रहेणात्र धरातलेऽवतीर्य साधूनां रक्षां धर्मस्य स्थापनं दुष्टानामसुराणां निग्रहं प्रजानां च पालनं करोति।[5]

---

१. कपिलस्तत्त्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥ श्री० भा० ३।२५।१

२. एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्।
प्रसंख्यानाय तत्त्वानां सम्मतायात्मदर्शने॥ तत्रैव ३।२४।३६

३. देवानां रक्षणार्थाय दैत्यानां च वधाय वै।
वसुदेवगृहे जातः परिपूर्णतमो हरिः॥ भा० खं० ४।६।२६

४. गो विप्र-देव श्रुति-साधु-धर्म-रक्षार्थमद्यैव यदोः कुलेजः।
जातोऽस्ति कंसादिवधाय योऽसौ तस्मै नमोऽनन्तगुणार्णवाय॥ ७।७।४

५. यदा यदा त्वधर्मस्य वृद्धिर्भवति भो द्विजाः।
धर्मस्य ह्रासमभ्येति तदा देवो जनार्दनः॥
अवतारं करोत्यत्र द्विधा कृत्वात्मनस्तनुम्।
साधूनां रक्षणार्थाय धर्मसंस्थापनाय च॥
दुष्टानां निग्रहार्थाय अन्येषां च सुरद्विषाम्।
प्रजानां रक्षणार्थाय जायतेऽसौ युगे युगे॥ ब्र० पु० १८१।२-५

अपि च विष्णुपुराणे प्रोक्तमस्ति, यद् भगवान् विष्णुः गो-ब्राह्मण-सज्जनानां वेदानां धर्मस्य च रक्षार्थं विविधानवतारान् गृह्णाति ।[1]

महाभारतस्यादिपर्वणि यदा महेन्द्रेण भूभारहरणायांशेनावतीरतु प्रर्थितो नारायणस्तदा तथास्त्वित्युक्त्वा तत्प्रार्थनं स्वीचकार ।[2]

श्रीमद्भागवतस्य दशमस्कन्धे वत्सहरणप्रसङ्गे ब्रह्मणा कृतायां स्तुतौ तेन प्रोक्तं यद् यद्यपि भगवान् अजन्माऽस्ति तथापि जीवेषु दयया देवर्षि-मानव-पशु-पक्षि-जलचरयोनिष्ववतीर्य दुर्जनानां मदमन्थनं कृत्वा सत्पुरुषाणां च पालनं विधाय सदनुग्रहं करोति ।[3]

तत्रैवावतारस्यैकमपरमपि प्रयोजनं प्रदर्शयता भगवता व्यासेन स्पष्ट-मुक्तं यद् भगवतोऽवतारो न केवलं लोकद्वेषिणामसुराणां वधायैव भवति, किन्तु मनुष्याणां शिक्षार्थमपि भगवदवतारो जायते । अन्यथा आत्मा-रामस्य श्रीरामचन्द्रस्य सीतावियोगजन्यं दुःखं सोढुं काऽवश्यकताऽऽसीत् ।[4]

अतो जीवेषु दयां कृत्वा दर्शन-स्पर्शन-भाषण-व्यवहाराचरण-दिव्य-लीलादिद्वारा सौविध्येन प्राणिमात्रस्योद्धारनिमित्तं भगवतोऽवतारो भवति । अवतारिणां महापुरुषाणां दिव्यादर्शमयसुरुचिरचरित्रानुकरणेन संसारसागरादनायासेन तर्तुं शक्नोति मानवः । तथाच लोकसाधारण-भक्तजनकल्याणार्थं साकाररूपेणावतरति भगवानिति पुराणानां पुण्यमयः सिद्धान्तः ।

## अवताराणां मान्यता

वैदिकवाङ्मयत आरभ्य संस्कृतसाहित्यस्य सर्वेषु मान्यग्रन्थेषु अवतारवादस्य पर्याप्तं विवेचनं विद्यते । भारतीयाः सर्वे सम्प्रदायाचार्या अप्यवतारतत्त्वं श्रद्धेयतया सहर्षं स्वीकृतवन्तः । अद्वैतसम्प्रदायप्रवर्तकाः श्रीस्वामिशङ्कराचार्यपादा अपि गीताभाष्यस्योपोद्घाते भगवन्तं श्रीकृष्ण-

---

१. गो विप्र द्विज-साधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छन् तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ वि० पु० ४।२७

२. तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम् ।
अंशेनावतरेत्येवं तथेत्याह च तं हरिः ॥ ६४।५४

३. सुरेष्वृषीष्वीश ! तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य ।
जन्मासतां दुर्मदनिग्रहाय प्रभो ! विधातः ! सदनुग्रहाय च ॥ १०।१४।२०

४. मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ।
कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्य । ५।१९।५

(घ) श्रीमद्भागवते एकादशस्कन्धस्य चतुर्थेऽध्याये राज्ञा निमिना पृष्टो द्रुमिलो मुनि यद्-भगवन्! कृपया भवान् भगवतस्तेषामवताराणां वर्णनं करोतु यान् समये समये भक्तेष्वनुग्रहेच्छया गृहीत्वा तेन बहुविधानि कर्माणि कृतानीति। तदुत्तरे तेन प्रोक्तम्-राजन्! मनुष्यः स्वबुद्धिकौशलेन कथञ्चित् पृथिव्याः परमाणून् कामं गणयेत्, परन्तु भगवतोऽनन्तस्यानन्तावतारसम्बन्धिनां गुणकर्मादीनां गणना न कर्तुं शक्नुयादतोऽहं संक्षेपतोऽवताराणां चर्चा करोमि। भगवान् सर्वप्रथम पञ्चमहाभूतैः ब्रह्माण्डं रचयित्वा तत्र स्वचेतनया शक्त्या सह लीलार्थं प्रविष्टः। अयमेवास्ति नारायणस्य प्रथमः पुरुषावतारः, यस्य शरीरे त्रयाणां लोकानां रचनाऽस्ति। तत उत्पद्य ब्रह्म-विष्णु-महेश्वरा अस्य विश्वप्रपञ्चस्य सृष्टि पालन-संहारान् कुर्वते। तेनानदिपुरुषेण धर्मस्य भार्याया मूर्त्या नर-नारायणरूपेणावतीर्य ज्ञानमार्गस्योपदेशः कृतः, तथा बदरिकाश्रमे कठोरं तपस्तप्त्वा स्वयं तदाचरणं कृतम्। हंस-दत्तात्रेय-सनकादि-ऋषभदेवरूपेणावतीर्य ज्ञानमार्गस्योपदेशो दत्तः। हयग्रीवरूपेण मधुं दैत्यं निहत्य वेदरक्षा कृता। मत्स्यावतारद्वारा सत्यव्रतस्य मनोः रक्षां विधाय तन्मनोरथः पूरितः। वाराहावतारद्वारा च पृथिव्या उद्धारः कृतः। वामनावतारे पदत्रयभूमिदानप्रसङ्गे वलिं निगृह्य महेन्द्राय तद्राज्यं प्रदाय वलिः पाताले प्रेषितः।

परशुरामावतारे हैहयक्षत्रियाणां संहारः कृतः। श्रीरामरूपेण सेतुबन्धनानन्तर रावणस्यान्तं कृत्वाऽऽदर्शमय राज्यं संस्थाप्य लोकाः सुखिनः कृताः। कूर्मावतारे समुद्रमन्थनसमये स्वपृष्टेऽद्रिविधारण कृत्वा तत्र सहयोगो दत्तः। एवं हरिणा ग्राहगृहीतो गजेन्द्रो रक्षितः, वालखिल्याः पालिताः, वृत्रवधप्रत्यवायादिन्द्रो मोचितः, सुरस्त्रियश्च समुद्धरिताः।

श्रीकृष्णावतारे यदुष्वतीर्य विविधा लीला कृत्वा सर्वेषां मनोरथान् पूरयित्वा भूभारोऽवतारितः। बुद्धावतारद्वारा भगवता वादे राक्षसा मोहिताः। कलियुगे यदा सर्वत्रानाचारोऽत्याचारो व्यभिचारश्च वर्द्धिष्यन्ते, शासका नानाप्रकारान् नियमान् निर्माय प्रजाशोषणं धर्मविघातं च कर्तुं प्रयतिष्यन्ते, तदा भगवान् कल्किरूपं गृहीत्वा तान् दुष्टान् शूद्रान् शासकान् संहृत्य प्रजारक्षण धर्मसंस्थापनं च करिष्यति। इत्थं नरनारायण-हंस-दत्तात्रेय-सनकादि-ऋषभदेव-हयग्रीव-मत्स्य-वाराह-कूर्म-गजेन्द्रमोक्षद-वाल्यखिल्यरक्षक-इन्द्रशापविमोचन-देवस्त्रीसमुद्धारक-नृसिंह-वामन-राम-सीतापति-श्रीकृष्ण-बुद्ध-कल्क्यवताराणां चर्चाऽस्ति।

श्रीमद्भागवतस्यैषां चतुर्णां स्थलानामनुशीलनेनायं निष्कर्षो निःसरति, यत् श्रीमद्भागवतपुराणनिर्माणकालेऽवताराणां संख्या नियता नासीत्। अत एव तस्यान्तिमो निर्णयोऽस्ति यद् यथाऽगाधजलस्य सरसोऽनेकाः कुल्या निः सरन्ति तथैव सत्त्वगुणसम्पन्नस्य भगवतः श्रीहरेरवतारा अप्यसंख्याः सन्ति, निश्चितरूपेण तेषां गणना न सम्भवति। अयं भावः—यथाऽगाधात् सरोवरात् सहस्रशः स्रोतांसि निःसरन्ति, तथैव सत्त्वगुणाश्रयाद्भगवतोऽप्यनन्ता अवतारा उद्भवन्ति। ऋषिषु मनौ मनुपुत्रेषु देवेषु प्रजापतिगणे च विभूतिरूपेण भगवत्कलाया विकासो जायते। एवमजन्मनोऽपीश्वरस्य जन्मादि कवयो वर्णयन्ति।[१]

प्रथमे स्कन्धे २२ अवताराणां द्वितीयेऽपि २२ अवताराणामुल्लेखो विद्यते, किन्तु आस्तिकजगति साधारणतया भगवतो २४ अवतारा अतिप्रसिद्धाः सन्ति। एतद्विषमतादूरीकरणाय समन्वयाय वा विदुषां कथनमस्ति यत् प्रथमे स्कन्धे निर्दिष्टेषु २२ अवतारेषु यदि द्वितीय-दशमैकादशस्कन्धेषु प्रोक्तौ हंस-हयग्रीवाववतारौ गणयेतां तर्हि नूनमवताराणां संख्या २४ चतुर्विंशति र्भवितुमर्हति। कतिपयैः टीकाकारैः २४ अवताराणां संख्योपपत्तिरेवं कृताऽस्ति-प्रथमस्कन्धे गणितयोः श्रीकृष्णबलरामयोः अवतारतो निष्काशने २० अवतारा अवशिष्टा भवन्ति, शिष्टाश्चत्वारोऽवतारा भगवतः श्रीकृष्णस्यैवांशाःसन्ति। भगवान् श्रीकृष्णस्तु स्वयं परब्रह्म परमात्माऽस्ति। अतः स अवतारी विद्यतेऽवतारमध्ये स न गणयितुं शक्यते। भगवतश्चत्वारोंऽशा येऽवतारमध्ये गणयितुं शक्यन्ते, तेष्वेकः केशावतारो द्वितीयः पृश्नि-सुतपयोः कृपाकारः तृतीयः संकर्षणश्चतुर्थः परब्रह्म। एषां चतुर्णामवतारेषु गणनया भवति २४ अवताराणां संख्यापूर्तिः। यद्यपि सत्त्वभूर्ते र्भगवतोऽवताराणां संख्या नियता नास्ति तथापि लोके चतुर्विंशत्यवताराणामतिप्रख्यातत्वात्तन्निर्णयः पूर्ववद् विधेयः।

पुनरेषु उपर्युक्तेषु चतुर्विंशतिसंख्याकेष्ववतारेषु दश मत्स्य-कूर्म-वराह-नृसिंह-वामन-परशुराम-राम-बलराम-बुद्ध-कल्क्यवताराः सन्ति प्रमुखाः।[२]

---

१. अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः।
यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः॥ १।३।२६

ऋषयो मनवो देवा मनुपुत्रा महौजसः।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः॥ १।३।२७

एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च।
वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः॥ १।३।३५

२. मत्स्यो कूर्मो वराहश्च नृसिंहो वामनस्तथा।
रामो रामश्च रामश्च बुद्धः कल्किर्दश स्मृताः॥ वा० पु० ५२।२७

एवमेषां दशानामवताराणां निर्देशो मत्स्यपुराणे ( २८५।६७ ) अग्निपुराणे ( २-१६ ) पद्मपुराणेऽपि ( ६।४३।१३-१५ ) अध्यायेषु विद्यते। तत्र मत्स्यपुराणे एषां दशानामवताराणां मध्ये त्रयो नारायण-नरसिंह-वामनावतारा दिव्या अभिमताः सन्ति, शेषाः सप्त दत्तात्रेय-मान्धातृ-परशुराम-राम-व्यास-बुद्ध-कल्क्यवतारा मानुषाः प्रोक्ताः।[1]

यावदीश्वरस्य नियमे काऽपि बाधा नोपतिष्ठते, तावन्नावतरति भगवान् वासुदेवः। यदा तन्नियमेऽसामञ्जस्यमाविर्भवति, तदा पञ्च कलातोऽष्टकलापर्यन्तं स्वविभूतिद्वारा सामञ्जस्यं स्थापयति। परं यदा विभूतिद्वाराऽपि कार्यं न प्रचलति, धर्मधारा चाव्यवस्थिता बोभवीति, तदा तां व्यवस्थापयितुं कदाचिदंशेन कदाचिच्च सर्वाभिः कलाभिरवतरति स्वयं भगवान्नारायणः।

तत्तत्पुराणेषु अवताराणां सङ्ख्या भिन्ना भिन्ना विलोक्यते। गीतायां स्पष्टरूपेण केवलौ रामकृष्णौ द्वावेवावतारौ निर्दिष्टौ स्तः। देवीभागवते सीताहरणानन्तरं रावणवधार्थं देवर्षिनारदोपदेशात् श्री रामद्वाराऽनुष्ठितस्य नवरात्रव्रतस्य समाप्त्यवसरे वरं दातुमुपस्थितया देव्या रामात् पूर्वं जायमानानां षण्णां मत्स्य-कूर्म-वाराह-नृसिंह-वामन-परशुरामावताराणां चर्चां कृत्वा रावणस्य वधार्थं प्रोत्साहितो भगवान् रामचन्द्रः।

महाभारतस्य शान्तिपर्वणि दशानामवताराणां विशिष्टैः कार्यैः सह मत्स्य-कूर्म-वाराह-नृसिंह-वामन-परशुराम-श्रीराम-बलराम-श्रीकृष्ण-कल्कीनां नामोल्लेखं विधाय पुनरग्रे हंस-कूर्म-मत्स्य-वाराह-नरसिंह-वामन-परशुराम-बलराम-दशरथनन्दनराम-सात्वत ( यदुवंशि श्रीकृष्ण ) कल्क्यवतारा उक्ताः सन्ति। एषु अवतारेषु बुद्धस्य नाम न निर्दिष्टमस्ति। तस्य स्थाने हंसावतारस्योल्लेखो विद्यते।[2]

एकेन प्राचीनेन विदुषा दशावताराणां गणना प्रसंगे भगवन्तं श्रीकृष्णं साक्षात् परब्रह्मपरमात्मानं मत्वा वनवासिनौ द्वाववतारौ-एको वाराहो

---

१. एतास्तिस्रः स्मृतास्तस्य दिव्याः सम्भूतयो द्विजाः।
मानुषाः सप्त योन्यस्तु शापजास्ता निबोधत ॥ म० पु० ४७।२३८

२. मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः।
रामो रामश्च रामश्च कृष्णः कल्किश्च ते दश ॥ ( ३३९।७६ )
हंसः कूर्मश्च मत्स्यश्च प्रादुर्भावा द्विजोत्तम ?
वाराहो नरसिंहश्च वामनो राम एव च।
रामो दाशरथिश्चैव सात्वतः कल्किरेव च ॥ ( ३३९।१०३ )

द्वितीयो नरसिंह: । वन (जल) चरौ द्वाववतारौ मत्स्यावतारः कूर्मावतारश्च । खर्वो वामनावतार:, त्रिरामी परशुरामो रामचन्द्रो बलरामश्च । सकृपो बुद्धावतार:, अकृपश्च कल्यवतार इति भगवतो दशावतारा उक्ताः ।[1]

पीयूषवर्षिणा जयदेवकविना स्वकीयगीतगोविन्दस्यारम्भे श्रीकृष्णरूपेणैषां दशानामवताराणां स्तुतिं कुर्वता एकस्मिन्नेव पद्ये महता कौशलेन सूक्ष्मतया तेषां कार्याणामपि दिग्दर्शनं कृतमस्ति ।[2]

क्षेमेन्द्रेणाऽपि स्वकीये दशावतारचरितनामके महाकाव्ये एषामेव दशवताराणां चरितं विशदतया निबद्धमस्ति । तथाचातिलाघवाद्दशावतारा एवातिप्रसिद्धाः सन्ति । एषां चरित्रादिपठनश्रवणाभ्यामिह मनवः सकलान् कामानवाप्यान्ते स्वर्गलोकमुपस्थायानन्तं सुखं भुङ्क्ते ।[3]

'एकं सद्विप्रा बहुधा वदन्तीति' वचनानुसारं जगत्कारणस्य परमेश्वरस्यैकत्वेऽपि पञ्चदेवोपासनासिद्धान्तानुसारं विष्णु–शिव–शक्ति-सूर्य-गणेशानामपि तत्तत्पुराणेष्ववतारस्य पुष्कलं विवरणमुपलभ्यते ।

## अवतारवादो विज्ञानवादस्य निकषायाम्

पौराणिकस्यावतारवादस्य रहस्यं महद् वैज्ञानिकं विद्यते । एकतस्तु ईश्वरस्य काऽपि योनिरभीष्टा नास्ति, प्रत्येकयोनिषु तस्याविर्भावः सम्भावितोऽस्ति, यतो हि स सर्वासां योनिनामुद्भवस्थल वर्तते । अन्यतोऽवतारक्रमे वैज्ञानिकविकासवादस्य सिद्धान्तोऽन्तर्निहितोऽस्ति । यथा डार्विनमहोदस्य विज्ञानवादसिद्धान्तानुसारं सृष्टेरारम्भो लघुम्य एव जीवेभ्यो भवति । अनन्तरं शनैः शनैः दीर्घकलेवराणां प्राणिनां सृष्टिर्जायते । प्रारम्भकाले जन्तवो बुद्धिविहीना भवन्ति, पश्चात् तेषु उत्तरोत्तरं बुद्धितत्त्वस्य विकासो जायते, तथैव पौराणिकेऽवतारवदेऽपि सृष्टेरारम्भः पूर्वं जलीयजीवेभ्य एव भवति । अनन्तरं जल-स्थलयो द्वयो.

१. वनजौ वनजौ खर्वः त्रिरामी सकृपोऽकृपः ।
अवतारा दशैवेमे श्रीकृष्णो भगवान् स्वयम् ॥

२. वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं हलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥

३. विष्णोर्दशावताराख्यान् यः पठेच्छृणुयादपि ।
सोऽवाप्तकामो विमलः सकुलः स्वर्गमाप्नुयात् ॥ म० पु० १६।१२

समानरूपेण विचारशीलानां जीवानां सृष्टि र्जायते। ततः स्थलीय-जीवानां सृष्टिर्भवति। तदनु एवंविधानां प्राणिनां प्रादुर्भावो भवति, यत्र पशुभाव-मानवभावयोः समानः समावेशो भवति। तत्पश्चाद् मनुष्यस्य भवति सृष्टिः। स प्रथमं खर्वाकृतिमयो (वामनः) भवतिः, ततः शस्त्रास्त्रजीविनो मनस्विनो मानवस्यावसर आगच्छति, यो दुर्दान्तानां शासकः स्यात्। तत एवंप्रकारको विशुद्धहृदयो महामानव उत्पद्यते, यस्मिन् सभ्यताया विकसेन सह आदर्शमानवस्य मर्यादायाश्च पूर्णा प्रतिष्ठा तिष्ठति। तदनन्तरं राजनीति-वल-कृपा-सुशासनद्वारा संसारे शान्ति-स्थापकानां प्राणिनां भवति आवश्यकता, ये स्वसद्व्यवहार-शुभविचार-द्वारा समस्तस्य विश्वस्य वास्तविकं कल्याणं कुर्युः। एवं वैज्ञानिकदृष्ट्या विचारे क्रियमाणे पुराणेषु मत्स्य-कूर्म-वाराह-नृसिंह-वामन-परशुराम-दाशरथिराम-वलराम-कृष्ण-कल्कीनामवताराणां क्रमो विकासवादस्य मूलसिद्धान्तेषु एव अवलम्बितः प्रतीयते। जगतः सृष्टिसम्बन्धेऽवतार-विषये आधुनिकविज्ञानपरम्परायां घोषणा विद्यते, यत् सृष्टिक्रमे आरम्भकालत एव प्रकृत्यनुसारं निरन्तर परिवर्तनमयो विकासो प्रजायते। मत्स्यावतारसम्बन्धे जीवविज्ञानशास्त्रिणां मतमस्ति यदारम्भे इदमखिलं विश्वं जलमयमासीत्। अतः प्रथममेकमात्रस्य जलजन्तोर्मत्स्यरूपस्य नैसर्गिकप्राणिनः सृष्टिरभवत्।

(१) पुराणानुसारं सर्वप्रथमं सृष्टेरारम्भो जलीयजवेभ्यो भवति, यस्य प्रतीको मत्स्यावतारोऽस्ति। (२) ततो जल-स्थलयोरुभयोः समान-भावेन विचरणशीलाः प्राणिन उत्पद्यन्ते, यस्य प्रतीकः कूर्मावतारो वर्तते। (३) तदनु स्थलीयजीवाना सृष्टि र्जायते, यस्य प्रतीकोऽस्ति वाराहावतारः। (४) तदनन्तरमेवंविधानां प्राणिनामुत्पत्तिरपेक्षिताऽस्ति, यत्र पशुत्व-मनुष्यत्वयोरुभयोः धर्मयोः समावेशः स्यात्, यस्यास्ति प्रतिनिधिः नृसिंहावतारः। (५) एतदनन्तरमुत्पद्यते लघुकायो मानवो यस्य प्रतिनिधि-रस्ति वामनावतारः। (६) वामनानन्तरं भयङ्कराणा प्राणिनां प्रादुर्भावो भवति, यस्य प्रतिनिधित्वं करोति पशुरामावतारः। (७) ततस्तस्यादर्शम-यस्य महामानवस्यावसर आयाति, यत्रादर्शस्य पूर्णा प्रतिष्ठा विद्यते, यस्य प्रतिनिधिरस्ति रामावतारः। (८) ततो वले आग्रहशीलानां व्यक्तीनां राज-नीतिनिपुणानामाध्यात्मिकनेतृणाञ्च जायते आवश्ययता, यस्य प्रतिनिधिः कृष्णब-लरामावतारः। (९) तदन्तरं कृपालो मानवस्यावश्यकता प्रतीयते यः स्वाहिंसात्मककृपाद्वारा स्वान् शत्रूनपि स्ववशे कुर्यात्, यस्य प्रतिनिधि-रस्ति वुद्धावतारः। (१०) न केवलया कृपयैव कार्यं सम्यक् प्रचलति,

किन्तु एवंविधव्यक्तेरप्यावश्यकता जायते, यो दुर्दान्तान् दमयित्वा संसारस्य संरक्षणं कुर्यात्, एतत्प्रतिनिधिरस्ति अन्तिमः कल्क्यवतारो यः समस्तां समस्यां शमयित्वा सत्ययुगस्यादर्शं समुपस्थापयेत् ।

एवं भारतवर्षे सृष्टेरारम्भकालत एव विज्ञानस्याश्रयो गृहीतोऽस्ति। अत एव समये-समये भूयो-भूयोऽनेकेष्वपि घात-प्रतिघातेषु जायमानेषु भारतीयाः सिद्धान्ता यथावदक्षुण्णाः स्थिताः सन्ति ।

सामान्यदृष्ट्या विचारे क्रियमाणे द्वावपि पक्षौ पौराणिकविज्ञान-वादौ युक्तिपूर्णौ प्रतीयेते । धार्मिकतुलायामाधारितत्वात् पौराणिकं मतं समीचीनं प्रतीयते तथा प्राकृतिकदृष्ट्या विचारे वैज्ञानिकं मतं युक्तियुक्तं ज्ञायते । यतो हि उभयोः मतयोः लक्ष्यमेकमेवास्ति ।

पुराणेषु भगवतो विष्णोरवतारधारणस्य प्रक्रियाविषये चत्वारि मतानि उपलभ्यन्ते । (१) भगवान् नारायणः स्वकीयां दिव्यां मूर्तिं परित्यज्यास्यां पृथिव्यामवतरति । (२) यदा यदा अधर्मस्य वृद्धिस्तथा धर्मस्य ह्रासो जायते तदा तदा जगतः कल्याणार्थं भगवान् जनार्दनः स्वं शरीरं भागद्वये विभज्यावतरति । भगवतोऽल्पीयानेवांशोऽस्मिन् भूतलेऽवतारग्रहणं करोति तयाऽवशिष्टो भागः स्वमूलस्थाने एव निवसति (३) अवतारसमये भगवान् विष्णुः स्वीयां मूर्तिं द्विधा विभज्य एकया मूर्त्या वैकुण्ठे एव स्थितः तपस्तपति, द्वितीया च मूर्तिः योगनिद्रामाश्रित्य प्रजानां सृष्टि-स्थिति-संहारविचारं करोति । एतन्मतानुसारमवतारकार्यं भगवतो विष्णोर्दृष्टिविलासमात्रमस्ति । (४) समस्तविश्वव्यापकेन भगवता नारायणेन स्वकीया मूर्तिश्चतुर्षु भागेषु विभक्ता, यत्रैका मूर्तिः, मूर्तिषु निर्गुणाऽस्ति, शिष्टाः तिस्रो मूर्तयः सन्ति सगुणाः । निर्गुणमूर्तेर्नामाऽस्ति वासुदेवस्तथा सगुणमूर्तीनां नामानि सन्ति सङ्कर्षणप्रद्युम्नानिरुद्धाः । आसां चतसृणां मूर्तीनां नामान्तमस्ति क्रमशः—पुरुषः, जीवः, मनः, अहङ्कारश्च । अत्र वासुदेवमूर्तिः निर्देशविहीना योगिभिरुपास्या गुणातीता चाभिमताऽस्ति । द्वितीया मूर्तिः सङ्कर्षणाख्या (शेषाख्या) स्वशिरसि पृथ्वीं धारयति । सत्त्वगुणप्रधानायाः तृतीयमूर्तेः कार्यमस्ति धर्मसंस्थापनपूर्वकं प्रजानां पालनम् । चतुर्थी मूर्तिः शेषशय्यायां शयाना रजोगुणप्रधानतया संसारस्य सृष्टिं करोति । आसु चतुर्षु मूर्तिषु प्रद्युम्ननामिका तृतीया मूर्तिरेवात्र भूतले यदा यदा धर्मस्य हानिर्भवति अधर्मस्य च वृद्धिर्जायते तदा तदा अवतारधारणं कृत्वाऽधर्मं निरस्य धर्मं व्यवस्थाप्य प्रजापालनं करोति । देव-मनुष्य-तिर्यङ्-योनिषु यत्र कुत्रापि इयमेव मूर्तिरवतरति । तत्र सा सद्भिर्जनैः पूजिता सती भक्तानामभिमतं मनोरथमपि पूरयति ।

एवं धार्मिकसन्तुलनव्यवस्थास्थापनमवतारस्य प्रमुखं प्रयोजनं विद्यते, तच्च तृतीयया प्रद्युम्नाख्यया मूर्त्या एव सम्पाद्यते, इत्थमवतारस्य सम्बन्धो भागवतभक्तानां चतुर्व्यूहवादेन सिध्यति। एषां चतुर्णां मतानां पोषक-प्रमाणानि तत्तत्पुराणेषूपलभ्यन्ते।

तत्र प्रथममतस्य पोषकं प्रमाणं मत्स्यपुराणे एवं प्राप्यते—

त्यक्त्वा दिव्यां तनुं विष्णुर्मानुषेष्विह जायते।
युगे त्वथ परावृत्ते काले प्रशिथिले प्रभुः॥ =४७।३४

द्वितीयमतस्य पुष्टिः ब्रह्मपुराणवचनैर्जायते—

यदा यदा त्वधर्मस्य ग्लानिर्भवति भो द्विजाः।
धर्मश्च ह्रासमभ्येति तदा देवो जनार्दनः॥

अवतारं करोत्यत्र द्विधा कृत्वात्मनस्तनुम्।
सर्वदैव जगत्यर्थे स सर्वात्मा जगन्मयः॥
स्वल्पांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम्। =७२।२-४

तृतीयमतस्य पोषकं प्रमाणं हरिवंशे दृष्टिगोचरी भवति—

तस्यैका च महाराज! मूर्तिर्भवति सत्तम।
नित्यं दिविष्ठा या राजन्! तपश्चरति दुश्चरम्॥

द्वितीया चास्य शयने निद्रायोगमुपाययौ।
प्रजासंहारसर्गार्थं किमध्यात्मविचिन्तकम्॥

सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्यतः।
पूर्णे युगसहस्रे तु देवदेवो जगत्पतिः॥ =४१।१८-२०

चतुर्थमतस्य पोषकं प्रमाणं महाभारतस्य शान्तिपर्वण्युपलभ्यते—

स देवो भगवान् सर्वं व्याप्य नारायणो विभुः।
चतुर्धा संस्थितो ब्रह्मा सगुणो निर्गुणस्तथा॥

एका मूर्तिरनुद्देश्या शुक्लां पश्यन्ति तां बुधाः।
वासुदेवाभिधानाऽसौ निर्ममत्वेन दृश्यते॥

द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यसौ।
तामसी सा समाख्याता तिर्यक्त्वं समुपागता॥

तृतीया कर्म कुरुते प्रजापालनतत्परा।
सत्त्वोद्रिक्ता च सा ज्ञेया धर्मसंस्थानकारिणी॥

चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा।
रजस्तस्या गुणः सर्गं सा करोति सदैव हि॥

या तृतीया हरेर्मूर्तिः प्रजापालनतत्परा।
सा तु धर्मव्यवस्थानं करोति नियतं भुवि॥

यदा यदा हि धर्मस्य ग्लानिः समुपजायते।
अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसौ॥

इति सा सात्त्विकी मूर्तिरवतारं करोति च।
प्रद्युम्नेति समाख्याता रक्षाकर्मण्यवस्थिता॥

भगवतो विष्णोरवतारः प्रकारद्वयेन जायते। एकत्र भगवान् स्वकीयं वास्तविकं स्वरूपं परिहाय नवीनं रूपं परिगृह्णाति, अन्यत्र च मातृगर्भे नियतकालपर्यन्तं स्थित्वा जन्मग्रहणं करोति। सर्वशक्तिमत्वाद् भगवतो नारायणस्यावतारविषये इमावुभावपि प्रकारौ सम्भवतः।

कदाचित् कार्यवशाद् रूपपरिवर्तनमन्तराऽपि भगवदाविर्भावो भवति। एवंविधेऽवतारे रूपपरिवर्तनस्यावश्यकतैव न जायते, भगवान् स्वकीयेन वास्तविकेनैव रूपेण प्रकटी भवति। यथा विष्णुपुराणानुसारं भक्तप्रवरस्य प्रह्लादस्योद्धारार्थं भगवतो विष्णोः स्वकीयेन वास्तविकेन रूपेणैवाविर्भावो वर्णितोऽस्ति।[1] तथा श्रीमद्भागवतानुसारमात्मीयैस्त्यक्तस्य गजेन्द्रस्यार्तरावं श्रुत्वा तदुद्धारार्थं चक्रायुधस्य भगवतो विष्णोः स्वरूपत एव प्रादुर्भावो जातः।[2]

## अवतारभेदाः

पुराणेषु पञ्चविधा अवतारा उपलभ्यन्ते—१. पूर्णावतारः, २. अंशावतारः, ३. विशेषावतारः, ४. अविशेषावतारः, ५. नित्यावतारश्च। तत्रादौ कलाभेदेनावतारो द्विविधः—पूर्णावतारोंऽशावतारश्च। नव कलातः पञ्चदशकलापर्यन्तमवतारोंऽशावतारः कथ्यते, तथा षोडशभिः कलाभिः अवतारः पूर्णावतारः प्रोच्यते। यथा परशुरामो द्वादशकलावतार आसीत्, किन्तु सीतास्वयम्वरानन्तरं यदा तस्य कलाः श्रीरामचन्द्रे आकृष्टास्तदा स

---

१. तस्य तच्चेतसो देवः स्तुतिमित्थं प्रकुर्वतः।
आविर्बभूव भगवान् पीताम्बरधरो हरिः॥ = १।२०।१४

२. तं तद्वदार्तमुपलभ्य जगन्निवासः
स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः।
छन्दोमयेन गरुडेन समुह्यमान-
श्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः॥ = ८।३।३१

केवलं मुनिमात्रमवशिष्टः । तथा चोक्तं वाल्मीकीये रामायणे बालकाण्डे गोविन्दराजस्य टीकायाम् ।[1]

अंशावतारपूर्णावतारयोरिदमेवास्त्यन्तरम्-- अंशावतारस्य कर्म एकदेशस्य, एककालस्य, एकस्याः परिस्थितेः, कदाचिदेकस्यापि कस्यचित् कृते हितकरं भवति, किन्तु पूर्णावतारस्य कर्म सम्पूर्णस्य देशस्य सकलस्य कालस्य सर्वासामेव परिस्थितीनां समेषां जीवानां च हिताय भवति। यथांऽशावतारस्य परशुरामस्य क्षत्रियसंहारात्मकं कर्म तदानीमावश्यकमासीत्, किन्तु सर्वदा तदावश्यकं नासीत्। बुद्धसमये चेश्वरमुपेक्ष्य यज्ञविरोधं च विधाय अहिंसायाः प्रचारस्तदानीं परमावश्यक आसीत्, परन्त्वीश्वरस्य खण्डनं यज्ञस्य विरोधो वा न सर्वकालोपयोगी। किन्तु पूर्णावतारस्य लीलापुरुषोत्तमस्य भगवतः श्रीकृष्णस्य, मर्यादापुरुषोत्तमस्य श्रीरामस्यचादर्शमयः कार्यकलापः सकलस्य कालस्य समस्तस्य देशस्य सर्वासामवस्थानां विश्वेषां जनानाञ्च कृतेऽत्यन्तमुपयोग्यनुकरणीय उपादेय आदरणीय आदर्शमयोऽनुष्ठेय आश्रयणीयश्चास्ति।

एवं निमित्तभेदादपि द्वाववतारौ भवतः—एको विशेषावतारो द्वितीयश्चाविशेषावतारः। तत्र विशेषावतारो दीक्षासमये शिष्याणामन्तःकरणे गुरोर्भवति। अत एव गुरुर्ब्रह्मादिरूपेण पूज्यो मान्यश्च भवति।[2]

अविशेषावतारेषु कादाचित्को भगवद्भावस्यावेशो भवति, न तु स सार्वकालिकः। यदा यत्र भगवद्भावस्यावेशो भवति तदा स भगवत्समो भवति, अन्यथा साधारणजन इव प्रतीयते। सनकादिनारदपृथुप्रभृतयो महापुरुषा अविशेषावतारा आसन्। तथा चोक्तः पद्मपुराणे आवेशभावः।[3]

महाभारतस्य शान्तिपर्वणि शरशय्यायां स्थितेन भीष्मपितामहेन स्पष्टं प्रोक्तं यद् मयि द्रोणाचार्ये चासुराणामावेशो जात आसीदत आवां दुर्योधनस्य शुभचिन्तायां व्यापृतावास्ताम्।

मनुष्याणामन्तःकरणेषु भवति, नित्यावतारः, यतः सर्वशक्तिमतः सर्वव्यापकस्य परमात्मनः सर्वत्रैव सत्त्वात् सर्वजीवानां हृदयेषु विराजमान

१. ततः परशुरामस्य देहान्निर्गत्य वैष्णवम्।
पश्यतां सर्वदेवानां तेजो राममुपागमत्॥ =१।७६।११

२. गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥

३. आविष्टोऽभूत् कुमारेषु नारदे च हरिर्विभुः।
आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुजः॥ =२।२२।३१

स पापकर्मतः प्राणिनो निवारयति पुण्यकर्मसु च प्रेरयति । येन पापकर्मभ्यः सदा संकोचो भवति, पुण्यकर्मसु च प्रवृत्तिर्जायते । अत एवोक्तम् ।[1]

एतदतिरिक्तो भक्तसमाजे भगवत एकोऽर्चावतारोऽपि प्रसिद्धः । भक्तद्वारा पूजार्थं मृत्पाषाणादिभिर्धातुभिर्निर्मिता मूर्तयो भगवतोऽर्चाविग्रहाः कथ्यन्ते । अर्चाविग्रहेषु भगवतः शक्तेरावेशस्य नामार्चावतारः । बहूनामेतादृशानां भक्तानां तत्तत्पुराणेषु चर्चा समुपलभ्यते, येषां हार्दिकेन प्रेम्णा, दृढया निष्ठया, अनन्यसेवया च भगवन्मूर्तयश्चेतना इव व्यवहरन्ति हसन्ति वदन्ति अश्नन्ति च प्रेम्णा तदर्पितं वस्तुजातम् ।

गर्गसंहितायां गोलोकखण्डे चराज्ञा जनकेनावतारभेदसम्बन्धे
*कतिन्धा श्रीहरेर्विष्णोरवतारा भवन्त्यलम् । साधूनां रक्षणार्थाय कृपया वदमे प्रभो !*[2]

एत्येवं पृष्टो देवर्षि र्नारदोऽवतारस्य षड् भेदानुक्त्वा समेषामुदाहरणं दत्तवानस्ति । तथाहि (१) अंशावतारः (२) अंशांशवतारः (३) आवेशावतारः (४) कलावतारः (५) पूर्णावतारः (६) परिपूर्णावतरश्च ।

(१) ब्रह्मदेवो हि भगवतो नारायणस्यास्ति अंशावतारः (२) मरीच्यादयो ऋषयोऽशांशावतारा अभिमताः सन्ति ३ भृग्वादयो मुनय आवेशावताराः सन्ति (४) महामुनि कपिल-कूर्म-सूकर-वामनादयः कलावतारा उक्ताःसन्ति । (५) श्री राम-नृसिंहादयः पूर्णावतारस्योदाहरणानि सन्ति । तथा (६) परिपूर्णावतारः साक्षाद् भगवान् वासुदेवो लीलापुरुषोत्तमः श्रीकृष्णोऽस्ति, यो भूभारहरणार्थमवतीर्याप्यनेकानि अपूर्वाणि अनन्यसाधारणानि लोकोपयोगीनि धर्मकार्याणि कृतवान् ।[3]

---

१. जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न ततो निवृत्तिः ।
केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥

२. अंशोंऽशांशस्तथावेशः कला पूर्णः प्रकथ्यते ।
व्यासाद्यैश्च स्मृतः षष्ठः परिपूर्णतमः स्वयम् ॥ = १।१६

३. ब्रह्मादयः स्मृता अंशा अंशांशास्तु मरीचयः ।
कलाः कपिलकूर्माद्या आवेशा भार्गवादयः ॥
पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः ।
वैकुण्ठोऽपि तथा यज्ञो नरनारायणः स्मृतः ॥
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
असंख्यब्रह्माण्डपति गोलोके धाम्नि राजते ॥ = १।१७-१९
परिपूर्णतमः साक्षात् श्रीकृष्णो नान्य एव हि ।
एककार्यार्थमागत्य कोटिकार्यं चकार ह ॥ = १।२६

प्रायः सर्वेषु पुराणेष्ववताराणां चर्चा समुपलभ्यते। श्रीमद्भागवते प्रथमस्कन्धे कुन्तोस्तुतौ दशमे गर्भगीतायामन्यत्र च भगवदवतारविषयेऽनेकानि कारणानि बह्वो युक्तयश्च प्रदत्ताः सन्ति। भगवान् भक्तानामभिलाषया विविधानि रूपाणि निर्माय तान् सन्तोषयति। श्रीमद्भागवतस्य दशमस्कन्धे एकः प्रसङ्ग एवमुपतिष्ठते यद् यदा भगवान् श्रीकृष्णो मिथिलायामुपस्थितस्तदा परमभक्तौ मैथिलश्रुतदेवावातिथ्येन तं सत्कर्तुं युगपदेव न्यमन्त्रयेताम्। अतस्तेनोभयोः प्रार्थनानुसार युगपदेव रूपद्वयं विधाय द्वयोरेव गृहं गत्वोभावपि कृतार्थीकृतौ। रहस्यमेतत् केनापि न ज्ञातम्।[1]

एवं महेन्द्रमखभङ्गप्रसङ्गे गोवर्द्धनपूजासमये गोपान् विश्रम्भयितुं भगवान् श्रीकृष्णो गिरिराजोपरि द्वितीयं विशाल रूपं धृत्वाऽविर्भूयाहं गोवर्द्धनोऽस्मीति ब्रुवन् सर्वाः पूजासामग्रीरभक्षयत्। तथा स आत्मनो वास्तविकरूपेण व्रजवासिभिः सह स्वयं त प्रणमन्नवोचत् अरे, पश्यताश्चर्यं गिरिराजेन साक्षात् प्रकटीभूयास्मासु महाननुग्रह कृत। एष यादृशमिच्छेत्तादृश रूप विधातुं शक्नोति। ये वनवासिन एनमनाद्रियन्ते न ते सुखिनो भवितुमर्हन्ति। अत आत्मनो गवाञ्च कल्याणायायमवश्यं नमस्कार्यः तथाचोक्तं श्रीमद्भागवते।[2]

ब्रह्मदेवस्य मोहप्रसङ्गे च वत्सानां गोपानाञ्च रूपाणि धृत्वा वर्षपर्यन्त सर्वं कार्यं यथावदचालयद् भगवान् श्रीकृष्ण इति तु सर्वप्रसिद्धमेवास्ति। भगवतो रामस्यापि विषये वर्णनमुपलभ्यते यद् यदा स लङ्काविजयानन्तरं चतुर्दशवर्षावधिं समाप्य साकेतमुपेतस्तदा पुरवासिनो संमिलितुमातुरान् अवलोक्यासंख्यानि रूपाणि विधाय सर्वैः सह युगपदेवामिलत्।

१. न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजौ।
मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली॥
भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया।
उभयोराविशद्गेहमुभाभ्यां तदलक्षितः॥ = १०।८६।२५-२६

२. कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः।
शैलोऽस्मीति ब्रुवन् भूरि बलिमादद् बृहद्वपुः॥
तस्मै नमो व्रजजनैः सह चक्रेऽऽत्मनाऽऽत्मने।
अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात्॥
एषोऽवजानतो मर्त्यान् कामरूपी वनौकसः।
हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम्॥ = १०।२४।३५-३०

## दिव्यानि भगवतो जन्मानि कर्माणि च

भगवतो जन्मानि कर्माणि च दिव्यानि भवन्ति। भगवान् न जन्मकर्मभिः प्रेर्यते, नापि तच्छरीरं पाञ्चभौतिकं भवति, यतो हि स कालकर्मभ्यः परोऽस्ति। अतः कर्मणा तस्य स्पर्शोऽपि न भवति। भगवता श्रीकृष्णेन स्वयमेवोक्तं गीतायाम्।[1]

न कर्मवशीभूतो भगवान् जन्म गृह्णाति, किन्तु स्वेच्छया भक्तेष्वनुग्रहायैव शरीरधारणं करोति। यथा कारागृहे वन्दिनो राजानश्च गच्छन्ति। परमेके दण्डं भोक्तुमपरे च व्यवस्थां कर्तुं प्रविशन्ति। तथैव भगवान् जगद् व्यवस्थापयितुमेव स्वां मायामधीनीकृत्यस्वेच्छयावतरति। तस्य शरीरधारणकारणं न कर्म। किन्तु स्वेच्छैवस्ति।[2]

भगवतः शरीरं साधारणमनुष्यस्येव न पाञ्चभौतिकैरुपादानैरुत्पद्यते, किन्तु भगवद्विग्रहो दिव्यो भवति। यदा भगवान् श्रीकृष्णः कारागृहे वसुदेवदेवकीसमक्षे प्रादुर्बभूव, तदा स स्वलीलया शङ्खचक्रगदापद्मधारी चतुर्भुजरूपेणाविरभवत्। तदुक्तं श्रीमद्भागवते।[3] अग्रे पुनर्मातुः प्रार्थनया स्वं चतुर्भुजं रूपमदृश्यं विधाय मातापित्रोः पश्यतोरेव साधारणो लौकिको द्विभुजबालक इवाजायत।[4]

एवमेव भगवान् रामोऽपि कौशल्यायाः समक्षे चतुर्भुजरूपेणैव प्रादुरभवत्, पुनर्मातुः प्रार्थनया द्विभुजो जातः। किं लोके कश्चिद्बालक एवं रूप उत्पद्यते ? अतो भगवतो जन्म दिव्यमित्यत्र न काऽपि विप्रतिपत्तिः। भगवतो वामनस्य नृसिंहस्य चालौकिकं रूप निरीक्ष्य भगवज्जन्मनोऽलौकिकतैव व्यक्तीभवति। भगवतः श्रीकृष्णस्यान्तर्धानमपि साधारण।

---

१. न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभि र्नस लिप्यते ॥ =४।१४

२. कारागृहे गच्छति भूमिपालो हेतुर्दया तत्र न कर्मबन्धः।
एवं स सर्वेश्वरदेवदेवो दयावतारो न च कर्मबन्धः॥

३. तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदायुदायुधम्।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम्॥
महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम्।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ =१०।३।९-१०

४. इत्युक्त्वाऽऽसीद्धरिस्तूष्णीं भगवानात्ममायया।
पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ =१०।३४७

मनुष्यशरीरवद् नाभवत्। श्रीमद्भागवते लिखितमस्ति यत् तस्य मङ्गलमयं दिव्यं शरीरं मनुष्यदेहवन्न विनष्टम्, किन्तु स्वकं धाम प्रविवेश।[1]

एवं वाल्मीकीयरामायणे उत्तरकाण्डे लिखितमस्ति यद् रामस्य परमधामगमनसमये यदा देवैः सह ब्रह्मा सरयूतटमुपेत्य वैष्णवे देहे प्रवेष्टुं प्रार्थयामास, तदा श्रीरामस्त्रिभिर्भ्रातृभिः सार्कं तेनैव शरीरेण वैष्णवं तेजःशरीरं प्रविवेश।[2]

वस्तुतो भगवतः शरीरं मायिकं न भवति, यतो हि मायाबन्धनात् स मायापतिः सर्वथा विमुक्तः। अत एवामलात्मनो महात्मनोऽपि भगवद्विग्रहं विलोक्य मुग्धा भवन्ति। शरशय्यायां शयानो भीष्मो यदा भगवतो वासुदेवस्य त्रिभुवनमोहनं रूपं व्यलोकयत्तदा स प्रार्थयामास।[3]

यदा भगवान् रामो महर्षिणा विश्वामित्रेण सार्द्धं जनकपुरं धनुर्यज्ञप्रसङ्गेन गतवानासीत्, तदा तद्रूपमवलोक्य महाज्ञानिनोऽपि जनकस्य विचित्रैव दशाऽभवत्। स वस्तुतो विदेहो जातः। अतोऽवतारिणां शरीरं न मायिकं भवति, किन्तु तेषां जन्मानि कर्माणि शरीराणि च दिव्यान्येव भवन्ति। भक्तानां प्रार्थनानुसारमेव प्रेमवशीभूतो भगवान् समये समयेऽवतरति। अत एव गीतायामुक्तम्।[4]

## विभूतिपूजा

अवतारवद्भगवद्विभूतयोऽप्याद्रियन्ते। भगवद्विभूतीनामपि सम्मानस्य पूजायाश्चाज्ञा शास्त्रेषु प्रदत्ताऽस्ति। यस्मिन् मनुष्ये भगवतः शक्तेर्विशेषतो विकासो दृश्यते तत्र तदालम्बनेन सर्वशक्तिमतो भगवतः पूजा विभूतिपूजा व्यवह्रियते। भगवता श्रीकृष्णेन च गीतायां स्पष्टमुक्तम्।[5]

---

१. लोकाभिरामं स्वतनुं धारणाध्यानमङ्गलम्।
योगधारणयाऽऽग्नेय्या दग्ध्वा धामाविशत् स्वकम्॥ = ११।३१।६

२. पितामहवचः श्रुत्वा विनिश्चित्य महामतिः।
विवेश वैष्णवं तेजः सशरीरः सहानुजः॥ = ११०।१२

३. त्रिभुवनकमनं तमालवर्णं रविकरगौरवाम्बरं दधाने।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या॥ श्री भा० १।९।३३

४. जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥ = ४।९

५. यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥ = १०।४१

वृक्षेषु पिप्पलपूजा, उद्भिज्जेषु तुलसीपूजा, पशुषु गोपूजा, मनुष्येषु गुरोराचार्यस्य राज्ञोऽतिथेर्महापुरुषाणाञ्च पूजा विभूतिपूजैव निगद्यते। अवतारपूजा विभूतिसम्मानञ्च हिन्दुधर्मस्य प्रमुखमङ्गमस्ति। कस्याञ्चिद्विभूतौ द्वयोस्त्रयाणां वा देवाना कलाया आवेशो भवति। यथा भगवति हनुमति रुद्रस्य वायोश्च कले कार्यं कुरुतः। कुत्रचिच्च देवाना महर्षीणाञ्च कलास्तिष्ठन्ति, यथा भगवति व्यासे भगवतो विष्णोर्महर्षीणाञ्च कला आसन्। एवं भगवति कपिलेऽपि। अत एव स मुनिरवतारी चासीत्।

प्रायः सर्वेषु पुराणेष्ववताराणां प्रसङ्गः समागतो विद्यते। शैवमतपोषकपुराणेषु भगवतः शिवस्यानेकेषामवताराणा चर्चाऽस्ति। वैष्णवसिद्धान्तपोषकेषु पुराणेषु भगवतो विष्णोर्विभिन्नानामवताराणामुल्लेखोऽस्ति। शाक्तमतपोषकपुराणेषु भगवत्याः शक्तेः साधका विविधा अवतारा श्रूयन्ते। सूर्योपासनासम्बन्धिषु पुराणेषु सूर्यदेवस्यावतारवर्णनमस्ति। गाणपत्यपुराणे भगवतो गणपतेरनेकावतारकथा दरीदृश्यन्ते।

सृष्टिकार्योपयोगिनो यस्य यस्यावतारस्य नाम्ना यद्यत् पुराण निर्मितमस्ति तत्र तत्र तस्य तस्यावतारस्य विशेषवर्णनं वर्तते, तद्द्वारा च कस्मैचिद् व्यक्तिविशेषाय कश्चनामूल्योपदेशोऽवश्यं दत्त उपलभ्यते। यथा मत्स्यपुराणे श्रीमत्स्यद्वारा सत्यव्रताय मनवे, कूर्मपुराणे कूर्मद्वारा देवताभ्यः, वाराहपुराणे वराहद्वारा पृथिव्यै, नृसिंहपुराणे नृसिंहद्वारा भक्तराजाय प्रह्लादाय, वामनपुराणे च वामनद्वारा दानवीराय बलयेऽमूल्य उपदेशो दत्तो विद्यते। सर्वेषु पुराणेष्ववतारचर्चाया इदमेव मुख्यं कारणमस्ति, यन्मनुष्या अवताराणा निर्मलमादर्शमयमुपदेशप्रदमनुकरणीयं च चरित्रं समाकर्ण्यालौकिकं महिमान चावगत्य स्वान्त करणेषु भक्तिवैराग्यज्ञानादिद्वारा मानवजन्मधारणस्य भगवत्प्राप्तिरूपं प्रमुखं लक्ष्यं प्राप्तुमवश्यं समर्था भवेयुः। पुराणेष्वेकमत्या स्वीकृतमस्ति यद् भूभारहरणपूर्वकं धर्मसंस्थापनद्वारा जगतो रक्षायै यथासमयं स्वयं सर्वशक्तिमान् परमात्मादेवे. श्लाघ्ये पवित्रतमेऽत्र भारतवर्षेऽवतरति।

## अवतारविषयिणी भ्रान्तिः

सर्वव्यापकस्य निराकारस्य परमात्मनो मानवपिण्डे जन्म गृहीत्वा ससारे आगमनम् आश्चर्यस्यास्ति विषय.। अतोऽवतारविषये समालोचकानामनेका शङ्का उत्पद्यन्ते। यथा निरीहस्य परमात्मनो मानव शरीरं धृत्वा ससारे प्रकटीभूय संसारिमानववल्लीलाकरणस्येच्छा कथ भवितुमर्हति ? मायामुक्तो निराकारः परमात्मा मायामयं स्थूलं शरीरं कथ-

कथङ्कारं ग्रहीतुं शक्नुयात् ? यदा व्यापकत्वात् परमात्मा सर्वत्र विराजते तर्हि अवतारं गृहीत्वा कुतोऽप्यागमनं गमनं च कथं सम्भवति ? यदि परमात्माऽस्ति सर्वशक्तिमान् तदा अवतारमन्तराऽपि स्वेच्छामात्रेणैव दुष्टदमनं सज्जनरक्षणं धर्मसंस्थापनं भूभारहरणञ्च कर्तुं प्रभवति। अतो दुःखमये मानवशरीरग्रहणचक्रे तदागमनं न समुचितं प्रतिभाति।

अस्तु—इमा आशङ्कास्तु आपाततो रमणीयाः प्रतीयन्तेऽपरन्तु हिन्दुशास्त्रेषु आसां समाधानाय महान् रमणीयः प्रयासः कृतोऽस्ति। वेदोपनिषद्रामायणमहाभारतपुराणादिषु अवतारतत्त्वस्य विस्तृतं विवेचनं कृतं विद्यते तथा तद्विषये पुष्कलानि प्रमाणान्यपि समुपलभ्यन्ते। परमात्मनः सर्वव्यापकत्वात् सर्वशक्तिमत्त्वाच्च तस्य शक्तिरपि सर्वव्यापिनी वर्तते। जडचेतनात्मकदृश्यद्वारा तस्य सा शक्तिः विकासमेति। अतः संसारे या काऽपि शक्तिः दृश्यते सा तस्यैव शक्तिरस्ति। अस्याः शक्तेः कथङ्कारं विकासो जायते ? अस्मिन् विषये पञ्चदशीकारेण विद्यारण्यस्वामिना लिखितमस्ति यद् अद्वितीये ब्रह्मणि शक्तिः पूर्णा विद्यते। अस्याः शक्तेः दृश्यस्याश्रयेण यदा उल्लासो भवति तदैवास्मिन् संसारे तस्याः प्रकाशो जायते[1]।

विकासप्राप्तेयं शक्तिः शास्त्रेषु कालनाम्नाऽभिहिता भवति। यत्र पूर्णशक्तेर्विकासो भवति तत्र षोडशकलानां विकासो मन्यते।

जीवे परिमिता शक्तिस्तिष्ठति ईश्वरे चापरिमिता। अतो जीवस्य सर्वेषु कार्येषु साफल्यं न भवति, किन्तु ईश्वरः सर्वेषु कार्येषु सफलो भवति। यतो हि तत्र शक्ति-ज्ञानयोरानन्त्यमस्ति। अतस्तस्यासफलतायाः प्रश्न एव नोदेति।

यावत् सम्भवकार्याणां सम्बन्धोऽस्ति तावन् महतोऽपि महानपि जनः पुरुष एव मन्यते नावतारः, किन्तु यत् कार्यं पुरुषशक्तेर्बहिर्भूतमस्ति, यत् पुरुषोऽसम्भवं मन्यते, तत्कार्यसम्भवकर्ता अवतारः कथ्यते। अवतारः *कियन्ति एवंविधानि असम्भवकार्याणि कुरुते, येन पुरुषकार्यैस्तुलना न* संभवति। श्रीमद्भागवते लिखितमस्ति यद् अशरीरिणः परमात्मनः शरीरधारिषु अवतारः तैः तैः पराक्रमैः ज्ञायते यैः केषाञ्चिदन्येषां कार्याणां तुलना न सम्भवति।[2]

---

१. सर्वशक्तिमयं ब्रह्म नित्यमापूर्णमद्वयम्।
यथोल्लसति शक्त्याऽसौ प्रकाशमधिगच्छति ॥ = पञ्चदशी १३।७

२. यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः।
तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः ॥ = १०।१०।३४

अस्येदमस्ति तात्पर्यं यद् यत् कार्यं कोऽपि देहधारी कर्तुं न प्रभवति तत्कर्ता अवतारः प्रोच्यते। अत एव महान्ति आचार्याः सन्तः मोहान्ता महात्मानो विद्वांसश्चक्रवर्तिनो राजानो महापुरुषाश्च नावताराः प्रोच्यन्ते। अवतारिणस्त एव मन्यन्ते, ये मानवशक्तितः पराणि कार्याणि कुर्वन्ति। यथा रामावतारे अहल्याया उद्धारः, वानरभल्लूकानां सेनानिर्माणम्, समुद्रबन्धनम्, रावणवधः। श्रीकृष्णावतारे च गोवर्द्धनोद्धारणम्, मृताना गुरुपुत्राणामानयनम्, महाभारतसंग्रामावसरे गीतोपदेशादिः।

मर्यादापुरुषोत्तमो हि रामो मर्यादास्थापनायैवावतीर्ण आसीत्, तस्य मानवजीवनस्योत्तमादर्शस्थापन लक्ष्यमासीत्। अतः तस्मिन् अनुचितप्रतीयमानानां घटनानां समावेशो नास्ति, किन्तु भगवतः श्रीकृष्णस्य चरित्रे कियतामसम्भवप्रतीयमानानामनुचिताभासानां च लीलानां समावेशो वर्तते, यतो हि स लीलापुरुषोत्तमः पूर्णावतारश्चासीत्। पूर्णावतारः स एव मन्यते, यस्मिन् सर्वाभिः दृष्टिभिः पूर्णता स्यात्। पद्मपुराणे लिखितमस्ति यत् पूर्णावतारत्वादेव अन्यावतारापेक्षया भगवतः श्रीकृष्णस्य चरित्रं महद् विद्यते।[1]

### अवतारशब्दार्थः

अवोपसर्गपूर्वकात् तॄधातोः "अवेस्तृस्त्रोर्घञ्"(३।३।१२०) इति पाणिनीयसूत्रद्वारा घञ् प्रत्यये वृद्धौ सत्यां रपरे च कृतेऽवतारशब्दो निष्पद्यते, यस्य शाब्दिकोऽर्थो भवति उपरिष्टादधोऽवतरणम्, परं जगति नैवंविधं किमपि स्थानमस्ति, यत्र सर्वव्यापकस्य सर्वान्तर्यामिणो निराकारस्य परमात्मनः सत्ता न स्यात्। अतोऽवतारशब्दस्य नायमर्थोऽस्ति, यत्परमात्मा कुतोऽप्यागच्छति ऊर्ध्वात् स्वर्गाद्वाऽवतरति, किन्त्ववतारशब्दस्य वास्तविकोऽयमर्थो वर्तते, यदव्यक्तरूपेण सर्वत्र विराजमानस्य परमात्मनो व्यक्तरूपेण प्रादुर्भावः। "ईशा वास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्" (य॰ वे॰ ४०।१) इति मन्त्रानुसारमिह जगति यत्किञ्चिद् विद्यते तत्सर्वं परमात्मनः स्वरूपमेवास्ति। तथा च भगवान् विष्णुर्यदा जगद्रक्षाभिप्रायेण स्वचिन्मयकलायाः शक्तिं कस्यचन जीवस्याश्रयेण विशेषतो विकासयति, तदा सैव लीलाविग्रहरूपा तस्य सर्वप्रत्यक्षाऽवस्थाऽवतारशब्दाभिधेया भवति। अतो व्यक्तत्वेऽपि परमात्माऽव्यक्तोऽस्ति, प्राकट्येऽपि रहस्य-

---

१. अन्ये सर्वेऽवताराः स्युः कृष्णस्य चरितं महत्।
भूभारवविनाशाय प्रादुर्भूतो रमापतिः॥ — उ॰ख॰ २५।२६

मयोऽस्ति । अत एव श्रीभगवतः स्वरूपं वास्तविकं दुर्बोधं मत्वा श्रीमद्भागवतस्याद्यं पद्यमुदाजहार भगवान् व्यासः ।[१]

## वैदिकवाङ्मयेऽवतारवादः

न केवलं पुराणेष्वेव, किन्तु वेदे ब्राह्मणे आरण्यके उपनिषदि रामायणे महाभारते चाप्यवताराणां पुष्कलः प्रसङ्ग उपलभ्यते यस्यानुशीलनेन मानव जन्म सफलयितुं शक्यते ।

वैदिकग्रन्थेषु येषामवताराणामाभासो मिलति तेषामेव पुराणेषु सुरुचिपूर्णया प्राञ्जलया भाषया आख्यानोपाख्यानादिभिर्विस्तार उपलभ्यते । तस्मात् पुराणप्रतिपादिता अवतारा वेदमूलका एव सन्तीत्यत्र न काऽपि विप्रतिपत्तिर्भवितुमर्हति केषाञ्चिदपि विपश्चिताम् ।

### मत्स्यावतारः

वैदिकवाङ्मये येषां विभिन्नानामवताराणां सङ्केतः कृतोऽस्ति, तेषां विस्तृतविवरणं तत्तत्पुराणेषूपलभ्यते । एकदा नदीतटेऽवनेजनं कुर्वतः सत्यव्रतस्य मनोरञ्जलौ अकस्मादेको मत्स्यः समागतः, उवाच च तम्, मां पालय, अहं त्वां पारमुत्तारयिष्यामि । ततो मनुराश्चर्यचकितो भूत्वाऽपृच्छत्-कुतो मां पारयिष्यसि ।। ततस्तेन मत्स्येन प्रोक्तम्-यद् एको महान् जलौघ आगमिष्यति सर्वाः प्रजाश्च नाशं गमिष्यन्ति । अहं त्वां ततो रक्षिष्यामि—

मनवे ह वै प्रातः मत्स्यः सहपाणी आपेदे सहास्मै वाचमुवाच बिभृहि माम्, पारयिष्यामि त्वेति । कस्मान्मा पारयिष्यसीति ओघ इमा सर्वाः प्रजा निर्वोढास्ततस्त्वा पारयिताऽस्मि । ( शतपथब्राह्मणे १।८।१।१ )

तदनुसारं मनुः तं स्वकमण्डलौ स्थापितवान् । तत्र वर्द्धमानं प्रथम सरसि ततस्तं समुद्रे निक्षिप्तवान्, यत्र तेन विशालं शरीर धृतम् । जलप्लावनमागतं सर्वं वस्तुजातञ्च स स्वस्मिन् संहृतवान् । ततो मत्स्यकथनानुसारमन्नबीजं संरक्षन्नेकस्यां नौकायामुपविश्य मनुरात्मानं रक्षितवान् । जलप्लावनोपरतो मनुना यज्ञः कृतस्तथा तैः सुरक्षितैर्बीजैः पुनः पदार्थाना सर्जनं च कृतम् ।

---

१. जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ = १।१।१

मत्स्यावतारस्येयं कथा प्रायः प्रत्येकपुराणेपूपलभ्यते-श्रीमद्भागवते (१।३।१५, ८।२४।११-६१); अग्निपुराणे (२।४६), गरुड़पुराणे (१।१४२), पद्मपुराणे (५।४।७२); महाभारतस्य शान्तिपर्वणि ३४० अध्याये चास्याः कथाया उपबृंहणं वर्तते। मत्स्यपुराणस्य निर्माणं त्वस्याः कथाया आधारे एव जातमस्ति। वैदिक-पौराणिकयोराख्यानयोरन्तरमियदेवास्ति, यद् यत्र शतपथब्राह्मणे अस्याख्यानस्य भौगोलिकं क्षेत्रं हिमाचलप्रदशोऽस्ति, तत्र पुराणेपु द्रविणदेशस्य कृतमाला नदी निर्दिष्टा वर्तते[1]।

एवं भौगोलिके भेदे सत्यपि कथारूपे किञ्चिदन्तरं नास्ति। एवंप्रकारस्य जलप्लावनस्य कथा न केवलं वेदपुराणयोरेवाङ्किताऽस्ति, किन्तु कुरान-बाइबिलयोरपि एतत्सङ्केतो विद्यते। बाइबिले नूहनौकावृत्तं विशदतया वर्णितमस्ति। अतो मत्स्यावतारस्य कथानकं न केवलं पुराणानां कल्पनाऽस्ति, अपितु वैदिकवाङ्मयानुमोदिता अन्यसम्प्रदायै सर्वथा समर्थिता चास्ति।

## कूर्मावतारः

तैत्तिरीयारण्यके कूर्मावतारस्य प्रसङ्ग एवं निर्दिष्टो वर्तते- प्रजापतेः शरीराद् रसः कम्पयमानो जातः। जलाभ्यन्तरे विचरन्तं कूर्मं विलोक्य प्राजापतिना प्रोक्तम्-कूर्म ! भवान् मम त्वचो मांसाच्च प्रादुर्भूतोऽस्ति। कूर्मेणोत्तरितम्-नहि, अहं तु भवतः प्रागेवासम्। अतः स पुरुषः कथितः। पुरस्तिष्ठतीति व्युत्पत्यनुसारं प्रथमतः वर्तमाना व्यक्तिः पुरुषपदवाच्या भवति। कूर्मः पूर्वतस्तत्र निवसतिस्म। अतः स पुरुषपदवाच्यः कथितः। तस्य सहस्राणि शिरांसि, सहस्राणि नेत्राणि, सहस्राणि च पादा आसन्। अनेन रूपेण कूर्म उदतिष्ठत्—

अन्तरतः कूर्मभूतः तमब्रवीत्, मम वै त्वङ्मांसात् समभूत्, नेत्यब्रवीत्, पूर्वमिवाहमिहासम्। इति तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् भूत्वोदतिष्ठत्। (तैत्तिरीयारण्यके १२३।३)।

अस्यारण्यकस्य भाष्ये स कूर्मपुरुष. परमात्मनोऽभिन्नोऽभिमतोऽस्ति। पुरुषसूक्ते च 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद्' द्वाराऽपि स एव कूर्मपुरुषो निर्दिष्टोऽस्ति।

---

१. एकदा कृतमालायां कुर्वतो जलतर्पणम्।
तस्याञ्जल्युदके काचिच्छफर्येकाऽभ्यपद्यत ॥
सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत !
उत्ससर्ज नदीतोये शफरीं द्रविणेश्वरः ॥ श्री०भा० ८।२४।१२,१३

शतपथब्राह्मणेऽपि प्रजापतिद्वारा कूर्मरूपं धृत्वा प्रजासृष्टिकरणस्योल्लेखो विद्यते ( ७।५।१।५ ) जैमिनिब्राह्मणे ( ३।२७२ ) तु कूर्मोपाख्यानं सचित्ररूपेणोपात्तमस्ति। तत्र कूर्मः प्रजापतिस्वरूपमेवोक्तम्। अस्या एव वैदिककथाया उपबृंहणं समुद्रमन्थनप्रसङ्गे विभिन्नेषु पुराणेषु जातमस्ति। पुराणानि एनं कूर्मं भगवतो विष्णोः द्वितीयमवतारं मत्वा आख्यानस्यास्योपबृंहण कुर्वन्ति।

श्रीमद्भागवते लिखितमस्ति यत् समुद्रमन्थनसमये निराधारत्वाद् यदा मन्दराचलः समुद्रे निमज्जमान आसीत्तदा भगवता विष्णुना अद्भुत कूर्मरूपं गृहीत्वा मन्दराचलः स्वपृष्ठे धृतः।[1]

एवं कूर्मावताराय पुराणद्वारा वैदिकतत्त्वानामेवोपबृंहणं कृतमस्ति। कूर्मपुराणे ( १।१६।७७-७८ ); अग्निपुराणे ( ४।३६ ); मत्स्यपुराणे ( २४८।३० ); पद्मपुराणे ( ५।४।१३ ), ब्रह्मपुराणे (१८०।२१३) विष्णुपुराणे ( १।४ ) च कूर्मावतारस्य कथा कथितास्ति।

## वाराहावतारः

वाराहावतारस्य प्रसङ्गः तैत्तिरीयसंहितायामेवमागतोऽस्ति-यत् पूर्वं विश्वस्मिन् केवलजलमेवासीत्। तत्र प्रजापतिः वायुरूपेण विचरन् पृथिवी दृष्ट्वा वाराहरूपं धृत्वा तस्या उद्धारः कृतः—

आपो वा इदमग्रे सलिलमासीत्, तस्मिन् प्रजापतिर्वायुर्भूत्वा चरत् स ह तामपश्यत्, ता वराहो भूत्वाऽहरत्। ( तै० सं० ७।१।५।१ )।

तैत्तिरीयब्राह्मणेऽङ्कित वर्तते यत् प्रजापतिना वाराहरूपं धृत्वा जले निमज्जन कृतम्। तत स पृथिवीमधस्तादुपरिष्टादानीतवान्—
स वाराहो रूप धृत्वाऽप्सु न्यमज्जत्, स पृथ्वीमध्ये आर्च्छत्। (तै० ब्रा० १।१।६)
तैत्तिरीयारण्यके लिखितमस्ति यत् प्रजापतिना वाराहरूप धृत्वा जलाभ्यन्तरे निमज्जमाना पृथ्वी उपरि आनीता—उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ( १।१।३० ) शतपथब्राह्मणेऽङ्कितमस्ति यद् इयं विशाला पृथ्वी पूर्वं प्रादेशमात्रमासीत्। प्रजापतिना सूकररूप विधायाधस्तादुपरि आनीता "इतीयती ह वा इयमग्रे पृथीव्या स प्रादेशमात्री तामेमूप इति वराह उज्जघान। सोऽस्याः पतिरिति" ( १४।१।२।११ ) अथर्ववेदे च—वराहेण पृथिवी संविदाना ( १२।१।४८ )।

---

१. धृत्वा वपुः कच्छपमद्भुतं महत् प्रविश्य तोयं गिरिमुज्जहार।
दधार पृष्ठेन स लक्षयोजनं प्रस्तारिणा द्वीप इवापरो महान्॥=८।७।६

एवं तैत्तिरीयसंहिता-तैत्तिरीयब्राह्मण तैत्तिरीयारण्यक—शतपथ-ब्राह्मणाथर्ववेदस्थलेषु वाराहावतारस्य चर्चा विद्यते। एषां वैदिकतथ्यानामाधारेण पुराणैरपि वाराहावतारस्य महदाकर्षकं वर्णनं कृतमस्ति। *श्रीमद्भागवते वाराहावतारो यज्ञवाराहरूपेणाङ्कितोऽस्ति।*[1]

वैदिकवराहस्य पुराणेषु यज्ञवराहरूपेणाङ्कनं वैदिकत्वस्य स्पष्टं सङ्केतोऽस्ति। पुराणेषु वराहेण सह यज्ञस्य प्रतीक इयान् संवलितोऽस्ति यद् यज्ञस्य यावन्ति साधनानि सन्ति स्रुक्चमसादीनि तानि सर्वाणि वराहदेहे प्रतीकरूपेणाङ्कितानि विद्यन्ते।

वेदवाङ्मये निर्दिष्टं वाराहावतारद्वारा पाताललोकतः पृथिव्या उद्धार-कार्यं ब्रह्मपुराणे ( २१३।३२-३६ ); विष्णुपुराणे ( १।४।३२-३६ ); श्रीमद्भागवते ( २।७।१, ३।१३।१६-४७ ); वायुपुराणे; ( ६।१६-२३ ) अग्निपुराणे (५।१-३); मत्स्यपुराणे (२४८।६६-७४); ब्रह्माण्डपुराणे च ( १।५।१६-२३ ) उपवृंहितमस्ति।

**वामनावतारः**

वामनावतारस्य मूलं स्रोतः ऋग्वेदे उपलभ्यते। तत्र लिखितमस्ति यद् विष्णुना इदं जगत् त्रिभिः पादैराक्रम्य पाद् निहितः। अस्य धूलिधूसरिते चरणे भूम्यादिसमस्ता लोका अन्तर्हिताः—"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पा सुरे" ( १।२२।१७) शतपथब्राह्मणे यो वामनस्य प्रसङ्गोऽस्ति स एव पौराणिककथाया मूलं रूपमस्ति। संक्षेपतोऽयं प्रसङ्ग एवमस्ति-देवा असुराश्च प्रजापतेरेव सन्ततयः सन्ति। परस्परं विवाद कृत्वाऽसुरैर्देवान् पराजित्य समस्तायां पृथिव्यामधिकारः कृतः। यदा ते परस्पर पृथ्वीं विभक्तुमुद्यता जाता तदास्ते वा अपि वामनरूपं विष्णुमग्रे कृत्वा तत्रोऽस्पथाय स्वं भागं याचितवन्तः। असुरा वामनं वीक्ष्य तस्योपहासं कुर्वन्तः प्रोचुः-यावत् स्थानं व्याप्यायं विष्णुः शयीत तावती पृथ्वी वय युष्मभ्यं दास्यामः। तदनन्तरं देवा वेदमन्त्रैः विष्णुं सुरक्षितं कृत्वा तद्द्वारा समस्तायां पृथिव्यामधिकारं कृतवन्तः। शतपथब्राह्मणस्थानेन कथानकेन देवद्वारा असुराणां समस्तायाः पृथिव्या जयस्य वृत्तं वर्णितमस्ति यत्र वामनरूपेण वर्णितस्य विष्णोः सहयोग आसीत्।

---

१. यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्
क्रौडीं तनुं सकलयज्ञमयीमनन्तः।
अन्तर्महार्णव उपागतमादिदैत्यं
तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार ॥ — २।७।१

एवमृग्वेदीयमुरुगाय त्रिविक्रम शतपथीय वामनञ्च सह मेलयित्वा विभिन्नेषु पुराणेषु वामनावतारस्य एव प्रसङ्ग प्रस्तुतोऽस्ति। अन्तरमियदेव वर्तते यद् यत्र शतपथेऽसुरेभ्य पृथ्वीविजयस्य कथानकमस्ति, तत्र पुराणेषु असुराणा राज्ञो बले पृथिवीग्रहणकथा वर्तते। किञ्च शतपथस्य कथानक यज्ञस्य महिम्न प्रतिपादकमस्ति, यतो हि देवैरसुराणा भूमौ यज्ञस्य विस्तार कृत्वा भूमिरात्मसात् कृता, तथा पुराणेषु त्रिभि पदै पृथ्वी स्वर्ग बलिशरीरमापनानन्तर समस्ता पृथ्वी बलेरादाय देवराजायन्द्राय सा प्रदत्ताऽस्ति। एवमुभयत्रोभे आख्याने भगवतो विष्णोः महात्म्यस्यैव द्योतके स्त।

वामनावतारस्य कथा वामनपुराणे तु वर्तत एव, विशेषत श्रीमद्भागवतस्याष्टमे स्कन्धे १८-२३ अध्यायेष्वस्या विशद वर्णन राज्ञो बलेः यज्ञप्रसङ्गे वर्तते। अग्निपुराणस्य चतुर्थाध्याये तु ५-११ श्लोकेष्वेवातिसङ्क्षिप्ततया वामनावतारस्य कथाया वर्णन विद्यते।[1]

## नरसिंहावतार

वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नो नरसिंह प्रचोदयात्" (१।१।३१) इत्यादिना तैत्तिरीयारण्यके नरसिंहावतारस्य प्रसङ्ग उपलभ्यते। अस्या नरसिंहगायत्र्या नरसिंहावताराय वज्रनख-तीक्ष्णदंष्ट्रपदयो प्रयोगस्तद्भयङ्करता सङ्केतयति। एतदुपबृंहण हिरण्यकशिपु निहत्य प्रह्लादपालकस्य भगवतो नरसिंहस्य चरित्रचित्रणावसरे पुराणेषु कृतमस्ति। विशेषत श्रीमद्भागवते भगवतो नरसिंहस्य यत् सटामण्डित विकराल रूप वर्णितमस्ति तत्पूर्वोक्तस्य गायत्रीमन्त्रस्य वज्रनख-तीक्ष्णदंष्ट्रशब्दयोरुपरि भाष्यमेव प्रतीयते।[2]

१ न पुमान् मामुपव्रज्य भूयो याचितुमर्हति।
तस्माद्वृत्तिकरीं भूमिं वटो! काम प्रतीच्छ मे॥ =श्री भा ८।१९।२०
तोये तु पतिते हस्ते वामनोऽभूदवामन।
भूलोक स भुवर्लोकं स्वर्लोकं च पदत्रयम्॥ =अ०पु० ४।१०

२ सत्यं विधातु निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मन।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभाया न मृग न मानुषम्॥ =७।८।१८
मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम्।
प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेशरजृम्भिताननम्॥
करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम्।
स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुत व्यात्तास्यनासं हनुभेदभीषणम्॥ ७।८।२०,२१

एवं भगवतो विष्णोः पञ्चानां मत्स्य-कूर्म-वाराह-वामना-नरसिंहा-नामवताराणां वैदिकवाङ्मये स्पष्टं सङ्केत उपलभ्यते, परन्तु त्रिभ्यः परशुराम-श्रीराम-श्रीकृष्णावतारेभ्यो वेदे पर्याप्तपोषकसामग्री नोपलब्धा भवति। अथापि रामकृष्णयोरवतारयोः प्रसङ्गो वैदिक-साहित्ये यत्र तत्र प्राप्यते एव। यथा ऋग्वेदे—"विश्वामित्रो यदवहत्सुदासम्" (३।३।२२) सामवेदे-"शुभ्रकेतोद्यु तिभिरग्निर्वितिष्ठिनन्नुषद्भिर्वर्णैरभिराममस्थात्"(१५।२।१।३) ऐतरेयब्राह्मणे च-"प्रोवाच रामो भार्गवेयो विश्वान्तराय" (७।५।३१)। इत्यादिना रामावतारस्य प्रसङ्ग उपलभ्यते। तथा ऋग्वेदे-"यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदुदूतः" (४।७।७।८) अथर्ववेदे-"घृतं पीत्वा मधुचारु गव्यं पितेव पुत्रानभिरक्षतामिदम्" (२।१३।१) तैत्तिरीयारण्यके-"नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्।" (१०।१।६) छान्दोग्योपनिषदि च-"एतद्घोरआंगिरस कृष्णाय देवकीपुत्रायोक्त्वोवाच" (३।१८।६) इत्यादिना श्रीकृष्णावतारस्य च पुष्कलः प्रसङ्गः प्राप्यते। अन्तिमयोर्द्वयोः बुद्धकल्क्यवतारयोर्विषये कथ्यते,यद् बुद्धस्य जन्म ग्रहणे केवलं पञ्चविंशतिशतवर्षाण्येव जातानि,कल्क्यवतारश्चाग्रे कलेरन्ते भविष्यति। अत एतयोर्द्वयोरवतारयोः कृते वैदिकमूलान्वेषणस्यावश्यकतैव नास्ति।

**बुद्धावतारकल्पना**

पुराणेषु बुद्धस्यावतारस्य कल्पनायां कारणं विचारयद्भिर्विद्वद्भिः कथ्यते यद् मौर्यसम्राड् अशोकः कलिङ्गयुद्धे महता भीषणेन नरसंहारेण सन्तप्तो भूत्वा बुद्धधर्मं राजधर्मं स्वीकृत्य देशेषु विदेशेषु चास्य प्रचार-प्रसार-निमित्तमश्रान्तं प्रयासं कृतवान्। परिणामतो निम्नस्तरीया भारतीया जनता, या वैदिकधर्मे श्रद्धाविश्वासौ करोतिस्म सा बौद्धधर्मस्य सरलतया आकृष्टा सती यदा बौद्धधर्मे दीक्षिता भवितुं प्रवृत्ता तदा पुराणैरपि जनतां वैदिकधर्मे पुनर्दीक्षितां कर्तुं सार्वभौमं धार्मिकवातावरणं समुत्पाद्यावतारेषु बुद्धोऽपि गणितः। तदनन्तरं बौद्धधर्मे दीक्षा-प्रवृत्तिं परित्यज्य जनता पुनर्वैदिकधर्माचरणोन्मुखाऽजायत।

कुमारिलभट्टेन स्वकीये श्लोकवार्तिके तन्त्रवार्तिके च बौद्धदार्शनिकसिद्धान्तानां प्रबलं प्रामाणिकं च खण्डनं कृतम्। श्रीशङ्कराचार्येण च स्वशारीरकभाष्ये वेदप्रामाण्यपुरःसरं बौद्धमतं तर्कयुक्तिभ्यां सम्यक् खण्डितम्। आभ्यां द्वाभ्यामाचार्याभ्यां स्वतर्ककर्कशवाणीद्वारा बौद्धधर्मस्य निःसारता प्रतिपादिता। यत्परिणामस्वरूपेण बौद्धधर्मो निज-मूलस्थानाद्भारतान्निष्क्रम्य विदेशेषुआश्रयो गृहीतः। भट्टेन तन्त्रवार्तिके

पुराणानां प्रमाणानि प्रदाय स्पष्टैः शब्दैरुद्घोषितं यद् बौद्धाः कलियुगे धर्मे विप्लवकारिणः सन्ति तेषामधर्मयुक्तं वाक्यं कः श्रोतुं शक्नुयात् ।[1]

यद्यपि पौराणिकानां समक्षे इयमतिमहती समस्याऽसीद् यद् बुद्धस्य वेदबाह्यानां सिद्धान्तानां वैदिकसिद्धान्तैः सह कथंकारमानुकूल्यं स्यात् ? येन बुद्धेन दृढतया वैदिकस्य यज्ञस्य निन्दा कृता, वेदा धूर्तप्रलापाः प्रलपिताः, तथा वेदप्रतिपादितस्येश्वरस्याभावोऽभिमतः । तस्मै वैदिकेषु अवतारेषु कथं स्थानं दीयेत तथापि वेदशास्त्रविश्वासिनीं जनतां विपथात् सुपथे समानेतुं पुराणेषु बद्धोऽपि अवतारमध्ये गणितः । इत्थं प्रायः पुराणेषु बुद्धस्य नाम नवमावतारस्वरूपेण समागतम्, किन्तु महाभारतस्य दशावतारेषु बुद्धस्य निर्देशो नास्ति ।

अनन्तरं क्षेमेन्द्रेण स्वदशावतारचरिते महाकाव्ये बुद्धो नवमोऽवताररूपेण वर्णितः, जयदेवेन च स्वकीये गीतगोविन्दे बुद्धमवतारिणं मत्वा तस्य स्तुतिः कृता ।

बौद्धधर्मः प्रधानतया द्वयोः सम्प्रदाययोः विभक्तोऽस्ति—हीनयानं महायानं च । तत्र हीनयानसम्प्रदाये बुद्धस्य वैयक्तिकं जीवनमेवादर्शोऽभिमतोऽस्ति, यस्यानुसरणं कृत्वा साधकः उन्नतिपथमुपतिष्ठते । महायानसम्प्रदाये च गौतमबुद्धोऽवताररूपेण स्वीकृतोऽस्ति, यदाधारेण तस्य दया-कारुण्यमय्यामूर्तेः निर्माणं भवितुमारब्धम् । इत्थं बुद्धधर्मे बुद्धदेवोऽवताररूपेण गृहीतस्तथा पुराणैरपि अस्य पुष्टिः कृता, परन्तु महाभारतेन दशावतारगणनायां बुद्धाय न स्थानं प्रदत्तम् ।

श्रीमद्भागवतेन तु वेदविरोधिनामसुराणां व्यामोहनाय बुद्धोऽवतारः स्वीकृतः ।[2] विष्णुपुराणेन बुद्धं महामोहरूपेण चित्रयता प्रोक्तं यद् अल्पीयस्येव समये महामोहद्वारा मोहितैरसुरैः वैदिकस्य धर्मस्य वार्ताकरणमपि परित्यक्तम् ।[3] अग्निपुराणे लिखितमस्ति यत् महामोहः शुद्धोदनपुत्रो भूत्वा दैत्यान् वैदिकधर्मत्यागाय वाध्यान् कृतवान् ।[4] अस्यैव सङ्केतो भविष्यपुराणेऽप्यस्ति (४।१२।२६–२९) ।

---

१. स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः ।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥ ≈ त० वा० १।३।७

२. ततः कलौ संप्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ = श्रीम. भा. १।३।२४

३. स्वल्पेनैव हि कालेन महामोहेन तेऽसुराः ।
मोहितास्तत्यजुः सर्वां त्रयी मार्गाश्रिता कलाम् ॥ = वि. पु. ३।१८।२३

४. महामोहस्वरूपोऽसौ शुद्धोदनसुतोऽभवत् ।
मोहयामास दैत्यास्तान् त्याजिता वेदधर्मकम् ॥ ≈ भवि. पु. १६।२

## चतुर्थः परिच्छेदः

### कालपरिमाणविवरणम्

पुराणेषु कालमानस्य विवेचनं महत्या वैज्ञानिकपद्धत्या कृतं वर्तते। कालमानस्य प्रतीकरूपेण काष्ठा-निमेष-कला-मुहूर्त-अहोरात्र-मास-अयन-वर्ष-युग-मन्वन्तर-कल्पानां पारिभाषिकनाम्नां विचारो जातोऽस्ति। कालपरिमाणविवरणं हि प्रायः प्रतिपुराणं प्रचुरमात्रायामुपलभ्यते। तथाहि—

> काष्ठाः पञ्चदशाख्याता निमेषा मुनिसत्तम।
> काष्ठास्त्रिंशत्कला त्रिंशत्कला मौहूर्तिको विधिः॥
> तावत्संख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम्।
> अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः॥
> तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे।
> अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम्॥
> चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे।
> दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम्॥
> प्रोच्यते तत्सहस्रं च ब्रह्मणो दिवसं मुने।
> ब्रह्मणो दिवसे ब्रह्मन्! मनवस्तु चतुर्दश॥
> ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसंचरः। = वि. पु. १।३८-२२

मानवानामक्षिपक्ष्मनिपतने यावान् समयो व्यत्येति तावान् समयो निमेष उच्यते। १५ निमेषाणामेका काष्ठा भवति, ३० काष्ठानामेका कला भवति, ३० कलानामेकं मुहूर्तं भवति, ३० मुहूर्तैरेकमहोरात्रं भवति, ३० अहोरात्रैः द्वौ पक्षौ भवतः, द्वयोः पक्षयोरेको मासो भवति, ६ मासानामेकमयनं भवति, *तद्द्विविधमुत्तरायणं दक्षिणायनं च*। तत्रोत्तरायणं देवानां दिनं कथ्यते, दक्षिणायनं च देवानां रात्रिरुच्यते। एनयोर्द्वयोरयनयोरेकं मानववर्षं भवति, १ मानववर्षं देवानामेकं दिनं भवति यद् दिव्यं दिनं कथ्यते। सत्य-त्रेता-द्वापर-कलिनामानश्चत्वारो युगा भवन्ति। एषां परिमाणं क्रमशश्चतुस्त्रिद्व्येकदिव्यसहस्रवर्षाणि सन्ति। प्रतियुग पूर्वे सन्ध्या, अन्ते सन्ध्यांशश्च भवति। एनयोः परिमाणं च क्रमशश्चतु-

स्त्रिद्वयेकशतवर्षाणि भवन्ति। सन्ध्या-सन्ध्यांशयोर्मध्यवर्ती कालो युगो निगद्यते। एवं दिव्यानां द्वादशसहस्रवर्षाणामेकं चतुर्युगं भवति। सहस्राणां महायुगानां ब्रह्मण एकं दिनं भवति, यत्र १४ मनवो भवन्ति। ब्रह्मणो दिवसावसाने नैमित्तिको प्रलयो भवति, स एव ब्रह्मणो रात्रिरभिधीयते।

तत्तत् पुराणेषु कालनिर्णयानुसारं सत्ययुगस्य १७२८००० वर्षात्मकम्, त्रेतायुगस्य १२९६००० वर्षात्मकम्, द्वापरयुगस्य ८६४००० वर्षात्मकम्, कलियुगस्य च ४३२००० वर्षात्मकं मानं विद्यते। संकलनया चतुर्णां युगानां मान ४३२०००० मानवर्षात्मकं भवति। चतुर्णां युगानां संज्ञा महायुगमुच्यते। किञ्चिद् धकैकसप्तति ७१ महायुगानामेकं मन्वन्तरं भवति। चतुर्दशानां मन्वन्तराणामेकः कल्पः कथ्यते। एकस्मिन् कल्पे ४३२००००००० वर्षाणि भवन्ति। तद्दिग्दर्शनं यथा

| | |
|---|---|
| सत्ययुगमानम् | १७२८००० |
| त्रेतायुगमानम् | १२९६००० |
| द्वापरयुगमानम् | ८६४००० |
| कलियुगमानम् | ४३२००० |
| चतुर्युगमानम् | ४३२०००० |
| महायुगमान वा | ७१ |
| मन्वन्तरमानम् | ३०६७२०००० |
| | १४ |
| चतुर्दशमन्वन्तरमानम् | ४२९४०८०००० |
| सन्ध्या-सन्ध्यांशमानम् | २५९२०००० |
| कल्पमानम् | ४३२०००००० |

मानवीयैः ४३२००००००० वर्षैर्ब्रह्मण एकं दिनं भवति, यत् कल्पः कथ्यते, तथैवास्यैव कल्पस्य तद्रात्रिरपि भवति। दिवानिशं मेलयित्वा ७२० कल्पैर्ब्रह्मण एक दिनं मन्यते। एवं शतवर्षाणि ब्रह्मण आयुरस्ति, यत् परं कथ्यते, तदर्द्धं परार्द्धमुच्यते। अर्थादारम्भतो ब्रह्मणः पञ्चाशद्वर्ष-कालश्च परार्द्धं निगद्यते। शतवर्षकालः परो द्विपरार्द्धो वा कथ्यते।[1]

---

१. निजेन तस्य मानेन आयुः वर्षशतं स्मृतम्।
तत्पराख्यं तदर्द्धं च परार्द्धमभिधीयते॥ —वि० पु० १।३।५

मानववर्षानुसारं ब्रह्मण आयुषो विवरणम्—

| | |
|---|---|
| ब्रह्मण एकं दिनम् | ४३२०००००० |
| ब्रह्मण एका रात्रिः | ४३२०००००० |
| ब्रह्मण एकं रात्रिन्दिनम् | ८६४०००००० |
| ब्रह्मण एको मासः | २५९२००००००० |
| | १२ |
| ब्रह्मण एकं वर्षम् | ३११०४०००००००० |
| | १०० |
| ब्रह्मणः पूर्णमायुः वर्षशतम् | ३११०४०००००००००० |

इदं दृश्यं जगत् कैः कैः तत्त्वैर्निर्मितं विद्यते, तेषां किमस्ति पौर्वापर्यम्, सृष्टेरुत्पत्तिः कदाऽभूत्, प्रलयः कदा भविष्यति, कथं च भविष्यतीत्यादीनां रहस्यात्मकानां प्रश्नानां सन्तोषजनकं वास्तविकमुत्तरमुपलब्धुं पुराणानामेव पारायणं कर्तव्यं भविष्यति।

## पुराणं पञ्चलक्षणम्

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्॥

एतत्पञ्चलक्षणलक्षितं पुराणमभिधीयते। प्रायः सर्वेषु पुराणेषु अस्य लक्षणस्य न्यूनाधिक्यरूपेण समावेशो वर्तते, एषां पञ्चानां विषयाणां मध्ये कस्मिंश्चित्पुराणे कस्यचिदेकस्याधिक्येन वर्णनं विद्यते, कस्यचिच्च संक्षेपतो वर्णनं दृश्यते, कुत्रचिच्च कस्यचनैकस्य विषयस्य सातिशयवर्णनमुपलभ्यते। यथा—(१) विष्णुपुराणे सर्गवर्णनस्य मुख्यत्वं दृश्यते। (२) वायुपुराणे प्रतिसर्गस्य प्रचुरं वर्णनं प्राप्यते। (३) मत्स्यपुराणे वंशवर्णनस्य प्रामुख्य विलोक्यते। (४) मार्कण्डेयपुराणे मन्वन्तरवर्णनस्यैव प्राधान्यं विद्यते। (५)श्रीमद्भागवते तु वंशानुचरितस्यैव प्राधान्यं प्राप्यते। एवं कुत्रचित् पुराणे एकस्य विषयस्याधिक्यमन्येषां च न्यूनत्वं निभाल्यते। तस्मात्सर्वेषां पुराणानां यथावदनुशीलनं विना पुराणानां वास्तविकमाध्यात्मिकंरहस्यं नावगन्तुं शक्यते, न वा यथार्थज्ञानपरिपाटी परिचेतुं पार्यते।

## ( १ ) सर्गः

पुराणलक्षणानुसारं पुराणेषु पञ्चानां सर्ग-प्रतिसर्ग-वंश-मन्वतर-वंशानुचरितानां मुख्यतया वर्णनं विद्यते। तत्र कः सर्ग इति जिज्ञासायां साम्यावस्थापन्नस्य त्रिगुणात्मकस्य प्रधानतत्त्वस्य गुणेषु क्षोभान्महत्तत्त्वं ततोऽहंकारो जायते, तत एकादशेन्द्रिय-पञ्चतन्मात्रा-पञ्चमहाभूतानां सम्भवः (उत्पत्तिः) सर्गो निगद्यते।[1]

श्रीमद्भागवते तृतीयस्कन्धस्य दशमेऽध्याये मुख्यरूपेण त्रिविधः सर्गः प्रोक्तोऽस्ति-(१) प्राकृतसर्गः (२) वैकृतसर्गः (३) उभयात्मकसर्गश्च। तत्र प्रकृत्या स्वभावेनोत्पन्नः सर्गः प्राकृतसर्गः प्रोच्यते। विकृत्या समष्टिस्वरूपात्मकब्रह्मणा उत्पद्यमानः सर्गो वैकृतसर्गः कथ्यते। यश्च द्वाभ्यां प्रकृति-विकृतिभ्यामुत्पद्यते स उभयात्मकः सर्गो निगद्यते। तत्र प्राकृतः सर्गः षड्विधो भवति, वैकृतः सर्गः त्रिविधो जायते, उभयात्मकश्च सर्गः एकविध एव भवति।। एवं सङ्कलनया सर्गो दशप्रकारको भवति। तत्र-

(१) प्रथमः सर्गो महत्तत्त्वस्यास्ति यः सृष्ट्यादौ भगवतः प्रेरणया प्रकृतिस्थेषु सत्वादिगुणेषु क्षोभाद् विषमतया उत्पद्यते—आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः = श्रीमद्भागवते ३।१०।१४

(२) द्वितीयः सर्गः अहङ्कारस्यास्ति, यतः पृथिव्यादीनां पञ्चमहाभूतानामिन्द्रियाणाञ्चोत्पत्तिर्भवति-द्वितीयस्त्वहमो यत्र द्रव्य-ज्ञान-क्रियोदयः = श्रीमद्भागवते ३।१०।१५

(३) तृतीयः सर्गो भूतसर्गोऽस्ति, यत्र पञ्चमहाभूतोत्पादकः सूक्ष्मभूतः तन्मात्रासर्गः समागच्छति-भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् = ।।१५।।

(४) चतुर्थः सर्गः, इन्द्रियाणामस्ति, यानि ज्ञानकर्मसाधकानि सन्ति-चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः = श्रीमद्भागवते ३।१०।१६

(५) पञ्चमः सर्गः सात्त्विकाहङ्कारादुत्पन्नानामिन्द्रियाधिष्ठातॄणां देवानामस्ति। मनोऽपि एतदन्तर्गतो जायते—वैकारिको देवसर्गः पञ्चमो यन्मयं मनः = श्रीमद्भागवते ३।१०।१६

---

१. अव्याकृतगुणक्षोभान् महतस्त्रिवृतोऽहमः।
भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते ।। = श्री० भा० १२।७।११

(६) षष्ठः सर्गः पञ्चपर्वाविद्याया अस्ति, यत्र तामिस्र-अन्धतामिस्र-तमो-मोह-महामोहाख्या पञ्च ग्रन्थयः सन्ति, या जीवानां बुद्धेरावरण-विक्षेप-कारिकाः सन्ति। इमे षट्प्रकारकाः सर्गाः प्राकृतसर्गेऽन्तर्भवन्ति—

> षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो।
> षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥=श्री० भा० ३।१०।१७

(७) सप्तमः सर्गः षट्प्रकारकाणां स्थावराणां वनस्पति-ओषधि-लता-त्वक्सार-विरुध् द्रुमाणामस्ति। एषां स्थावराणां सञ्चारो मूलत उपरि भवति। एषु ज्ञानशक्तिः न प्रकटिता भवति। एतेऽभ्यन्तरे एव स्पर्शस्यानुभव कुर्वन्ति तथा एषु कश्चन विशेषगुणः तिष्ठत्येव—

> सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥=श्री० भा० ३ १०।१८

(८) अष्टमः सर्गः तिर्यग्योनीनां (पशु-पक्षि-कीट-पतङ्गानाम्) अस्ति, ये अष्टाविंशतिप्रकारका भवन्ति—तिरश्चामष्टमः सर्गः सोऽष्टाविंश-विधो मतः ॥=श्री० भा० ३।१०।२०

(९) नवमः सर्गः एकविध एव मनुष्याणामस्ति, येषामाहारप्रवाह उपरिष्टादधः (मुखत उदरे) भवति। मनुष्या रजोगुणप्रधानाः, कर्मपरायणा विषयेषु सुखलिप्सवो भवन्ति—अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम्। रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ॥=श्री० भा० ३।१० ।२५

एवं त्रयः=सप्तमस्थावरसर्ग-अष्टमपशुपक्ष्यादिसर्ग-नवम मनुष्यसर्गा वैकृतसर्गेऽन्तर्भवन्ति—वैकृतास्त्रय एवैते=श्री० भा० ३।१०।२६

(१०) एतदतिरिक्ता चतुर्णां सनक-सनन्दन-सनातन-सनत्कुमाराणां सर्गः दशमो कौमारसर्गनाम्ना प्रसिद्धोऽस्ति, यः प्राकृतवैकृतोभयात्मकोऽस्ति—

> वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः।=श्री० भा० ३।१०।२६
> दशैते विदुराख्याता सर्गास्ते विश्वसृक्कृताः ॥=श्री ० भा० ३।१०।२८

*किन्तु अन्येषु पुराणेषु एतद्विपरीताः सर्गस्य नव भेदा उक्ताः सन्ति।* तत्र त्रयः प्राकृताः सर्गाः, पञ्च वैकृताः सर्गाः, एकश्च प्राकृत-वैकृतोभयात्मकः सर्गः। एषु प्राकृतसर्गोऽबुद्धिपूर्वको भवति, यतो हि एष सर्गः स्वाभाविकरूपेण भवति। तदर्थं ब्रह्मणः स्वबुद्धेः व्यापारस्यावश्यकता न भवति, किन्तु वैकृतसर्गो बुद्धिपूर्वको जायते। अतोऽत्र ब्रह्मणा विचारपूर्वकं स्वबुद्धेरुपयोगः कर्तव्यो भवति—

पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।।
प्राकृतास्तु त्रयः सर्गाः कृतास्तेऽबुद्धिपूर्वकाः ।
बुद्धिपूर्वं प्रवर्तन्ते षट् सर्गा ब्रह्मणस्तु वै ।।

= वायुपुराणे ६।६५-६७; विष्णुपुराणे च १।५।२४

शिवपुराणमपि एतदेव समर्थयति—

प्राकृताश्च त्रयः पूर्वे सर्गास्तेऽबुद्धिपूर्वकाः ।
बुद्धिपूर्वं प्रवर्तन्ते मुख्याद्याः पञ्च वैकृताः ।। = वा० सं० १२।८

प्राकृतसर्गस्य त्रयो भेदाः—

(१) ब्राह्मसर्गः—सांख्यदर्शनानुसारं महत्तत्त्वमेव प्रकृतिपुरुषयोः संयोगस्य प्रथमः परिणामोऽस्ति । ब्रह्मशब्दो हि गीतानुसारं बुद्धितत्त्वस्यास्ति बोधकः । अतो बुद्धिसर्ग एवात्र ब्राह्मसर्गः प्रकीर्तितः ।

(२) भूतसर्गः–पञ्चतन्मात्राणां सृष्टिः भूतसर्गः प्रोच्यते, यतो हि पञ्चतन्मात्रा एव पृथ्वी-जल-तेजः-वायु-आकाशानां पञ्च महाभूतानामतिसूक्ष्मावस्थाः सन्ति ।

(३) वैकारिकसर्गः—पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनश्चेत्येकादशेन्द्रियाणां सृष्टिः वैकारिकसृष्टिरिन्द्रियसृष्टिर्वा कथ्यते ।

वैकृतसर्गश्च पञ्चप्रकारको भवति—

(१) मुख्यसर्गः–ब्रह्मदेवद्वारा सृष्टिरचनायाः चिन्तने क्रियमाणे प्रथमं पञ्चपर्वाऽविद्यारूपेण तमोमय्या सृष्टेराविर्भावो भवति । तदनन्तर वाह्याभ्यन्तरज्ञानशून्यानां जडात्मकानां स्थावराणां सर्गो भवति । अयं सर्गो मुख्यसर्गः, अतः उच्यते यतः पृथिव्यां चिरस्थायितादृष्ट्या स्थावराणां प्रामुख्यमस्ति । मुख्या वै स्थावराः स्मृताः = वि० पु० १।५।२१

(२) तिर्यक्सर्गः–मुख्यसर्गं पुरुषार्थस्यासाधकं मत्वा ब्रह्मणा पुनर्ध्यानं कृतं तदा तिर्यग्योनिजीवानामुत्पत्तिर्जाता । अस्या योने र्जीवा वायुवत् तिर्यग्गत्या चलन्ति । अत एते तिर्यञ्च उच्यन्ते । अत्र पशूनां पक्षिणां च समावेशोऽस्ति ।

(३) देवसर्गः–तिर्यग्योनिजीवैरपि न ब्रह्मणः प्रसन्नता जाता यतस्तस्य प्रसन्नतायाः कारणं सा सृष्टि विद्यते, या परमपुरुषार्थस्य ( मोक्षस्य ) साधिका स्यात् । तदा तेन देवानां सृष्टिः कृता । अयमूर्ध्वलोकनिवासी सात्त्विकवर्गोऽस्ति, यो विषयसुखप्रेमा वाह्याभ्यन्तरज्ञानसम्पन्नश्चास्ति ।

(४) मानवसर्गः-देवसर्गादपि ब्रह्मणस्तावत्सन्तोषो न जातो यतो हि अयं वर्गः भोगविलासासक्तत्वात् पुरुपार्थसाधको न जातः। अतः सत्य-संकल्पेन ब्रह्मणा पुनः पुरुपार्थसाधकोत्तमसर्गार्थं चिन्तयित्वा एकस्याभि-नवप्रकारकस्य प्राणिवर्गस्य सर्जनं कृतम्। अस्य वर्गस्य प्राणिनः पृथिव्यां तिष्ठन्ति। अतस्तेऽर्वाक्स्रोतस उच्यन्ते। एपु सत्त्वरजस्तमसां त्रयाणां सत्ता वर्तते। तमोगुणस्योद्रेकादिमे दुःखमनुभवन्ति, रजोगुणाधिक्याद् यस्मिन् कस्मिन् कार्ये संलग्नास्तिष्ठन्ति। तथा सत्त्वगुणाविर्भावाद् बाह्याभ्यन्तरज्ञानसम्पन्नाः सन्तः साधकाः भवन्ति।

(५) अनुग्रहसर्गः-प्रकृतेरनुग्रहेणोत्पन्नत्वादयमनुग्रहसर्गः प्रोच्यते। विष्णुपुराणे एनं सात्विकतामसं कथयित्वा केवलं सङ्केतमात्रं कृतमस्ति, किन्तु वायु-मार्कण्डेयपुराणानुसारमयमनुग्रहसर्गः चतुर्विधो भवति विपर्यय सिद्धि-शान्ति-तुष्टिभेदात्। तत्र स्थावरेपु विपर्यासः, तिर्यग्योनौ शक्तिः, मानुषेपु सिद्धिर्देवेपु च तुष्टिर्विराजते—

> पञ्चमोऽनुग्रहः सर्गश्चतुर्धा स व्यवस्थितः।
> विपर्ययेन शक्त्या च तुष्ट्या सिद्धया तथैव च ॥=मा० पु० ४८।२८
> स्थावरेषु विपर्यासस्तिर्यग्योनिषु शक्तिता।
> सिद्ध्यात्मानो मनुष्यास्तु तुष्टिर्देवेषु कृत्स्नशः ॥=वा० पु० ६।६३

## प्राकृत-वैकृतः (उभयात्मकः) सर्ग एकप्रकारक एव भवति —

(१) कौमारसर्गः—अयं सर्गः प्राकृत-वैकृतोभयात्मकोऽभिमतोऽस्ति। अस्मिन् सर्गे सनकादीनां चतुर्णां भ्रातृणां सङ्केतोऽस्ति। कुमाराणां नाम-करणकारणं निर्दिशता वायुपुराणेन प्रोक्तमस्ति यद् एते चत्वारो भ्रातरः सृष्ट्यादौ यथोत्पन्नास्तथैवाद्यापि सन्तीत्यत एते कुमारा उच्यन्ते—

> यथोत्पन्नास्तथैवेह कुमार इति चोच्यते।
> तस्मात्सनत्कुमारोऽयमिति नामास्य कीर्तितम् ॥=वा० पु० ६।१०६

कौमारसर्गस्योभयात्मकत्वे श्रीमद्भागवतस्य टीकाकाराणां भिन्नं-भिन्नं मतं विलोक्यते। विश्वनाथचक्रवर्तिनां कथनमस्ति यद् अन्य-व्यक्तीनां सृष्टिः ब्रह्मणो ध्यानपूतेन मनसा जाताऽस्ति, किन्तु कुमाराणां सृष्टिः भगवद्ध्यानजन्या भगवज्जन्या चास्ति। अतस्ते प्राकृत-वैकृतो-भयात्मका उक्ताः सन्ति। वल्लभाचार्येणात्मनः सुबोधिन्यां कुमारान् देवान् मानुपांश्च मत्वा तेषामुभयात्मकत्वं समर्थितमस्ति। तथा निम्बार्क-

मतानुयायिनः शुकदेवाचार्यस्य मतमस्ति यत् कुमारा मनुष्यकोटौ न मन्तुं शक्यन्ते यतस्ते ज्ञान-भक्ति सम्प्रदायस्य सन्ति प्रवर्तकाः। पुराणेषु एते ब्रह्मणो मानसपुत्ररूपेण वर्णिताः सन्ति। अत एषां जन्म प्रथममेकवारं ब्रह्मणो जातं तथा प्रतिदिनं प्रादुर्भावादिमे चिरस्थायिषु अन्यतमाश्च गणिताः सन्ति। अत एषां द्विविधं रूपमङ्गीक्रियते प्राकृतं वैकृतञ्च।

सृष्टिरचनायां भगवान् केवलं निमित्तमात्रमस्ति यतो, हि तत्र सृज्यमानपदार्थानां शक्तय एव प्रधानं कारणमस्ति, ईश्वरस्तु केवलं रूपनिर्माता प्रतिनिधिमात्रमस्ति। श्रीधरस्वामिनः कथनमस्ति यत् यथा तृणादीनां बीजे विद्यमानमङ्कुरादि मेघस्य सान्निध्ये स्वशक्त्यैव परिणतं भवति तथैव ब्रह्मा सृज्यपदार्थानां सृष्टिक्रियायां पर्जन्यवत् साधारण-कारणमात्रमस्ति। अतः श्रीधरस्वामिमतेनेश्वरस्य केवलं सान्निध्य-मात्रमेवापेक्षितमस्ति।

## प्रतिसर्गः (२)

प्रायः प्रत्येकपुराणेषु प्रतिसर्गस्य विवेचनं विद्यते। पुराणद्वारा प्रतिसर्गस्य स्थानेऽनेके पर्यायवाचिनः शब्दा व्यवहृताः सन्तिः। यथा-लय, प्रलय अन्तरप्रलयः प्रतिसञ्चर, प्रतिसक्रम, प्रत्याहार, प्रसञ्जमः उपसंहृति, अन्तराला, सम्प्लवः, आभूतसम्प्लवः, उदाप्लुतः, निरोधः, संस्था, एकार्णवावस्था तत्त्वप्रतिसयमश्चः।

पुराणलक्षणे सन्निविष्टत्वात् प्राय सर्वेषु पुराणेषु प्रतिसर्गस्य (प्रलयस्य) वर्णनमस्त्येव, किन्तु ब्रह्मपुराणे (२३१-२३३ अध्यायेषु), विष्णुपुराणे (६।३-४ अध्याययोः), वायुपुराणे (१००।११८-२४३ श्लोकेषु) श्रीमद्भागवते (१२।४।४-३८ श्लोकेषु) मार्कण्डेयपुराणे (४६।२-४६ श्लोकेषु) कूर्मपुराणस्योत्तरार्द्धे (४५।५-६१ श्लोकेषु), गरुडपुराणे (२१५।१६ अध्याययोः) तथा ब्रह्माण्डपुराणस्योपसंहारपादे तृतीयेऽध्याये विशेषरूपेण प्रतिसर्गस्य वर्णनं विद्यते।

यथा वर्षर्तौ पृथिव्यामज्ञातरूपेण स्थितानि बीजानि बहुविधलता-गुल्मतृणादिरूपेण स्वयं प्रादुर्भवन्ति, तथैव वर्तमानसृष्टेः पूर्वसृष्टौ समुत्पन्नानां जीवानामवशिष्टवासनामयैः संस्कारैः पुनः सृष्टिरचना समये अनेके पदार्था तद्भोक्तारो जीवाश्च समुत्पद्यन्ते।

य उत्पद्यते तस्याऽवश्यमन्तो भवतीति नियमानुसारं सृष्टेः अनन्तरं जगतः प्रलयावस्थाऽपि समागच्छति। तथा च वर्तमानायाः सृष्टेः कदा

प्रलयो भविष्यतीति प्रश्नस्योत्तरं पुराणेषु महत्या वैज्ञानिकपद्धत्या प्रदत्तमस्ति।

**प्रलयभेदाः—**

पुराणानुसारं प्रलयस्य चत्वारो भेदा भवन्ति (१) नैमित्तिकप्रलयः (२) प्राकृतिकप्रलयः (३) नित्यप्रलयः (४) आत्यन्तिकप्रलयश्च—

> नित्यो नैमित्तिकश्चैव प्राकृतोऽत्यन्तिकस्तथा।
> चतुर्धायं पुराणेषु प्रोच्यते प्रतिसञ्चरः॥
> नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विज।
> नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः॥=वि० पु० ६।३।२

श्रीमद्भागवते च—

> नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लय.।
> आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी॥=श्री० भा० १२।४।२

## (१) नैमित्तिकः प्रलयः—

ब्रह्मणो दिवसावसाने तावत्कालपर्यन्तं नैमित्तिक. प्रलयो भवति। अयमेव ब्रह्मणो रात्रिरभिधीयते, यत्र चतुर्दश मनवो भवन्ति[1]। तत्र निद्रालु ब्रह्मा समस्तं विश्वं स्वोदरे संहृत्य स्वकारणस्वरूपे शेषशायिनि नारायणे लीनः शेषशय्यायां शेते। ब्रह्मण एतत् शयन निमित्तीकृत्य जायमानोऽय प्रलयो नैमित्तिकः प्रलयः प्रोच्यते—

> एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्।
> शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः॥=श्री० भा० १२।४।४
> एष नैमित्तिको नाम मैत्रेय! प्रतिसञ्चरः।
> निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः॥=वि० पु० ६।४।७

नैमित्तिकप्रलयो हि द्विविधो जायते—एक आंशिको द्वितीयश्च पूर्णो भवति। तत्र एकस्मिन् मन्वन्तरे समाप्ते भगवदिच्छया मन्वन्तरमध्ये वा आंशिकः प्रलयो भवति, किन्तु ब्राह्मणो दिनावसाने तद्रात्रौ पूर्णे प्रलये समस्तायां पृथिव्यां जलमग्नायाम् - उपरितना भूर्भुवः स्वरिति त्रयो लोका विच्छिन्ना भवन्ति। तेभ्य ऊर्ध्वस्थाश्चत्वारो महर्जनतपःसत्यलोकाः स्वस्थाने तथैव तिष्ठन्ति। महर्लोकनिवासिनो महर्षयः सिद्धाश्च तापसन्तप्ताः सन्त. ऊपरि जनादिलोकेषु गत्वा ध्यानपरायणास्तिष्ठन्ति। ब्रह्मणो जागरावस्थायां तत्प्राणशक्तिप्रेरणया ब्रह्माण्डस्य चक्र

---

१. सकृन्तो यत्र मनवश्चतुर्दश विशाम्पते।
तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता॥=श्री० भा० १२।४।२

निरन्तरं प्रचलति, किन्तु ब्रह्मणो निद्रावस्थायां यथा निद्रायां सर्वाणी-न्द्रियाणि निश्चेष्टानि भवन्ति तथैव सकले ब्रह्माण्डे सर्वा च क्रिया अवरुद्धा भवन्ति, त्रिलोकी च जलमग्ना जायते।

## (२) प्राकृतिकः प्रलयः

ब्रह्मणो द्विपरार्द्धस्यायुषः समाप्तौ सप्त प्रकृतयः (महतत्त्वम्, अहङ्कारः पञ्चतन्मात्राश्च) स्वकारणेऽव्यक्ते प्रकृतौ संप्रलीयन्ते। अतोऽयं प्राकृतिकः प्रलयः कथ्यते—

> द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः।
> तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै॥
> एष प्राकृतिको राजन्! प्रलयो यत्र लीयते।
> अण्डकोशस्तु संघातो विघात उपसादिते॥ = श्री० भा० १२।४।४६
> महदाद्यं विशेषान्तं यदा संयाति संक्षयम्।
> प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः॥
> प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम्॥ = कू० पु० उ० ४५।८

प्राकृतिके प्रलये समुपस्थिते विश्वस्मिन् अतिभीषणस्य संहारस्य दृश्यमुपतिष्ठते। तत्र प्रथम शतवर्षपर्यन्तं वृष्टेरभावादन्नस्यानुपलब्धौ निरन्ने ह्यन्योन्यं भक्षमाणानां क्षुत्क्षामकण्ठानां परस्परं विलोकमानाना मृत्युग्रासभूतानां प्रजाना जीवनलीला समाप्तिमेति। ऊपरि देदीप्यमानै प्रचण्डमार्तण्डकिरणै पातालस्य संकर्षणमुखोत्थितस्याग्नेरतितीव्रतरया ज्वालया स्थावरजङ्गमात्मकं समस्तं जगद् भस्मसात् जायते। ततः शतवर्षाणि यावद् रोमाञ्चकारी प्रचण्ड पवनः प्रवहन् आकाश धूलि-भिरापूरयति। तदनु असङ्ख्याता विविधवर्णा ऊल्वणा मेघा घोरं गर्जन्तः मूशलधाराभि वृष्टिभिः शतवर्षाणि वर्षन्ते, येनाऽखिलं भुवनं एकार्णवं जायते। उत्पत्तिसमयेऽनुलोमक्रमेण यत्तत्त्वं यत उत्पद्यते तत्तत्व प्रलय-समये विलोमक्रमेण तत्रैव प्रविलीयते। यथा गन्धयुक्ता पृथ्वी जले, जलं तेजसि, रूपसहितं तेजो वायौ, स्पर्शसहितो वायुराकाशे, सशब्द आकाशोऽहङ्कारे स महत्तत्वे तच्च प्रकृतौ प्रलीयते। प्राकृतिः तत्प्रेरकः पुरुषश्चेत्युभौ निर्गुणे निष्क्रिये परमात्मनि प्रलीयेते—

> प्रकृतिर्यामयाऽख्याता व्यक्ताव्यक्तस्वरूपिणी।
> पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि॥ = वि० पु० ६।४।३६

आद्यन्तशून्य नित्य परमात्मा सर्वेषाकारण विद्यते। अतो न तस्य-कश्चन लयो भवति, किन्तु प्रकृत्ति-पुरुषयो सत्त्वादयः शक्तयः कालप्रभावाद् विवशीभूता क्षीणा सत्य. स्वकारणे परमात्मनि प्रविलीयन्ते एव। एव प्राकृतप्रलयदशाया केवल परमात्मतत्त्वमात्रमेवावशिष्यते—

लय प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा।
शक्तय सम्प्रलीयन्ते विवशा. कालविद्रुता॥=श्री० भा० १२।४।२२

## (३) आत्यन्तिकः प्रलयः

यथा नैमित्तिकप्रलय. कल्पावसाने (ब्रह्मणो दिनस्यान्ते) भवति। तथैव प्राकृतिक प्रलयोऽपि ब्राह्मण आयुषः शेषे (द्विपरार्द्धे) सम्पद्यते[1], किन्तु आत्यन्तिकस्य प्रलयस्य कश्चन कालो निश्चितो नास्ति। स तत्कालेऽपि सम्भवितुमर्हति, कोटिवर्षपर्यन्तमपि न सम्भवति, अपि तु अस्य साधनसामग्री यदैवोपतिष्ठते तदैवाय जायते। वस्तुतः आत्यन्तिक-प्रलयः आत्यन्तिकदु खनिवृत्तेरेव नामान्तरमस्ति। त्रिविधदु खात्यन्त-निवृत्तिस्तु लौकिकानुश्रविकोपायैरेव सम्भवति। आत्यन्तिकलयो नाम सर्वस्मिन्नज्ञानतत्कार्यनाशात्मको मोक्ष। तच्चाध्यात्मिकादित्रय दु ख-सहेमिति ज्ञात्वा शुद्धो विवेकी उत्पन्नवैराग्य सन् गुरूपदेशादिनोत्पन्न-ज्ञान प्राप्नोती श्रीधरस्वामी (वि०पु० ६।५।१ श्रीधरीटीका) आत्यन्तिक-दुःखनिवृत्तिरूपो मोक्ष इति निर्गलितोऽर्थ। तथा च आत्मानात्मविवेक-द्वारा अज्ञानापनयनपूर्वक मायामये अहङ्कारवन्धने छिन्ने आत्म-स्वरूपस्य साक्षात्कारे सति ज्ञानोदये जाते भवति आत्यन्तिक प्रलयः[2]। अर्थादात्यन्तिकप्रलयदशाया साधको ज्ञानरूपिणा खड्गेन आत्मान आवरक बन्धनकारिण मिथ्याभूतमहङ्कार विच्छिद्य स्वरूपे स्थितो भगवत्तत्वमवोतुमवति।

## [४] नित्य.प्रलयः–

– पौराणिकसृष्टिप्रलयानुसार सृष्टिप्रलयौ सर्वदा भवतः। यथा प्रतीक्षण परिणामिनो हि भावाः ऋते चितशक्ते, इति दार्शनिकसिद्धान्ता-

---

१. ब्राह्मोनैमित्तिकस्तेषा कल्पान्ते प्रति सञ्चर।
आत्यन्तिकश्च मो क्षाख्य प्राकृतो द्विपरार्द्धक॥=वि० पु० ६।४।२

२. यदैवमेतेन विवेक-हेतिना मायामयाहङ्करणात्म-बन्धनम्।
छित्त्वाऽच्युतात्मानुभवो ऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग। सम्प्लवम्॥
= श्री० भा०१२।४।३४

नुसार सांसारिकाः सर्वे पदार्था नदीप्रवाहवद् दीपशिखावच्च प्रतिक्षणं परिवर्तन्ते एव ब्रह्मणआरभ्य स्तम्बपर्यन्तं सर्वे पदार्थाः प्राणिनश्च सर्वदा उत्पद्यन्ते विनश्यन्ति परिणमन्ते च[1]। अनन्ता च कालशक्तिरव, यया-प्रतीक्षण परिवर्तनं भवति, परन्तु तद् इदृक् सूक्ष्म दुर्बोध च वर्तते, यत् मानवबुद्ध्या स्पष्टतः ज्ञातुं न शक्यते। अतः सर्वै नानुभूयते। एवं च *प्रतीक्षमनूभूयमानोऽय विनाशः प्रतिदिनं निद्रासमये समस्तभावपदार्थस्या-*भावानुभवो वा नित्यप्रलयनाम्ना व्यवह्रियते। तथाहि कूर्मपुराणम्[2]।

विष्णुपुराणानुसारमपि प्रतिदिन निन्द्रासमये यदा समस्ता सृष्टि-रज्ञाने विलीना भवति तदा कस्यापि विशेषस्य भावस्यानुभवो न भवति। एष एव नित्यः प्रलयो निगद्यते–नित्यः सदैव भूतानां यो विनाशोदिवानिशम्। तथाच चतुर्णां प्रलयानां विष्णुपुराणे एव निर्देशः कृतो विद्यते—

> ब्राह्मो नैमित्तिकस्तत्र शेतेऽयं जगतीपतिः।
> प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम्॥
> ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि।
> नित्यः सदैव भूताना यो विनाशो दिवानिशम्॥ = १।७।३६ ४०

प्रायः सर्वेषु पुराणेषु प्रलयस्य वर्णनं विद्यते। तत्र स्थूलदृष्ट्या प्रतीयते किञ्चिदन्तरमपि, परन्तु सूक्ष्मदृष्ट्या विचार्यमणे सर्वेषामेकता सिध्यति। दर्शनशास्त्रेष्वपि प्रलयस्यास्तित्व स्वीकृतमस्ति। प्राचीनैः *नैयायिकैः द्विविधः प्रलयोऽङ्गीकृतोऽस्ति-खण्डप्रलयो महाप्रलयश्च।* नव्यनैयायिकैस्तु केवलं खण्डप्रलयस्यैवास्तित्वं स्वीकृतं विद्यते। तन्मते जनभावाधिकरणस्याभावो न सम्भवति। सांख्यदृष्ट्याऽपि प्रलयो भवति। सांख्यवादिनः प्रकृतौ द्विविधं परिणामं मन्यन्ते-एकः स्वरूपपरिणामो द्वितीयश्च विरूपपरिणामः। सत्त्वरजस्तमांसि एत त्रयो गुणा यदा स्वस्वरूपेऽवस्थिता भवन्ति तदा स्वरूपपरिणामः प्रलयो भवति तथा ते यदा विकृता भवन्ति तदा तेषु यद् वैषम्यमुपजायते तद् विरूपः परि-णामः कथ्यते। विरूपपरिणामादेव सृष्टि र्जायते। एषां मतवादानामनु-सार यद्यपि सृष्टि-प्रलययोः समयस्य सम्यक् निर्णयं कर्तुं न शक्यते

---

१. नित्यदा सर्वभूताना ब्रह्मादीना परन्तप।
उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते॥ = श्री० भा० १२।५।३५

२. योऽयं संदृश्यते नित्यं लोके भूतक्षयस्त्विह।
*नित्यः सङ्कीर्त्यते नाम मुनिभि प्रतिसञ्चरः॥* उत्तरार्द्ध ४५।६

तथापि एते प्रलयस्यास्तित्वं तु स्वीकुर्वन्त्येव। एभिः केवलं भौतिकदृष्ट्या जगतः सृष्टिप्रलययोः विचारः कृतः नाध्यात्मिकदृष्ट्या। अतः प्रकृतेः परिणामस्याधारेण विचारशीलैः वैज्ञानिकैः दार्शनिकैश्च प्रलयज्ञानस्यावगतावपि प्रलयः कदा कथं च भविष्यतीति न सम्यग्ज्ञायते, किन्तु पौराणिकैः योगदृष्टिबलेन प्रलयः सम्यग् ज्ञायते। अत एव ते तेषां निश्चितस्य समयस्य निर्देशं कुर्वन्ति। ब्रह्माण्डस्यायुषो विषये पुराणेषु यथा वैज्ञानिको गभीरो विचारः कृतोऽस्ति न तथान्यत्र कुत्रापि।

एषां विविधरूपाणां प्रलयानां चिन्तनेन विश्वस्य नानानामरूपाणामभावस्य ज्ञानं जायते, पुनर्भावाभावयोराश्रयस्य परमात्मनश्च सम्यगुपलब्धिः भवितुमर्हति।

वस्तुतो नित्यनिरञ्जनस्य परमेश्वरस्य नास्ति दिनं, न वा रात्रिः न च वर्षपरिमाणो भवितुमर्हति, नाप्यायुषः क्षयः सम्भवति, अथाप्यौपचारिकरूपेण तस्य रात्रिंदिनस्य वर्षस्यायुषश्च कल्पनया मनोविनोदः क्रियते विद्वद्भिः तथाहि—

> द्विपरार्द्धात्मिकः कालः कथितो यो मया तव।
> तदहस्तस्य मैत्रेय विष्णोरीशस्य कथ्यते॥
> नैवाहस्तस्य न निशा नित्यस्य परमात्मनः।
> उपचारस्तथाप्येष तस्येशस्य द्विजोच्यते॥ = वि०पु० ६।४।४८।६

## (३) वंशः

ब्रह्मणः सकाशादुत्पन्नानां नृपतीनाम् ऋषीणाञ्च भूत-भविष्य-वर्तमान-कुलपरम्परा वंशः कथ्यते। तथाचोक्तं श्रीमद्भागवते—

> राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः। = १२।७।१६

पुराणानि हि हिन्दूजातेरितिहासस्य मूलस्रोतांसि सन्ति। यद्यपि रामायणे महाभारते च प्रधानतया इतिहासस्यैव वर्णनं विद्यते, तथापि पुराणेष्वपीतिहासस्य विवेचनं सर्वोपकारकमतिसुगमतया कृतमस्तीति बहवः समालोचकाः सोल्लासं समर्थयन्ति। हिन्दूजातिरतिप्राचीनतमाऽस्ति, सृष्टिकालादिदानीं यावदियं स्वस्वरूपं सम्यक् संरक्षन्ती तथैव तिष्ठति। बह्वाक्रमणेषु जातेष्वपि अस्या मूलं सुरक्षितमस्ति। यत्रान्यासां जातीनां वंशस्येतिहासो न सन्तोषजनकः उपलभ्यते, तत्र हिन्दूजातेरितिहासस्य वर्णनमादिकालादेव व्यवस्थितं मिलति। हिन्दूजातौ सूर्यवंश-चन्द्रवंश-भृगुवंश-वसिष्ठवंश-गौतमवंश-काश्यपवंशादयोऽनेके वंशाः वर्तन्ते।

सृष्टेरारम्भत एवैतेषां वास्तविकी सुव्यवस्थिता वंशपरम्परा पुराणेष्वेव विद्यते। यदि पुराणानि नाभविष्यस्तदा एवं क्रमबद्धवंशपरम्परा-सम्पन्न इतिहासो नाप्राप्स्यत्, हिन्दूजातेः प्राचीनतम च गौरवमनाया-सेनानंक्ष्यत्। हिन्दूजातेः पुनरुत्थानम्, स्ववशजाना कथायाः श्रवणेनैव भवितुमर्हति, नान्यथा। अतो हिन्दूजातेः वास्तविकस्येतिहासस्य ज्ञानाय, गौरवाय, समुन्नतये च पुराणानि अत्यादरणीयानि सन्ति।

शङ्का—कियन्त. समालोचका. कथयन्ति यत् पुराणाना वंशावली परम्पराविरुद्धा विद्यते, यतो हि एकस्मिन् पुराणे मनुमारभ्य रामपर्यन्तं गणनाया यादृशो वशक्रमो विद्यते स एवान्यास्मिन् पुराणे तद्विपरीत उपलभ्यते। अतः परम्पराविरुद्धत्वात् पुराणोक्ता वंशावली अप्रामाणिकी अस्ति। तस्या विश्वासो न विधेयः।

समीक्षा—सृष्टिकालाद् आरभ्य प्रलयपर्यन्त क्रमबद्धं वशवर्णनं सुगम कार्यं नास्ति। यदि एकैक कृत्वा वर्णयेत् तदा कार्यमिद सम्पन्नं न स्यात्। अतः पुराणेषु वशावली कुत्रचित् क्रमशः लिखिताऽस्ति, क्वचन च साधारणान् पुरुषानगणयित्वा प्रमुखाणामेव पुरुषाणामुल्लेखो विद्यते। कुत्रापि तु तेषामेव महापुरुषाणामुल्लेखोऽस्ति, येषां धार्मिकेण जगता महत्त्वशालिना च केनचिद् कार्येण सह सम्बन्धोऽस्ति। अतः पुराणोक्ता वशपरम्परा सर्वत्र पितृपुत्रक्रमानुसारमेवेति न मन्तव्या, किन्तु कुत्रचित् अमुकस्य पुत्रः क्वचन च अमुकस्य वशजः अमुक पुरुषो जात, इत्येव विरोधाभासस्य परिहार कर्तव्य.।

## [४] मन्वन्तरम्

मन्वन्तरं नाम दैवराज्ये नानापरिवर्तनकारकः कालविशेषः। श्रीमद्भागवते मनोः मनुपुत्राणाम्, देवानामिन्द्रस्य, ऋषीणाम्, अंशा-वताराणाञ्च घटनाया उल्लेख इति षड्विध मन्वन्तर प्रोक्तमस्ति—

> मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वर.।
> ऋषयोऽशावतारश्च हरेः षड्विधमुच्यते॥ = १२।७।१५

यदि मन्वन्तरज्ञानं न स्यात्तर्हि हिन्दूनामितिहासे महती अव्यवस्था समुपतिष्ठेत। स्वायम्भुवमनोः समये के ऋषयः केच राजान आसन्, क इन्द्रः कश्च विष्णोरवतारो जातः ? स्वरोचिषस्य मनो. के के सहायका आसन् ? उत्तमस्य मनोः समये कस्य पुराणस्य प्राधान्यमासीत्, रैवतमनुकाले

कीदृशी व्यवस्था आसीदित्यादिप्रश्नानां यथार्थमुत्तरं पुराणैर्विना कोऽपि दातु शक्नुयात्। मन्वन्तरज्ञानमन्तरा कस्यापि ऋषेः राज्ञो वा कालस्य कथं यथार्थं ज्ञानं भविष्यति? एकस्मिन् कल्पे १४ मनवो भवन्ति, केन मनुना का स्मृतिः रचिता, तस्य स्त्रियः किन्नामासीत् कियन्तश्चासन् तस्य तनयाः? इत्यादि ज्ञानं मन्वन्तरं विना न भवितुमर्हति। पुराणानुसार सृष्टिकालादारभ्य प्रलयपर्यन्तं प्रायः चतुरर्बुदादधिक एव समयो व्यत्येति। एतावति महति समये का घटना कदाऽजोघटत्? कस्य प्रादुर्भाव कदाऽजायतेत्यादि रहस्यं ज्ञातुं भगवता व्यासेन महर्षिणा मन्वन्तरपद्धतेराविष्कारः कृतः।

शंका—बहवो विदेशीया। विद्वासः समये समये सदिहन्ते यत् हिन्दूनामितिहासे न कुत्रापि जन्मसंवदुल्लेखो विद्यते, नापि विशेष घटनानां समयो निर्दिष्टोऽस्ति, अतो भारतीयेतिहासोऽनुपयुक्तोऽन्धकारमयश्चास्ति।

समीक्षा—द्विसहस्रवर्षमात्रे इतिहासे ईशामाध्यमेन जन्मतिथेरुल्लेखो भवितुमर्हति, किन्तु अतिविशाले चतुरर्बुदवर्षमिते इतिहासे ईशासमाअनेके उत्पन्ना अतोऽकिञ्चित्करीमिमां पद्धतिमनुपयुक्तां मत्वा त्रिकालदर्शिना महर्षिणा वेदव्यासेन समाधिना मन्वन्तरप्रणाली समाश्रिता। किञ्च ईशाविषयेऽप्ययं निश्चयो नास्ति यदयं सृष्टे कियद्वर्षानन्तर जातः? तर्हि एतस्य माध्यमेन कालविभागस्य किं मूल्यमस्ति? अपिच किम् ईशावर्षमेव प्रलयप्रर्यन्तं प्रचलिष्यति? लक्षवर्षाणां वार्ता तु दूरे तिष्ठतु, पञ्चसहस्रवर्षपूर्वं प्रचलितो यौधिष्ठिरः सम्वत्सरो न सर्वैरिदानीं ज्ञायते, तर्हि ईशासम्वत्सर. सदा चलिष्यत्येवेत्यन कोऽस्ति निश्चयः? सभाव्यते चाचिरमेव स्वतन्त्रे भारते कदाचिदीशासम्वत्सरःस्थगित स्यात्। अतोऽस्माक पूर्वजैः किञ्चिदनिश्चितमुपायममत्वा प्रत्येकं सिद्धान्त सुनिश्चिते सीम्नि समुपस्थापयन्ति। यथा घटिकाया द्वादशभि· चिन्है एकस्य दिनस्य २४ घटिकासमयज्ञानस्य व्यवस्था कृताऽस्ति तथैव पुराणेषु एकस्य कल्पस्य दीर्घसमयज्ञानाय १४ मन्वन्तरमाध्यमेन व्यवस्था कृताऽस्ति। अत सृष्टिकालतः प्रलयपर्यन्त घटनाज्ञानाय मन्वन्तरपद्धतेराविष्कारः सर्वथोपयोगी युक्तियुक्तश्चास्ति।

यदि मन्वन्तरमानेन केवलमिदमेव ज्ञातुं शक्यते यद् अमुकमन्वन्तरस्यामुकयुगे इयं घटनाऽजोघटत् तर्हि पाश्चात्यपद्धत्याऽपि केवलमिदमेव ज्ञायते यत् अमुकघटना इयद्वर्षपूर्वं परं वाऽजायत। पाश्चात्यपद्धतौ

अपि मास-तिथि-घटना-पलप्रतिपालानां तु ज्ञानं भवत्येव नहि। यथा अल्पीयसि द्विसहस्रात्मके काले केवलं वर्षज्ञानमेव पर्याप्तं भवति तथैव चतुरर्बुदवर्षाणामितिहासे केवलं मन्वन्तरमात्रं युगज्ञानं वा कथं न पर्याप्तिं स्यात्। तस्माद् यथा पाश्चात्यपद्धतौ तिथि-घटी-क्षण-पल-विपला-दीनां ज्ञानमन्तरापि न कापि हानिर्भवति, तथैव मन्वन्तरपद्धतावपि वर्षज्ञानं विनापि न कापि क्षतिर्भवितुमर्हति। अतएवोक्तमभियुक्तैः—

यश्चोभयोः समो दोषः परिहारोऽपि तादृशः।
नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे॥

द्विसहस्रायुष्मत्याः पाश्चात्यजातेः अर्बुदवर्षायुष्मत्याः हिन्दूजातेश्च गणनायामेतावदन्तरं स्वाभाविकमस्ति। अतो यदि पाश्चात्यपद्धतौ केवलं वर्षज्ञानं पर्याप्तं वर्तते तर्हि अर्बुदवर्षात्मके हिन्दूनामितिहासे मन्वन्तरयुगज्ञानमेवकथंन पर्याप्तं प्रतीयते।

पुराणेषु या गाथा यानि चरित्राणि याश्च ऐतिहासिकघटना वर्ण्यन्ते, तासां सर्वासां स्वरूपं समाधियोगेन समाधिगम्यत्रिकालदर्शी महर्षिः व्यासो लोककल्याणाय वर्णितवान्। पुराणेषु प्रतिपादिता देवपदाधिकारिणां देवानां च गाथा सृष्टिसम्बन्धेनास्माकं परमोपयोगिनी वर्तते।

दैवे जगति मनुपदमेकमत्यन्तमहत्वपूर्णं पदमास्ते, तत् खलु प्रतिमन्वन्तरं परिवर्तते।

यथाऽस्मिन् मर्त्यलोके राज्यपरिवर्तने अनेकविधं परिवर्तनमुपजायते, तथैव प्रतिमन्वन्तरं देवलोकमृत्युलोकयोः सभ्यतास्वरूपं तच्छृङ्खलाविधानम्, तच्छासनपद्धतिश्चेति सर्वं परिवर्तते। यथास्मिन् लोके एक-द्वि-त्रि-चतुः-पञ्चशतवर्षेषु सभ्यता-सदाचारादीनां परिवर्तनं दृश्यते, तथैव प्रतिमन्वन्तरं मनोः परिवर्तनेन सार्कं देवराज इन्द्रः अन्ये महान्तो देवपदाधिकारिणो नित्यर्षयः पितरश्च परिवर्तन्ते। एवञ्च प्रतिमन्वन्तरं मनुरिन्द्रः ऋषयः-देवता-राजानश्च परिवर्तन्ते तथा तेषां स्थानेषु नवा-नवा अधिकारिण उपविशन्ति। तथा चोक्तम्—

सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवो नृपाः।
एककाले हि सृज्यन्ते संह्रियन्ते च पूर्ववत्॥ वि०पु० ३।३।१७

अतः प्रतिमन्वन्तरं जीवानां शक्तौ, ज्ञाने, दैवजागतिकशृङ्खलायां च महत् परिवर्तनमुपजायते। प्रतिमन्वन्तरं देवाः कर्मचालकाः ऋषयो ज्ञानसञ्चालकाः पितरश्च स्थूलभूतसञ्चालका भवन्ति। तेषामधस्तादनेके लघीयांसो देवपदाधिकारिणो भवन्ति, यथैकस्मिन्

साम्राज्ये सम्राट् माण्डलिकादयश्च कार्यकारिणः पृथक्-पृथक् भवन्ति, तथैव दैवराज्ये इन्द्रेण सह अनेकेषां देवपदाधिकारिणां सम्बन्धो भवति। प्रतिमन्वन्तरं यदा दैवी शृङ्खला परिवर्तते, तदा सृष्टेः बहवोंऽशाः, दैवराजस्यानेका व्यवस्था अपि परिवर्तनं प्राप्नुवन्ति। प्रतिमन्वन्तरं यद् ज्ञानतारतम्यमुपलभ्यते, तत् तात्कालिकानां देवर्षिगणानां परिवर्तनमूलकमेवास्त।

त्रिकालदर्शी महर्षिर्व्यासः ऋतम्भरप्रज्ञया मन्वन्तरीयाः कल्पान्तरीयाश्च गाथाः संकलय्य लोककल्याणहेतवे पुराणेषु प्रकाशयाञ्चकार। अतो नासां लौकिकैरितिहासैः सर्वांशेन सम्बन्धो भवितुमर्हति। किं बहुना यदा इदानीमपि शतवार्षिके सहस्राब्दिके वा काले लौकिकेतिहासे देशकालपात्राणां सभ्यतायाः संस्कृतेश्च महत् परिवर्तनमवलोक्यते, तदा अनेकमन्वन्तरीये कल्पान्तरीये च विपुले काले कियत् परिवर्तनं भवितुमर्हतीति विद्वद्भिः स्वयमेव विचारणीयम्।

दैवराज्यस्य प्रधानतया त्रीणि कार्याणि सन्ति (१) कालव्यवस्था (२) कर्मशृङ्खला (३) पदाधिकारिणां सुव्यवस्था च। तत्र कालव्यवस्थापको राजा मनुरभिधीयते, कर्मफलदानेन सह जीवानां नियामको धर्मराजो विद्यते। अनेकविधानां देवपदाधिकारिणां प्रतिष्ठापको देवसत्वसुरक्षको देवराज इन्द्र उच्यते। जीवानां गमनागमनचक्रस्य नियामका अपरेऽपि अनेके देवाः तत्तत् पदेषु प्रतिष्ठिताः सन्ति।

यथाऽस्मिन् मृत्युलोके राजा, प्रजाः, राज्यशक्तिः, प्रजाशक्तिः, देशकालपात्राणां स्वरूपं च पृथक्-पृथक् प्राप्यते, तथैव प्रतिमन्वन्तरं विभिन्नप्रकारको देवर्षिपितृसङ्घो जायते। तस्मात् प्रतिमन्वन्तरं देवराजस्य देवपदानाञ्च शृङ्खलायामवश्यं महान् भेदो भवितुमर्हति। मन्वन्तरपरिवृत्तौ मनुपदेऽन्यो मनुः प्रतिष्ठितो भवति तत्सहयकाश्च परिवर्तन्ते। इमं कालपरिमाणं निरीक्ष्य बुद्धिमन्तो विद्वांस इदमवधारयन्ति यदेतस्मिन् महति काले बहु परिवर्तनं भवति। पदार्थविद्याविदस्त्विदमामनन्ति यत् द्विसहस्रवर्षानन्तरं प्रस्तरगृहादीनामपि न कापि सत्ता स्थातुमर्हति। एतावता महता कालेन सर्वत्र वननदीप्रभृतिषु बहुविधं परिवर्तनं भवति।

ब्रह्मण एकस्मिन् दिने (कल्पे) चतुर्दश मन्वन्तराणि सहस्रसंख्याश्च महायुगाश्च भवन्ति। चतुर्णां सत्य-त्रेता-द्वापर-कलियुगानामेको महायुगो भवति। एको महायुगो देवानां द्वादशसहस्रवर्षाणां भवति।

यथैकस्मिन् दिने प्रातः सन्ध्याकालः सायं सन्ध्याकालश्च भवति, तथैव प्रतियुगं युगस्यारम्भे सन्ध्याकालः अन्ते च सन्ध्यांशकालोऽपि भवति। तत्र चतुःसहस्रदिव्यवर्षाणां सत्ययुगः, चतुःशतानि वर्षाणि सन्ध्या, पश्चात्तावानेव सन्ध्यांशश्च भवति। त्रिसहस्रदिव्यवर्षाणां त्रेतायुगम्; शतत्रयवर्षाणां सन्ध्या सन्ध्यांशश्च। द्विसहस्रवर्षाणां द्वापरयुगम्; द्विशतवर्षाणां सन्ध्या सन्ध्यांशश्च भवति। एवमेकसहस्रदिव्यवर्षात्मकं कलियुगम्, पूर्वं शतवर्षात्मिका सन्ध्या पश्चात् शतवर्षात्मकः सन्ध्यांशश्च भवति। एवं संकलनया द्वादशसहस्रवर्षाणाम् एकं चतुर्युगं भवति। तथा चोक्तं मार्कण्डेयपुराणे—

दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम्।
चतुर्युगं द्वादशभिः तद्विभागं शृणुष्व मे॥
चत्वारि तु सहस्राणि वर्षाणां कृतमुच्यते।
शतानि सन्ध्या चत्वारि सन्ध्यांशश्च तथाविधः॥
त्रेता त्रीणि सहस्राणि दिव्याब्दानां शतत्रयम्।
तत्सन्ध्या तत्समा चैव सन्ध्यांशश्च तथाविधः॥
द्वापरं द्वे सहस्रे तु वर्षाणां द्वे शते तथा।
तस्य सन्ध्या समाख्याता द्वे शताब्दे तदंशकः॥
कलिः सहस्रं दिव्यानामब्दानां द्विजसत्तम!॥
सन्ध्या सन्ध्यांशकश्चैव शतकौ समुदाहृतौ।
एषा द्वादशसाहस्री युगाख्या कविभिः कृता॥
एतत् सहस्रगुणितम् अहर्ब्राह्ममुदाहृतम्।
ब्रह्मणो दिवसे ब्रह्मन् मनवः स्युश्चतुर्दश।=४६।८२-२३

## दिव्यवर्षविवरणम्—

| | कालः | सन्ध्या | सन्ध्यांशः | योगः |
|---|---|---|---|---|
| सत्ययुगस्य | ४००० | ४०० | ४०० | ४८०० |
| त्रेतायुगस्य | ३००० | ३०० | ३०० | ३६०० |
| द्वापरयुगस्य | २००० | २०० | २०० | २४०० |
| कलियुगस्य | १००० | १०० | १०० | १२०० |
| संकलनम् | | | | १२००० |

मनुष्याणामेकं वर्षं देवानामेकं दिनं भवति। एवं मानवीय ३६० वर्षाणां देवानामेकं वर्षं भवति। तच्च दिव्यं वर्षं कथ्यते। द्वादश-

सहस्रदिव्यवर्षात्मके काले दशसहस्रैः गुणनं कृत्वा पुनः ३६० गुणनेन मनुष्यवर्षाणि सिद्ध्यन्ति। तथाहि एकस्मिन् कल्पे— १२००० × १००० = १२००००० देववर्षाणि १२००००० × ३६० = ४३२००००००० मानववर्षाणि भवन्ति।

### मानववर्ष विवरणम्

| | मानववर्षाणि | सन्ध्या | सन्ध्यांशः | योगः |
|---|---|---|---|---|
| सत्ययुगम् | १४४०००० | १४४००० | १४४००० | १७२८००० |
| त्रेतायुगम् | १०८०००० | १०८००० | १०८००० | १२९६००० |
| द्वापरयुगम् | ७२०००० | ७२००० | ७२००० | ८६४००० |
| कलियुगम् | ३६०००० | ३६००० | ३६००० | ४३२००० |

त्रिंशत्कोट्यस्तु सम्पूर्णाः संख्याताः संख्यया द्विज !
सप्तषष्टि तथान्यानि नियुतानि महामुने ! ॥
विंशतिस्तु सहस्राणि कालोऽयमधिकं विना ।
मन्वन्तरस्य संख्येयं मानुषैर्वत्सरैर्द्विज ! ॥ = १।३।२०।२१

इति विष्णुपुराणवचनानुसारं प्रत्येकमन्वन्तरस्य कालः मानवीय ३०६७२०००० वर्षात्मको भवति। तत्र वैक्रमीयसंवत् २०३० पर्यन्तं वर्तमानस्य सप्तमस्य वैवस्वतनाम्नो मन्वन्तरस्य १२०५३३०८६ वर्षाणि व्यतीतानि, १८६१८४६१४ वर्षाणि चावशिष्टानि सन्ति।

### चतुर्दश मनूनां नामानि

मन्वन्तरस्य वर्णनं तु प्रायः सर्वेषु पुराणेषु विद्यते। तत्र विष्णुपुराणे चतुर्दश मनूनां नामानि एवं निर्दिष्टानि सन्ति-(१) स्वायम्भुवमनुः (२) स्वारोचिषमनुः (३) उत्तममनुः (४) तामसमनुः (५) रैवतमनुः (६) चाक्षुषमनुः (७) वैवस्वतमनुः (८) सावर्णिकमनुः (९) दक्षसावर्णिकमनुः (१०) ब्रह्मसावर्णिकमनुः (११) धर्मसावर्णिकमनुः (१२) रुद्रसावर्णिकमनुः (१३) रुचिर्मनुः (१४) भौममनुः। तथाहि—

स्वायंभुवो मनुः पूर्वः मनुः स्वारोचिषस्तथा ।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
षडेते मनवोऽतीताः साम्प्रतं तु रवेः सुतः ।
वैवस्वतोऽयं यस्यैतत् सप्तमं वर्ततेऽन्तरम् ॥

सावर्णिस्तु मनुर्योऽसौ मैत्रेय ! भविताऽष्टमः ।
नवमो दक्षसावर्णिर्भविष्यति मुने ! मनुः ॥
दशमो ब्रह्मसावर्णिर्भविष्यति मनुः मुने ! ।
एकादशस्तु भविता धर्मसावर्णिको मनुः ॥
रुद्रपुत्रस्तु सावर्णिर्भविता द्वादशो मनुः ।
त्रयोदशो रुचिर्नाम भविष्यति मुने ! मनुः ।
भौमश्चतुर्दशश्चात्र मैत्रेय ! भविता मनुः ॥ = ३।१।६।४०

## मनूनां परिचयः

श्रीमद्भागवतानुसारं मरीच्यादिद्वारा सृष्टेर्विस्तारमदृष्ट्वा एकदा मनसि चिन्तयतो ब्रह्मणः शरीरतः युग्मौ स्त्री-पुरुषौ आविर्भूतौ। तत्र यः पुरुष आसीत् स सार्वभौमसम्राट् स्वायम्भुवमनुनाम्ना प्रसिद्धः। या च स्त्री आसीत् सा तस्य महाराज्ञी शतरूपाऽभवत् —

कस्य रूपमभूद्द्वेधा यत् कायमभिचक्षते ।
ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥
यस्तु तत्र पुमान् सोऽभूत् मनुःस्वायम्भुवः स्वराट् ।
स्त्रीर्यासीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ = ३।१२।५२।५३

तत्कालादेव स्त्रीपुरुष सम्भोगद्वारा प्रजावृद्धिः समारब्धा। स्वायम्भुवमनोः शतरूपायां पञ्च सन्ततयः समुत्पन्नाः, येषु प्रियव्रतोत्तानपादौ द्वौ पुत्रौ आस्तां तथा आकूतिः देवहूतिः प्रसूतिश्चेति तिस्रः कन्या आसान्। मनुना आकूतेः विवाहः प्रजापतिना रूचिना सह कृतः, देवहूतिः कर्दमाय प्रदत्ता तथा प्रसूतिः दक्षप्रजापतये समर्पिता। आसां तिसृणां सन्तभिः समस्तं जगद् व्याप्तं वर्तते।

द्वितीयो मनुर्बभूव अग्निपुत्रः स्वारोचिषः। तृतीयस्य मनोर्नामास्ति उत्तमो यो राज्ञः प्रियव्रतस्यासीत् पुत्रः। चतुर्थस्य मनोर्नामास्ति तामसो यो तृतीयस्य मनोरुत्तमस्यासीद् भ्राता। पञ्चमस्य मनोर्नामास्ति रैवतो यश्चतुर्थस्य मनोः तामस्यासीद्भ्राता। षष्ठो मनुश्चाक्षुषोऽस्ति यश्चक्षुष आसीत् पुत्रः। विवस्वतः (सूर्यस्य) यशस्वी पुत्रः श्राद्धदेव एव सप्तमो वैवस्वतो मनुरस्ति। अष्टमे मन्वन्तरे सूर्याच्छायायामुत्पन्नः सावर्णिर्मनुर्भविष्यति। वरुणस्य पुत्रो दक्षसावर्णि नवमो मनुर्भविष्यति। दशमो मनुर्भविष्यति उपश्लोकपुत्रो ब्रह्मसावर्णिः।

एकादशो मनुर्भविष्यति अत्यन्तसञ्जमी धर्मसावर्णिः। द्वादशो मनुर्भविष्यति रुद्रसावर्णिः। त्रयोदशो मनुर्भविष्यति परमो जितेन्द्रियो देवसावर्णिः। चतुर्दशो मनुर्भविष्यति इन्द्रसावर्णिः। एषां चतुर्दशानां मनूनां मन्वन्तराणि त्रिषु-भूत-भविष्य-वर्तमानेषु कालेषु चलितानि, प्रचलन्ति, चलिष्यन्ति च, तद्द्वारैव सहस्रचतुर्युगीयस्य कल्पस्य गणना क्रियते।

पुराणेषु चतुर्दशापि मनवः परमप्रभावशालिनो जीवानामधीश्वररूपेणाङ्किता सन्ति। एभिरियं सप्तद्वीपवती वसुन्धरा सहस्रयुगपर्यन्तं पालिता भवति। इमे मनवः स्व स्वमन्वन्तराधिकारे एकैकशो वर्तमानाः कार्यं सञ्चालयन्ति। यदा एते स्व स्वाधिकारात् निवृत्ता भवन्ति तदा महर्लोके गच्छति।

अस्मिन् कल्पे षण्णां मनूनां कार्यकालःसमाप्तिं गतोऽस्ति। अयं सप्तमस्य वैवस्वतमनोः प्रचलति समयः। एतदनन्तरं भविष्यकालीनानां सप्तानां मनूनां कार्यकालो भविष्यति, येषु पञ्च सावर्णाः षष्ठो रौच्यः सप्तमश्च भौत्यो मनु र्भविष्यन्ति।

स्वायम्भुवो मनुः पूर्वं ततः स्वारोचिषो मनुः।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा॥

षडेते मनवोऽतीता वक्ष्याम्यष्टावनागतान्।
सावर्णा पञ्च रौच्यश्च भौत्यो वैवस्वतस्तथा॥ = वा. पु. ६३।३.४।

वायुपुराणे सावर्णमनूनामुत्पत्तिवर्णनं महद्रोचकमङ्कितमस्ति, तद्यथा-दक्षप्रजापतेरेका सुव्रतानाम्नी कन्याऽसीत्। दक्ष एकदा तां सह नीत्वा ब्रह्मणोऽन्तिकमुपास्थितः, यत्र भवो धर्मो वा पूर्वत एव विराजमानावास्ताम्। ब्रह्मा तां कन्यामालोक्य दक्षमुवाच-वत्स! एषा तव कल्याणी कन्या तान् चतुरःपुत्रानुत्पादयिष्यति ऽमे मनुनाम्ना प्रसिद्धा भविष्यन्ति। तदनन्तरं दक्ष-भव-धर्म-ब्रह्मणां मानसिकसङ्कल्पानुसारं तया कन्यया तत्क्षणेएव तेषां चतुर्णामनु रूपा अतिसुन्दराश्चत्वारः कुमाराः समुत्पादिताः। तान् तेजस्विनः प्रभावशालिनश्चकुमारानवलोक्य इमे चत्वारो देवाः-इमे मदीयाः पुत्राः सन्ति, इमे मदीयाः पुत्राः सन्तीत्युक्त्वा तानाकृष्टुमारब्धवन्तः। अन्ते ते चत्वारः कुमाराः तेषां देवानां मानसिकेनाभिध्यानेनोत्पन्ना आसन्। अतस्तैः परस्परं निश्चितं यत् पुत्रो मातापित्रोः स्वभावमनुकरोति। अतो यो यस्य समानः स्यात्

स तं गृह्णीयात्। तदनुसार ते ब्रह्मादयो देवा स्व-स्वस्वभाव-वर्णाकृति-परा-क्रमशालिनस्तान् कुमारानगृह्णन्। ते च चत्वारोऽपि कुमारा ब्रह्म-धर्म-दक्ष-भवसमानवर्णाकृतय आसन्। अतस्तेषां चतुर्णां नाम सावर्ण इति जातम्। मननात् मननकरणात्तेषामुत्पत्तिरजायत, अतस्ते चत्वारोऽपि कुमारा मनुनाम्ना विख्याता अभूवन्—

> एवं ते समयं कृत्वा सवर्णान् जगृहु मुनान्।
> यस्मात् सवर्णास्तेषां वै ब्रह्मादीनां कुमारकाः।
> सवर्णा मनवस्तस्मात् सवर्णत्वं हि ते यत।
> माननान्माननाच्चैव तस्मात्ते मनवः स्मृताः। =वा पु १००।५२ ५३

एवमिमे चत्वारो मनवो ये सावर्णमनुनाम्ना विख्यातास्ते ब्रह्मादीनां चतुर्णां देवानां मानसिका पुत्रा सन्ति। एतदतिरिक्त विवस्वत (सूर्यस्य) पुत्रोऽपि सावर्णो मनु प्रोच्यते, य सावर्णात (सञ्ज्ञारूपधारिणी-च्छायात) समुत्पन्नो जात आसीत्। एवं विवस्वत (सूर्यस्य) मनुनामानौ द्वौ पुत्रावभूताम्-एको वैवस्वतमनुर्द्वितीयश्च सावर्णमनु। एनयो ज्येष्ठो वैवस्वतमनु विश्वकर्मण कन्याया सञ्ज्ञात उत्पन्न, द्वितीयश्च सावर्ण-मनु सवर्णात (सञ्ज्ञारूपधारिणीछायात) उदपद्यत—

> वैवस्वताऽन्तरे राजन्। द्वौ मनू तु विवस्वत।
> वैवस्वतो मनुर्यश्च सावर्णो यश्च विश्रुत॥
> ज्येष्ठ सनामुतो विद्वान् मनुर्वैवस्वतो मनुः।
> सवर्णाया सुतश्चान्य स्मृत सावर्णिको मनु। =वा पु १००।५५ ५६

स्वारोचिष औत्तम-तामस रैवताख्या इमे चत्वारो मनवो राज्ञ प्रिय व्रतस्य वंशे उत्पन्ना आसन्-

> स्वारोचिषश्चोत्तमश्च तामसो रैवतो मनु।
> प्रियव्रतान्वया ह्येते चत्वारो मनव स्मृताः॥ =वि पु ३।१।२४

चाक्षुषस्य मन्वन्तरस्यान्ते वैवस्वतमन्वन्तरारम्भे प्रजापते रुचे रेक पुत्रोऽभवद्, यो रौच्यमनुनाम्ना प्रसिद्ध। भूतिनामकजनन्या य पुत्र समुत्पन्न स भौत्यमनुनाम्ना विख्यात।

एव प्रथम स्वायम्भुवमनु ब्रह्मणो मानसपुत्रोऽस्ति। स्वारोचिष-औत्तम-तामस रैवता इमे चत्वारो मनव प्रियव्रतवंशजा सन्ति। चाक्षुषो मनु चक्षुष पुत्रोऽस्ति। दक्षसावर्णि भवसावर्णि धर्मसावर्णि तथा रुद्रसावर्णि इमे चत्वारो मनवः दक्ष-ब्रह्म-धर्म-रुद्राणां मानसिकपुत्रा सन्ति। वैवस्वतमनु- सावर्णिमनुश्चैतौ द्वौ विवस्वत (सूर्यस्य) पुत्रौ स्त। रौच्यो मनु प्रजापते रुचे पुत्र, भौत्यो मनुश्च भूते पुत्रोऽस्ति।

१×४×१×४×२×१×१ = १४। एते चतुर्दश मनव एकस्मिन् कल्पे (ब्रह्मण एकस्मिन् दिने) क्रमशः क्रमन्ते।

प्रतिमन्वन्तरं षडधिकारिणः स्वं स्वं विशिष्टं कार्यं कुर्वन्ति तथा स्वं स्वं कार्यं सम्पाद्य मन्वन्तरस्य परिवर्त्तने ते स्वाधिकारं परित्यज्य निवृत्ता भवन्ति, तेषां स्थानेषु नवीने मन्वन्तरे नवीना अधिकारिणो नियुज्यन्ते। सप्तर्षयः प्रतिमन्वन्तरं वेदप्रवर्तका भवन्ति। मनुः मनुष्याणां धर्ममर्यादां स्थरयितुं व्यवस्थापयति, देवा यज्ञफलभोगकार्यं सम्पादयन्ति, इन्द्रो हि विश्वस्याभ्युदयनिमित्तं वृष्टिं करोति। मनुपुत्राः पृथ्वीपालनं प्रजासंरक्षणं च कुर्वन्ति। अंशावतारस्य विशेष कार्यं धर्मसंरक्षणमधर्मोन्मूलनं सज्जन-क्लेशनिवारणं दुर्जनदमनञ्च विद्यते। एवमेषामधिकारिणां कार्यं महत्म-हत्त्वपूर्णं विश्वकल्याणकारकं चास्ति। मनु-मनुपुत्र-देवता-इन्द्र-ऋषिगणा एते पञ्चाधिकारिणो भक्तवत्सलस्य भगवतो विष्णोः सन्ति सात्त्विकांशाः। इमे मनुना सहोत्पद्य संसारसंरक्षणे सहायका भवन्ति—

> मनवो भूभुजः सेन्द्रा देवाः सप्तर्षयस्तथा।
>
> सात्त्विकोऽशः स्थितिकरो जगतो द्विजसत्तम॥ — वि. पु. ३।२।५४

प्रतिमन्वन्तरं भगवतो विष्णोरंशावतारस्य निर्देशोऽस्ति, येन धार्मिकी अव्यवस्था दूरीभवति, विश्वस्य कल्याणं जायते प्राणिमात्रस्य च मङ्गलं शोभतेति।

यथा राष्ट्ररक्षानिमित्तं बह्वो राजकीयविभागा भवन्ति, तथैव एकस्य ब्रह्माण्डस्य संचालने त्रयो मुख्यविभागा विद्यन्ते। एक आध्यात्मिक-विभागो द्वितीय आधिदैविकविभागस्तृतीयश्चाधिभौतिकविभागः। तत्र प्रथमस्य ज्ञानसम्पन्नविभागस्य सञ्चालका व्यास-वाल्मीकि-वशिष्ठादयो द्वितीयस्याधिदैविकविभागस्य सञ्चालका वसुरुद्रादिदेवगणाः तृतीयस्या-भौतिकविभागस्य सञ्चालका अर्यमाग्निष्वातादिपितृगणाः सन्ति।

मनुः सप्तर्षयः देवाः पितरश्चेति चत्वारः प्रतिमन्वन्तरस्य मूलानि अभिमतानि सन्ति। एतदतिरिक्ता याः प्रजाः सन्ति ता एषामन्त-र्भूता भवन्ति। देवा ऋषीणां पुत्राः सन्ति, पितरो देवानां पुत्राः सन्ति, ऋषयश्च देवपुत्राः सन्ति। एवं सप्तर्षिभ्यो ब्राह्मणानां मनोः क्षत्रिय-वैश्य-शूद्रादीनामुत्पत्तिरस्तीतीदमेव मन्वन्तरस्यास्ति संक्षिप्तं विवरणम्।

> सप्तर्षयो मनुर्देवाः पितरश्च चतुष्टयम्।
>
> मूलं मन्वन्तरस्यैते तेषाञ्चैवान्तरे प्रजाः।
>
> ऋषीणां देवताः पुत्राः पितरो देवसूनवः।
>
> ऋषयो देवपुत्राश्च इति शास्त्रविनिर्णयः॥— वा. पु. ६२।१६.२०

## वंशानुचरितम् ( ५ )

तत्तद् वशेषु समुत्पन्नाना विशिष्टाना महापुरुषाणा रुचिरचरित्रवर्णन वंशानुचरितमुच्यते । अत्र मर्त्यलोकप्रभवाणा पुण्यकर्मशालिनामृषीणा धर्मरक्षणतत्पराणा राज्ञा च वशजा वर्ण्यन्ते, सृष्टिश्रृङ्खलाया सदाचारादि विभागानाञ्च विस्तृत वृत्तान्तमुपलभ्यते –

वशानुचरित तेषा वृत्त वशधराश्च ये ।। =श्री० भा० १२।७।१६

मनुष्याणा समक्षे यदा घोराद्घोरतराऽपि आपदुपतिष्ठते, तदा महतो महानपि धर्मवेत्ता किंकर्तव्यविमूढो भवति, तस्य मनसि च बहुविधो विचार उपतिष्ठते । तदेयदपि अनवधानतया पतन जायते । एवविधाया विकटपरिस्थितौ पुण्यशालिनामुत्तमचरित्राणा स्वपूर्वजाना रुचिर चरित्र स्मृत्वा पतनात् सरक्षणाय पुराणेषु वशानुचरितस्य समावेश कृतोऽस्ति ।

पुराणानुसारमेव वशानुचरितस्य ज्ञान सम्यग्भवितुमर्हति । यदि जगति पुराणानि न स्युस्तर्हि कथमिद ज्ञातु शक्यते, यद् महाराजो युधिष्ठिरो हरिश्चन्द्रो वा महान् सत्यवादी आसीत् ? राजा जनको विशिष्टो ब्रह्मज्ञानी बभूव, राजा दिलीपश्चातिगोभक्तो जात, अर्जुनोऽद्वितीयो धनुर्धरोऽभवत्, ध्रुवप्रह्लादादयो बालका अपि परमभगवद्भक्ता बभूवुः। भगवतो रामस्यादर्शमय जीवनचरित्र समस्त विश्व श्रद्धत्ते, अनसूया-सती-सीता-सावित्री दमयन्तीप्रभृतीना सतीशिरोमणीना भारतभूमणीना रमणीना पवित्रतम पातिव्रत्य यच्छ्रुत्वा पाप दूरीभवति, सर्वेषा शिरश्च समुन्नत जायते । यदि पुराणानि न स्युस्तर्हि क एषा पवित्र चरित्र बोधयेत् ? यदि पुराणेषु वशानुचरित न श्रूयेत, तर्हि हिन्दूजाते समस्त गौरव आदर्शश्च विलुप्येत, सस्कृतिसदाचारास्तिकतावीरताब्रह्मचर्य पातिव्रत्यभगवद्भक्तिज्ञानकर्मणा समुज्ज्वल उपदेशश्च कथमुद्धार प्राप्येत ?

यद्यपि महाभारतसग्रामे तत्तद्देशान्तरादागतानामनेकेषा राज्ञाम्, पाण्डवाना दिग्विजये राजसूये च भारतादन्यदेशानामपि वर्णन चित्र्यते, तथापि पौराणिके वशानुचरिते विशेषतो भारतीयानामेव राज्ञामादर्शमयं समुज्ज्वल चारुचरित्र चित्रण दृष्टिगोचरतामायाति, येन हिन्दूनां प्राचीन इतिहास सुरक्षितोऽस्ति । त्रिकालदर्शिनो महर्षेर्व्यासदेवस्य योगदृष्टौ स्थूलो मृत्युलोक , सूक्ष्मो वा देवलोक समानरूपेणाक्षिगोचरतामापद्यते । अत वशवर्णने दैवी सृष्टिर्लौकिकी सृष्टिश्चोभये सम्मिलिते वर्णिते स्त । यथा सूर्यादीना देवाना वर्णन दैवीसृष्टिवर्णनम्, इक्ष्वाकुप्रभृतीना राज्ञा च प्रभव लौकिकसृष्टिवर्णनमुपलभ्यते ।

एवं पुराणेषु सर्ग प्रतिसर्ग वंश मन्वन्तर-वंशानुचरितवर्णनद्वारा भारतीयप्राचीनपरम्पराया विवरणस्य सम्यक् सकलन कृतमस्ति। पुराणाना पञ्चलक्षणत्वादेव पुराणलक्षणं ब्रुवता सायणाचार्येण स्पष्टमुक्तम् —

जगतः प्रागवस्थानुक्रम्य सर्गादिप्रतिपादक वाक्यजात पुराणमिति।

## पौराणिकसृष्टिरहस्यम्

इदं दृश्यमान प्रपञ्च कैः कैः तत्त्वैः निर्मित वर्तते, एषां तत्त्वाना किमस्ति पौर्वापर्यम्, सृष्टेरारम्भः कदाऽभूत् कथमभूत्? संसारसृष्टेः कियन्ति वर्षाणि जातानि, प्रलयः कदा भविष्यति, कथ च भविष्यतीत्यादीना रहस्यात्मकप्रश्नाना यथार्थमुत्तर विश्वस्य कस्मिन्नपि धर्मपुस्तके नोपलभ्यते, किन्तु पुराणानामाधारेणैव वास्तविकमुत्तर दातु शक्यते, यतो हि हिन्दुजातिः सृष्टेरारम्भकालाद् अद्यावधि प्रत्यहं नित्य-नैमित्तिक-काम्यादीना कर्मणामनुष्ठानसमये-ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे "अमुकं कर्म करिष्ये इत्यादि सकल्प" पठित्वा सृष्टिकालगणना कुर्वन्ती सम्यक् तद्विभागं च जानन्ती समय यापयति। एतस्यायमभिप्रायोऽस्ति, यद् ब्रह्मणः आयुषः पञ्चाशद् वर्षानन्तरं द्वितीयपरार्द्धसमये श्रीश्वेतवराहकल्पे वैवस्वतनाम्नः सप्तमस्य मनो समये अष्टाविंशतितमस्य कलियुगस्य प्रथमे भागेऽहं च अमुक कर्म करिष्ये इति।

सृष्टेरारम्भविषये यत्र वर्तमानविज्ञानमिदानी यावत् पञ्चसहस्राब्दादारभ्य त्रिंशत्कोटिपर्यन्तं गतं विद्यते, तत्र पौराणिकी सृष्टिः प्रायः अर्बुदद्वयवर्षपर्यन्तमनुगच्छति। यदि आधुनिकं विज्ञानं शनैः शनैः समुन्नतिं कुर्वाणं तिष्ठेत्, तर्हि, मन्ये कियद्वर्षानन्तरं पौराणिक सृष्टिसिद्धान्तमुपगच्छेदिति।

आधुनिकैर्विज्ञानविद्भिरेकस्वरेण स्वीकृतमस्ति यत् सृष्टिनिर्माणे कोटिवर्षेभ्यः न्यूनतमः समयो न व्यतीत:, यत आरम्भे इयं दाहकमग्निपिण्डमिवासीत्ततोऽत्र तृणगुल्मादयः प्रादुर्भूताः, तत. कियद्वर्ष यावत् जंगलरूपेण स्थिता आसीत्, ततो जीवाना निवासयोग्या जाता।

पाश्चात्यवैज्ञानिकेषु प्रधानेन वैज्ञानिकेन लिचाफ् महोदयेन स्वकीये 'सिक्रेट् आफ् डार्विन्' नामके पुस्तके लिखितमस्ति, यत् पृथिव्याः द्विसहस्रडिग्रीतापमानतो द्विशतडिग्रीतापमानं यावत् गमने ३५ कोटिवर्षेभ्यो न्यूनः समयो न व्ययीभवितुमर्हति। एतेन देवीभागवतपुराणोक्तः सिद्धान्त एव सिद्ध्यति—

शत मन्वन्तर यावज्ज्वलन्तो ब्रह्मतेजसा।
सुषाव डिम्भं स्वर्णाभं विश्वाधारालयं पदम् ॥

एतादृश एव सृष्टिक्रमो मनुस्मृतेः प्रथमाध्याये भगवता मनुनाऽपि प्रदर्शितोऽस्ति। तस्मात्-पौराणिक सृष्टिप्रक्रियाक्रमो वैज्ञानिकनिकषायां निर्मलः प्रतीयते।

## सृष्टेश्चातुर्विध्यम्

पुराणेषु सृष्टिप्रकरणमतिगहनं विद्यते। सर्गविगतेर्भाविरहस्यज्ञानान्तरमेव दृश्यरहस्यज्ञानं भवितुमर्हति। सृष्टिस्तावच्चतुर्विधा भवति—प्राकृतिकी सृष्टिः, ब्राह्मी सृष्टिः, मानसी सृष्टिः, मैथुनी सृष्टिश्च। तत्र सर्वप्रथमं ब्रह्मप्रकृतौ अव्यक्तावस्थातो व्यक्तावस्थामधिगतायां सत्याम् अनन्तकोटिब्रह्माण्डनायकस्य नारायणस्येक्षणतो या सृष्टिः प्रादुर्भवति, सा प्राकृतिकी प्रथमा सृष्टिः कथ्यते, यतो हि सा प्रकृत्या स्वभावेनैव भवति। तदनन्तरं ब्रह्मविष्णुमहेशात्मकस्य मूर्तित्रयस्याविर्भावो भवति। इमे त्रय एव प्रतिब्रह्माण्डं सगुणब्रह्मणः प्रतिनिधयः ईश्वरा उच्यन्ते। अय भावः—अनन्तकोटिषु ब्रह्माण्डेषु प्रतिब्रह्माण्डं सृष्टि-स्थिति-लयात्मककार्यसम्पादनाय सगुणब्रह्मरूपेण ये त्रयो देवा विद्यन्ते, तेषु प्रथमः सर्जनकर्तृत्वाद् ब्रह्मोच्यते, द्वितोयश्च स्थितेः कारणं विष्णुनिगद्यते, तृतीयो हि सहारकारणाच्छिवोऽभिधीयते। इमे च देवशब्दवाच्या अपि न साधारणदेवयोनिजाः, अपितु निर्गुणस्य भगवत इमे सन्ति सगुणमूर्तयः। तथा च रजोगुणाधिकतया ब्रह्मणा सह सृष्टेः सम्बन्धः, सृष्टिरक्षायाः सत्त्वगुणाधिकतया विष्णुना सार्कं सम्बन्धः, तमोगुणाधिक्येन च सहारस्य शिवेन सार्द्धं सम्बन्ध.। एषु विष्णुः धर्मप्रदाता, शिवो ज्ञानप्रदाता, ब्रह्मा चाधिभौतिकशक्तिप्रदाताऽस्ति। केवलं सृष्टिपरिचालनमेव ब्रह्मणः कार्यं, विष्णु-शिवयोः पालन संहारकार्यं च विद्येते। अतस्तयोः समर्चनं सर्वथैव दृश्यते।

तत्र ब्रह्मणः सकाशात् सनकादीनां सृष्टेः—द्वितीया ब्राह्मी सृष्टिरुच्यते। ततो ब्रह्मणा मानसपुत्रैः प्रजापतिभिश्च कृता तृतीया मानसी सृष्टिरुच्यते। तदनन्तरमुद्भिज्जस्वेदजाण्डजजरायुजमानवेषु स्त्रीपुरुषसंयोगजन्या चतुर्थी मैथुनीसृष्टिरुत्पद्यते, या वैजी सृष्टिरप्युच्यते। तत्र ब्राह्म्याः मानस्याश्च सृष्टेरहस्यमन्तर्दृष्टयो योगिन एवानुभवन्ति, न साधारणा जनाः तद्रहस्यमवगन्तुं पारयन्ति। तथा च सर्वप्रथमा प्राकृतिकी सृष्टिः, ततो ब्रह्मेच्छया पूर्णज्ञानवता सनकादीनां परमहंसानां द्वितीया ब्राह्मी सृष्टिः, तदनु ब्रह्मद्वारा दैवशक्तिसम्पन्नानां भृग्वादीनां प्रजापतीनां तृतीया

मानसी सृष्टिः। तदनन्तरं मानवपिण्डभृतां जीवानां जायते चतुर्थी मैथुनी सृष्टिः। क्वचिच्च प्राकृतिकी-मानसिकी-वैजीभेदेन सृष्टिप्रकरणस्य साधारणतः त्रय एव स्तराः सन्ति। तत्र प्राकृतिकी सृष्टिः सगुणब्रह्मणः, मानसिकी सृष्टिः ब्रह्मणः प्रजापतीनां च, वैजी सृष्टिस्तु जीवानां मिथुनभावतो नर-नारीणां परस्परं संयोगतो जायते।

सत्त्वगुणाधिदेवो भगवान् विष्णुर्यदा योगनिद्रानिगूढनयनो भवति तदा रजोगुणाधिदेवो ब्रह्मा तदीयनाभिकमलतो जागृतो भूत्वा प्रादुर्भवति, ततश्च तमोगुणाधिदेवो भगवान् महेशस्तयोरेव देहयोरलक्षितरूपेण निगूढस्तिष्ठति। अस्यामेव दशायां ब्रह्मदेवः सृष्टिचक्रं चालयति, विस्तारयति च। पूर्वकल्पानुसारं नवीने कल्पे योगयुक्तान्तःकरणेन ब्रह्मणा यदा "धाता यथापूर्वमकल्पयत्" इति ऋग्वेदानुसारं समाधिस्थबुद्धिप्रभावेण ऋषीणां मानसी सृष्टिः क्रियते तदैव भगवतो ब्रह्मणोऽन्तःकरणतः ऋषीणामन्तःकरणे आनन्दानुगतसमाधिद्वारा श्रवणाद् श्रुतीनां वेदानामाविर्भावो भवति। विचारानुगतसमाधिद्वारा च पूर्वकल्पीयगाथानां भावरूपेण पुराणात्मना प्राकट्यमपि विज्ञानसिद्धमेव। तत्र वेदा यथावच्छब्दद्वारा पुराणानि च भावद्वारैवाऽविर्भावमासादयन्तीति सर्वसिद्धान्तसिद्धः पन्थाः।

तत्रैतावान् भेदो विद्यते, यद् आसुरलोकेषु आसुरीसृष्टेराधिक्यं देवलोकेषु च दैवी सृष्टिः बाहुल्येनोपलभ्यते, किन्तु मृत्युलोके मानवपिण्डेषु प्रतिकल्पं नवीनायां सृष्टौ जायमानायां देवासुरराक्षसात्मिका विविधाऽलौकिकविचित्रता समुदेति। यद्यपि सप्तसु अधोलोकेषु असुराणां निवासः, सप्तसूर्ध्वलोकेषु च देवानां निवास इति देवासुरयोर्निवासभेदो लक्ष्यते तथापीमौ द्वावपि देवासुरौ देवसृष्टेरेवान्तर्गतौ इति असुरा अपि देवयोनिविशेषा एव सन्ति। अतः उभयोरपि पिण्डे देवपिण्डमित्येवोच्यते। तद्भिन्नमस्ति मानवपिण्डम्। एवं सत्यपि त्रिविधा सृष्टयो दृष्टिगोचरतामुपयान्ति। तत्र पूर्वकालिककर्मानुसारेण कदाचिद् दैव्याः प्रजायाः कदाचन आसुर्याः कदाचिच्च राक्षस्या प्रजाया आधिक्यं जायते।

## तपसो वैशिष्ट्यम्

स्वर्गे पाताले मृत्युलोके च निवासिभिर्जीवैः अलौकिकी शक्ति र्लोकोत्तरमैश्वर्यञ्च दुष्करेण तपसा संसाध्यते। तपो हि जीवेषु अलौकिकीं शक्तिं सञ्चारयति। तपोबलेनैव विश्वामित्रो ब्रह्मर्षित्वं ध्रुवश्च ध्रुवलोकमवापतुः संसारे नैवंविधं किञ्चिदपि कार्यं वर्तते, यत्तपसा न सिध्येत। तपसा हि साधकोऽसंभवमपि कार्यं संभवं कर्तुमर्हति। तथा चाह भगवान् मनुः—

यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम्।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ = म० स्मृ० ११।२३८

अतएव मानवेषु देवेषु दानवेषु असुरेषु च तपसि प्रवृत्ति स्वाभाविकी भवति। तपोऽनुष्ठानाय इमामेव कर्मभूमिं भारतमाश्रयन्ति सर्वे।

किं बहुना ? तपोबलेनैव ब्रह्मा संसारं सृजति विष्णुर्विश्वं पालयति, शिवश्चान्ते सर्वं संहरति। अतएव ब्रह्मसृष्टौ वैविध्यं विद्यते। ब्रह्मसमाना अनेके महर्षयोऽपि सन्ति, ये मानसीं सृष्टिं कर्तुं प्रभवन्ति। अतएव महर्षेः कश्यपात् मनोश्च देवतापशुपक्षिस्थावरजङ्गमाना सृष्टिरुद्भवति।

## मानसाङ्गजसृष्टिः

आदिदेवो हि ब्रह्मा तपोबलेन प्रथमं मानसीमेव सृष्टिं प्रकुरुते, ततोऽङ्गजाः प्रजाः उत्पादयति, यस्य वर्णनं तत्तत्पुराणेषु प्रचुरमात्रायामुपलभ्यते। ब्रह्मणो मानसी सृष्टिः श्रीमद्भागवते यथा—

भगवद्ध्यानपूतेन मनसाऽन्यास्ततदाऽसृजत्।
सनकञ्च सनन्दञ्च सनातनमथात्मभूः ॥
सनत्कुमारं च मुनीन् निष्क्रियानूर्ध्वरेतसः।
तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ॥
ते नैच्छन् मोक्षधर्माणो वासुदेवपरायणाः। = ३।१२।३-५

अङ्गजा सृष्टिर्यथा तत्रैव—

अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे।
*भगवच्छक्तियुक्तस्य लोकसन्तानहेतवे ॥*
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः।
उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुवः।
प्राणाद् वसिष्ठः सञ्जातो भृगुस्त्वचि करात् क्रतुः ॥
*पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः।*
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥
मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ = ३।१२।२१-२७

मत्स्यपुराणे मानस्या अङ्गजायाश्च सृष्टेः वर्णनप्रसंगे प्रोक्तमस्ति यद् वेदाभ्यासे निरन्तरं निरतेन लोकपितामहेन ब्रह्मणा पुत्रोत्पत्तिकामनया सर्वप्रथमं मनसा दश पुत्राः समुत्पादिताः। मानसिकेन सङ्कल्पेनोत्पन्नत्वात्ते मानसपुत्रनाम्ना प्रसिद्धाः सन्ति—

वेदाभ्यामरतस्यास्य प्रजाकामस्य मानसाः।
मनसः पूर्वसृष्टा वै जाता यत्तेन मानसाः ॥ = म० पु० ३।५

एषु प्रथमो महर्षिर्मरीचिरुत्पन्नः तदनन्तरमृषिप्रवरोऽत्रिरजायत। ततोऽङ्गिरा मुनिः समुत्पद्यत। तत्पश्चात् पुलस्त्योत्पत्तिरभवत्। तदनु क्रमशः पुलह-क्रतु-प्रचेतोवसिष्ठ-भृगु-नारदानामाविर्भावो जातः। एवं ब्रह्मण इमे दश मानसपुत्रा अजायन्त—

मरीचिरभवत् पूर्वं ततोऽत्रिर्भगवान् ऋषिः।
अङ्गिराश्चाभवत् पश्चात् पुलस्त्यस्तदनन्तरम् ॥
ततः पुलहनामा वै ततः क्रतुरजायत।
प्रचेताश्च ततः पुत्रो वसिष्ठश्चाभवत् पुनः ॥
पुत्रो भृगुरभूत्तद्वन्नारदोऽप्यचिरादभूत्।
दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत् ॥ = म०पु०३।६-८

एवं ब्रह्मणः शरीरात्तत्तदङ्गेभ्यो नव अङ्गजा पुत्रा अभवन्, एतदतिरिक्ता दशमी चैका अङ्गजा कन्याऽपि सरस्वती समुत्पन्ना तथा हि—

एते नव सुता राजन्! कन्या च दशमी पुनः।
अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता ॥ = म० पु० ३।१२

वायुपुराणेऽपि ब्रह्मणो मानसान् पुत्रानुक्त्वा तेषु भृग्वादयो नव ब्रह्मवादिनो गृहस्थाश्चोक्ताः, यैरेव प्रथमं धर्मस्य प्रवर्तनं कृतम्—

अथान्यान् मानसान् पुत्रान् सदृशानात्मनोऽसृजत्।
नव ब्रह्मण इत्येते पुराणे निश्चयं गताः ॥ = ९।६९

अपि च पुराणेषु चतुर्धा प्राणिनो वर्णिताः सन्ति-असुराः, सुराः, पितरो मनुष्याश्च। तत्रादौ सृष्टिकामनया दत्तावधाने ब्रह्मणि यदा प्रथमं तत्र तमोगुणस्याधिक्यमजायत, तदा तस्योरस्तोऽसुरा उत्पन्नाः। तेषामुत्पत्यनन्तर तेन तत् तामसिक शरीरं परित्यक्तं यत्तत्काले रात्रिरूपेण परिणतम्। ततः सात्त्विके शरीरे गृहीते ब्रह्मणो मुखात् सात्त्विकाः सुरा सञ्जाताः, तदनु प्रजापतिना ब्रह्मणा परित्यक्तं तच्छरीरं दिनरूपेण परिणतम्। तदनन्तरं तेनांशिकसात्त्विकमयं देहं धृत्वा पितॄनुत्पादयामास। ततः तत्परित्यक्तं शरीरं दिवानिशामध्यवर्तिनी सन्ध्या समजनि। पश्चात्तेन रजोमयं देहमाश्रित्य रजःप्रधानानां मानवानां सृष्टिः कृता। तद्द्वारा परित्यक्तं तच्छरीरं ज्योत्स्ना (प्रभातकाल) रूपेण परिणतम्। एवं चतुर्विधप्राणिवर्गस्य सम्बन्धः चतुर्भिः कालविभागैः सहाजायत।

अतस्तेषां बलशालिता तेष्वेव कालेषु दृश्यते—असुराणां सम्बन्धो रात्रितः, सुराणां दिनतः, पितृणां सायंसन्ध्याकालतः मनुष्याणाञ्च प्रातःकालतो विशेषः सम्बन्धोऽस्ति।

ब्रह्मणा निर्मितस्य स्थावरजङ्गमात्मकस्य जगतः इदं वैशिष्ट्यं विद्यते, यत् पूर्वकल्पे येषां यः स्वभावः, यादृशी प्रवृत्तिः, यादृशं च कर्म भवति, तानि सर्वाणि तैः तादृशान्येव प्राप्यन्ते। अतो हिंसा-मृदुता-कठोरता-धर्माधर्म-सत्यानृतादि सर्वं स्वभावानुसारमेव प्राणिभिः प्राप्यते, तथा तेभ्यो जीवेभ्यः तदेव रोचते च। तथाचोक्तं विष्णुपुराणे—

> तेषां ये यानि कर्माणि प्राक्सृष्ट्या प्रतिपेदिरे।
> तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः॥
> हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मानृतानृते।
> तद्भाविताः प्रपद्यन्ते तस्मात् तत्तस्य रोचते॥ = १।५।६०-६१

एवं ब्रह्मणः सृष्टिः पूर्वं मानसिकी एव भवति। स शरीरसंयोगपूर्वकं वैजीं सृष्टिं न कुरुते, किन्तु जीवानां पूर्वजन्मसु कृतानि कर्माणि आत्मीयज्ञानशक्त्या ज्ञात्वैवैतानुत्पादयति। पुराणदृष्टौ कर्मानुसारमेव सृष्टिर्जायते। अतो ब्रह्मणि पर्यन्यवत् क्रौर्यं साम्यं वैषम्यं वा दोषो न समारोपयितुं शक्यते। इदं हि पौराणिकं तथ्यं भारतीयदर्शनस्य सुचिन्तितपरम्पराया अनुकूलमेवास्ति। एतेन विश्लेषणेन भागवतानां समन्वयदृष्टेः पूर्णः परिचयः प्राप्यते। विस्तारज्ञानाय पुराणानां परायणं कर्तव्यम्।

अन्यशास्त्रेषु वर्णितं विद्यते, यद् यदा पृथिवीयं मनुष्यवासयोग्या समजनि, चतुर्दश भुवनानि च यथास्थानं निवेशितानि सुस्थिराणि स्वतन्त्राणि जतानि तदा मानवपिण्डस्य समुत्पत्तिःसमारब्धा।

## आर्याणामादिनिवासस्थानम्

आर्याणामादिनिवासस्थानसम्बन्धे पौर्वात्य-पाश्चात्यविदुषां महानस्ति मतभेदः, विभिन्नै विद्वद्भिः विभिन्नान्यनुमानानि कृतानि। इतिहासकाराणां पुरातत्त्वविदां भाषावैज्ञानिकानां जनविज्ञानवेतॄणां प्रागैतिहासिकानां च स्व-स्वदृष्टिभिः विभिन्ना मान्यताः सन्ति। एवं विभिन्नमतानुसारं योरपसिरिया-मध्यएशिया-उत्तरीध्रुव-पामीरपठार-भारत-काश्मीर सिन्धुप्रदेशार्यावर्तादिदेशा मानवानामादिनिवासस्थानानि स्वीकृतानि सन्ति, किन्तु किमपि मतं नाद्यावधि सर्वग्राह्यं जातम्। तत्र—

वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः।
मनसः पूर्वसृष्टा वै जाता यत्तेन मानसाः॥ =म० पु० ३।५

एषु प्रथमो महर्षिर्मरीचिरुत्पन्नः तदनन्तरमृषिप्रवरोऽत्रिरजायत। ततोऽङ्गिरा मुनिः समुत्पद्यत। तत्पश्चात् पुलस्त्योत्पत्तिरभवत्। तदनु क्रमशः पुलह-क्रतु-प्रचेतोवसिष्ठ-भृगु-नारदानामाविर्भावो जातः। एवं ब्रह्मण इमे दश मानसपुत्रा अजायन्त—

मरीचिरभवत् पूर्वं ततोऽत्रिर्भगवान् ऋषिः।
अङ्गिराश्चाभवत् पश्चात् पुलस्त्यस्तदनन्तरम्॥
ततः पुलहनामा वै ततः क्रतुरजायत।
प्रचेताश्च ततः पुत्रो वसिष्ठश्चाभवत् पुनः॥
पुत्रो भृगुरभूत्तद्वन्नारदोऽप्यचिरादभूत्।
दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत्॥ =म०पु०३।६-८

एवं ब्रह्मणः शरीरात्तत्तदङ्गेभ्यो नव अङ्गजा पुत्रा अभवन्, एतदतिरिक्ता दशमी चैका अङ्गजा कन्याऽपि सरस्वती समुपन्ना तथा हि—

एते नव सुता राजन्! कन्या च दशमी पुनः।
अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता॥=म० पु० ३।१२

वायुपुराणेऽपि ब्रह्मणो मानसान् पुत्रानुक्त्वा तेषु भृग्वादयो नव ब्रह्मवादिनो गृहस्थाश्चोक्ताः, यैरेव प्रथमं धर्मस्य प्रवर्तनं कृतम्—

अथान्यान् मानसान् पुत्रान् सदृशानात्मनोऽसृजत्।
नव ब्रह्मण इत्येते पुराणे निश्चयं गताः॥ =९।९९

अपि च पुराणेषु चतुर्धा प्राणिनो वर्णिताः सन्ति-असुराः, सुराः, पितरो मनुष्याश्च। तत्रादौ सृष्टिकामनया दत्तावधाने ब्रह्मणि यदा प्रथमं तत्र तमोगुणस्याधिक्यमजायत, तदा तस्योरस्तोऽसुरा उत्पन्नाः। तेषामुत्पत्त्यनन्तरं तेन तत् तामसिकं शरीरं परित्यक्तं यत्तत्काले रात्रिरूपेण परिणतम्। ततः सात्त्विके शरीरे गृहीते ब्रह्मणो मुखात् सात्त्विकाः सुराः सञ्जाताः, तदनु प्रजापतिना ब्रह्मणा परित्यक्तं तच्छरीरं दिनरूपेण परिणतम्। तदनन्तरं तेनांशिकसात्त्विकमयं देहं धृत्वा पितॄनुत्पादयामास। ततः तत्परित्यक्तं शरीरं दिवानिशामध्यवर्तिनी सन्ध्या समजनि। पश्चात्तेन रजोमय देहमाश्रित्य रजःप्रधानानां मानवानां सृष्टिः कृता। तद्द्वारा परित्यक्तं तच्छरीरं ज्योत्स्ना (प्रभातकाल) रूपेण परिणतम्। एवं चतुर्विधप्राणिवर्गस्य सम्बन्धः चतुर्भिः कालविभागैः सहाजायत।

अतस्तेषां बलशालिता तेष्वेव कालेषु दृश्यते—असुराणां सम्बन्धो रात्रितः, सुराणां दिनतः, पितॄणां सायंसन्ध्याकालतः मनुष्याणाञ्च प्रातःकालतो विशेषः सम्बन्धोऽस्ति ।

ब्रह्मणा निर्मितस्य स्थावरजङ्गमात्मकस्य जगतः इदं वैशिष्ट्यं विद्यते, यत् पूर्वकल्पे येषां यः स्वभावः, यादृशी प्रवृत्तिः, यादृशं च कर्म भवति, तानि सर्वाणि तैः तादृशान्येव प्राप्यन्ते । अतो हिंसा-मृदुता-कठोरता-धर्माधर्म-सत्यानृतादि सर्वं स्वभावानुसारमेव प्राणिभिः प्राप्यते, तथा तेभ्यो जीवेभ्यः तदेव रोचते च । तथाचोक्तं विष्णुपुराणे—

> तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
> तान्येव ते प्रपद्यन्ते सृज्यमाना पुनः पुनः ॥
> हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मानृतानृते ।
> तद्भाविताः प्रपद्यन्ते तस्मात् तत्तस्य रोचते ॥ = १।५।६०-६१

एवं ब्रह्मणः सृष्टि पूर्वं मानसिकी एव भवति । स शरीरसंयोगपूर्वकं वैजी सृष्टिं न कुरुते, किन्तु जीवाना पूर्वजन्मसु कृतानि कर्माणि आत्मीयज्ञानशक्त्या ज्ञात्वैवेतानुत्पादयति । पुराणदृष्टौ कर्मानुसारमेव सृष्टिर्जायते । अतो ब्रह्माणि पर्यन्यवत् क्रौर्यं साम्यं वैषम्यं वा दोषो न समारोपयितु शक्यते । इदं हि पौराणिकं तथ्यं भारतीयदर्शनस्य सुचिन्तितपरम्पराया अनुकूलमेवास्ति । एतेन विश्लेषणेन भागवतानां समन्वयदृष्टेः पूर्णः परिचयः प्राप्यते । विस्तारज्ञानाय पुराणानापरायणं कर्तव्यम् ।

अन्यशास्त्रेषु वर्णितं विद्यते, यद् यदा पृथिवीयं मनुष्यवासयोग्या समजनि, चतुर्दश भुवनानि च यथास्थानं निवेशितानि सुस्थिराणि स्वतन्त्राणि जतानि तदा मानवपिण्डस्य समुत्पत्तिःसमारब्धा ।

## आर्याणामादिनिवासस्थानम्

आर्याणामादिनिवासस्थानसम्बन्धे पौर्वात्य-पाश्चात्यविदुषां महानस्ति मतभेदः, विभिन्नैं विद्वद्भिः विभिन्नान्यनुमानानि कृतानि । इतिहासकाराणां पुरातत्त्वविदां भाषावैज्ञानिकानां जनविज्ञानवेत्तॄणां प्रागैतिहासिकानां च स्व-स्वदृष्टिभि विभिन्ना मान्यता सन्ति । एवं विभिन्नमतानुसारं योरपसिरिया-मध्यएशिया-उत्तरीध्रुव-पामीरपठार-भारत-काश्मीर सिन्धुप्रदेशार्यावर्तादिदेशा मानवानामादिनिवासस्थानानि स्वीकृतानि सन्ति, किन्तु किमपि मत नाद्यावधि सर्वग्राह्यं जातम् । तत्र—

(१) प्राचीनभारतवर्षीयाः विचारका विपश्चितस्तु अनादिकालत एव मन्यन्ते, यद् आर्याणामादिनिवासस्थानं भारतवर्षस्यैव विन्ध्य-हिमालययोः पूर्वपश्चिमसमुद्रयोश्च मध्यवर्ती सप्तसिन्धो. पवित्रतमो भूभागोऽस्ति, यत्र ब्रह्मावर्त-आर्यावर्तप्रदेशौ समाविष्टौ स्तः[१]।

(२) वैदेशिकाना विपश्चितां कथनमस्ति यत् प्रथममार्याणां निवासो योरेपे आसीत्। तेषां कथनानुसारं योरपवर्तिनो यूरालपर्वतादारभ्यातलान्तिकमहासागरपर्यन्तं महति विस्तृते विशाले भूभागे आर्यजातेः तद्भाषायाश्च विकासो जातः। तत्र नाधिकमौष्ण्यं, न वा शीत वर्तते, न चोच्चावचा पर्वता विद्यन्ते, नापि तत्र मरुस्थलमस्ति, न वा घोरं जङ्गल वर्तते। सैव मानवाना निवासयोग्या समतला भूमिरासीत्। तत्रैव निवसतामार्याणा दलानि निर्गत्य चतुर्षु दिक्षु व्याप्तानि। मतस्यास्य समर्थका आसन् भाषाविदो योरोपीया विद्वांसः लाथमक्यूनोप्रभृतय। यद्यपि योरोपे आर्याणामादिस्थानं योरोपिना कृते गौरवस्य विषय आसीत् तथापि मतमिदमधिकदिन न प्रचलितम्।

(३) योरपनिवासिनोऽधिकाशा विद्वांसो मध्यएशियामार्याणामादिदेशं मन्यन्ते। तन्मते इत एवार्याणा दलद्वय प्रचलितम्। तत्रैकं दलं पश्चिमे प्रचलितम् द्वितीयश्च दल पूर्वस्यामग्रेसरत्। भाषाविज्ञानस्याधारेण वेदावेस्तयोः भाषा प्राचीनतमामार्यभाषा मत्वा मैक्समूलरेण[२] एतस्य मतस्य समर्थन महताटोपेण कृत भाषाविज्ञानस्यान्यैरपि विद्वद्भिरनुमादेन विहितम्। मध्यएशियावादस्य मतस्य परिपुष्टये एभिः ऋग्वेदस्यान्वेषण कृत्वा कियता मन्त्राणामाधारेण निश्चित यद् आर्या गाः पालयन्तिस्म, पशून् चारयन्तिस्म, कृषिञ्च कुर्वन्तिस्म। अत एषामादिस्थान कश्चन लम्बायमानो भूभागो भवितुमर्हति। ऋग्वेदस्य 'यस्य तरेम तरसा शतं हिमा (५।५४।१५)। इति मन्त्रे हिमशब्दस्य प्रयोगत प्रतीयते यत्तत्राधिक शीतपातो भवतिस्म। अनेकेषु मन्त्रेषु नौकाना चर्चा विद्यते। अतस्तत्र-जलाधिक्यमनुमीयते, येन नौकासन्तरणस्य सौविध्यं स्यात्। बहुषु स्थलेषु अश्वाना भूयोभूयो नाम विद्यते। अत आर्या अश्वारोहिण आसन्,घोटकैः रथमपि चालयन्ति स्म। वृक्षेषु भूर्जपत्रस्य देवदारोः पिप्पलस्य चाधिक नामायाति, नतु वटस्य आम्रस्य वा। ओषधिषु केवल यवस्य चर्चा विद्यते, सोमलताप्रशस्तिषु चानेके मन्त्रा सन्ति। एतानि समस्तानि वस्तूनि-

१. डब्ल्यू ब्रान्देस्ताइनः—इण्डियन हिस्टोरिकल क्वर्टर्ली कलकत्ता मार्च १९३७। २. मैक्समूलरः—गुड वर्ड्स अगस्त १८८७।

मध्यएशियायामेवोपलभ्यन्ते। अत एतद्वर्णनस्याधारेण योरपनिवासिनो विपश्चितो निश्चिन्वन्ति, यत् एवंभूत. प्रदेशो हिन्दुकुशपर्वतस्यापरे भागे कस्पियनसमुद्रस्याधस्तात् पामीरपर्वतस्यापत्यकैवास्ते, यत्र शैत्यमपि पतति, पशवोऽप्युपलभ्यन्ते, पाल्यन्ते च। प्रागैतिहासकाले इत एव निर्गत्य शकादिजातिभिरन्यदेशेषु आक्रमणं कृतम्। अस्मात् प्रदेशाद्भारते, ईराने, योरोपे च गन्तुं सौविध्यमपि वर्तते। अतोऽयमेव प्रदेशः आर्याणामादिनिवासो, भवितुमर्हतीति मध्यएशियावादसमर्थकाना-योरपनिवासिना विदुषामस्ति सिद्धान्तः। अपि च भारतस्य विपक्षे आपत्तिमुपस्थापयद्भि विदेशीयैरुच्यते, यद् ऋग्वेदे सिंहस्योल्लेखोऽस्ति, न तु व्याघ्रस्य। एवं तत्र मृगहस्तिनो वर्णनं विद्यते न हस्तिनः। व्याघ्र-हस्तिनौ च भारतस्य विशिष्टौ जन्तू स्त., यौ मध्यएशियायां न भवतः। अतो निश्चितरूपेणार्याणां मूलभूमि र्भारतं नास्ति।

(४) लोकमान्यतिलकेन पाश्चात्यमत मध्यएशियावादं खण्डयता वैदिक-ज्यौतिषशास्त्रगणनाधारेण मार्गशीर्षे वसन्तसम्पातस्य साधकानि बहूनि वेदवाक्यानि संगृह्य साधयितुं प्रयासः कृतो यदार्याणां मूलं निवासस्थानमादौ उत्तरीध्रुवे कटिबन्धप्रदेश एवासीत्। तत्र रमणीयको भूप रमरश्चिरवसन्तश्चासीत्। बहुवर्षानन्तरमधिकहिमपातेनाच्छन्नत्वादय-प्रदेशः स्थातुमयोग्यो जातः। अतस्तं प्रदेशं परित्यज्यार्यैरितस्ततः प्रयातम्[१]। तिलकमतसमर्थकेषु प्रमुखा.-एम० डी० सपोरटा[२]-मेडलीकट-ब्लेन्कर्ड[३]-डा० इसाकलेटरा[४] सन्ति। (५) अन्वेरुणिमतानुसार प्राचीन काले आर्याणां निवासो हिमालये आसीत्[५]। (६) प्रो॰ डानस्य भौगोलिक-दृष्ट्या दक्षिण-पश्चिम एशियातोऽन्यत् स्थान नास्ति आर्याणामुपयुक्तम्[६]। (७) क्रुजरमाहवस्य मते मानवजातेः मूलस्थानस्यादिसभ्यतायाः लीलाक्षेत्रं च भारतवर्षमेवास्ति। यस्योल्लेख पावगीमहोदयेन स्वकीये ग्रन्थे कृतोऽस्ति[७]। (८) कं० मा० मुशीमहोदयो भारत्यां सप्तसिन्धवमार्या-वर्तस्यैव नामान्तरं मन्वान तदेवार्याणां निवासभूमिं स्वीकरोति[८]।

---

१. दि ओरायन पृ० २०६, २००, १८६३।
२. हिस्ट्री लिटरेचर पृ० ६३१–६३३।
३. मेनुअल आफ जेमोलाजी आफ इण्डिया पृ० २२।
४. दि ओरिजन आफ दि आर्यन्स पृ० २०१। (द्वितीय संस्करण)
५. अल्बेरुनी का भारत पृ० ७५।
६. आई० वी० आई० डी० पृ० ५८५, ५८६।
७. दि आर्यावर्तिक होम एण्ड दि आर्यन क्रेडल इन दि सप्त सिन्धुज, (हिन्दी अनुवाद) पृ० ७३।
८. भारती पत्रिका, बम्बई, सितम्बर १६५६।

(६) एतदतिरिक्तैः विधानचन्द्रराय[1] वैद्य[2] मैकडानल-सरविलियमजोन्सप्रभृति[3] भिर्विद्वद्भिरार्यावर्त एवार्याणामादिदेशो मन्यते। एषु विभिन्नेषु मतेषु सत्स्वपि मध्य एशियावादस्यैव पाश्चात्यदेशेषु मान्यता जाता। भारतेऽपि तात्कालिकसर्वकारेण एतदेव मतं स्वीकृतम्। अतः सर्वकारीयशिक्षाविभागेऽस्मै एव मताय मान्यता दत्ता। परिणामतो लघुविद्यालयादारभ्य विश्वविद्यालयपर्यन्तमियमेव शिक्षा समारब्धा यद् आर्या भारतस्यादिनिवासिनो न सन्ति। एते मध्यएशियात एवागत्य भारतमाक्रम्य शनैः शनैरत्रत्या द्रविणा स्वाधीनीकृतास्तेषां स्थानं च स्वायत्तीकृतमतो भारतस्यादिनिवासिनो द्रविणा दक्षिणे पलायिताः। अत आर्या हिन्दवः सन्ति दस्यवः। सर्वथापसिद्धान्तस्य दूषितस्यास्य मतस्य कुपरिणामो जातो यत् शिक्षिता भारतीया अपि इदमेव ज्ञातवन्तो यद् हिन्दूनां पूर्वजा अपि बाह्यतोऽत्रागताः। अतो हिन्दूजातिरपि तथैव विदेशिया अस्ति यथा यवना आंग्लाश्च विद्यन्ते।

महतो हर्षस्यास्ति विषयो यत् डा० सम्पूर्णानन्दमहोदयेन 'आर्यों का आदिदेश, इति नामके स्वकीये पुस्तके वैदिकैः प्रमाणैः तर्कपूर्णयुक्तिभिश्च सिद्धान्तितो यदार्या न कुतोऽपि बाह्यतः समागताः, किन्तु भारतवर्षमेवैषामादिमं स्थानमस्ति। अत्रैवार्यसंस्कृतेर्विकासो जातस्तथा सर्वप्रथममार्यजातेरुदयोऽभ्युदयश्चात्रैव जातोऽस्ति। ऋग्वेदे सप्त सिन्धूनां महिमा विशेषरूपेण गीतोऽस्ति। अतः सप्तसिन्धव एव आर्याणां प्रियतमाः देशाः सन्ति। सप्तसिन्धूनां तटेष्वेवार्याणां ग्रामादि, पूतात्मनामृषीणां महर्षीणाञ्च पावनानि तपोवनादीन्यासन्। इत एवाध्यात्म-दर्शन-ज्ञान-विज्ञानादिसूर्यस्योदयं भूत्वा समस्ते भूमण्डले प्रकाशो जातः। ऋग्वेदानुसारमार्या आदिकालत एवात्रैव निवसन्तिस्म, तेषां संस्कृतेरुदयोऽभ्युदयो विकासश्चात्रैव जातः। अत्रैव मानवजन्मनः परमलक्ष्यस्य नैःश्रेयसस्य शिक्षा दीक्षा चाभवत्। वेदेषु नास्य कुत्रापि कश्चन सङ्केतो मिलति, यदत्र निवासिनामार्याणां हिन्दूनां पूर्वजाः पूर्वं कुत्राप्यन्यत्र निवसन्तिस्मऽ यतो यवनांग्लवदत्र समागताः। यद्यस्मिन् विषये किमपि तथ्यं स्यात्तर्हि अस्य सङ्केतः क्वचनावश्यं स्यात्। एतादृशे वेद-ब्राह्मणारण्यकोपनिषत्स्मृति-पुराणोपपुराण-महाभारत-गद्य पद्य-काव्य-नाटक चम्पूप्रभृतिके सर्वतो विशाले संस्कृतवाङ्मये एवमत्यावश्यकविषयस्योपेक्षा

---

१. निबन्ध—ऋग्वेदोक्त आर्यनिवास का भौगोलिक विवरण-गंगा, पुरातत्त्वाङ्क।

२. चि० म० वि० वैद्यः—वेद में प्राचीन आर्यनिवास-गंगा, वेदाङ्क।

३. इन्साइक्लोपीडिया ब्रिटेनिका वॉ० १० पृ० ३६६।

न कदापि सम्भवति। अत आर्या. हिन्दवोऽनादिपरम्परया अद्यत्वेऽपि स्वकीयमादिनिवासस्थानमत्रैव मन्यन्ते। अतः सप्तसिन्धव एवैषामार्याणामस्ति मूल निवासस्थानम्।

भारतीयानामादिजीवने गभीरतापूर्वक विचारकर्तृषु विद्वत्सु लोकमान्यतिलक नारायण-भवनराय पावगी - डा० अविनाश चन्द्र दास-प० भगवद्दत्त-डा० सम्पूर्णानन्दानां नामान्युल्लेखनीयानि सन्ति।

सृष्ट्यारम्भे ब्रह्मदेवेन समारब्धः सृष्टियज्ञः कस्या वेद्या सम्पन्न इति जिज्ञासाया शतपथब्राह्मण स्पष्टं निर्दिशति, यद् आदिसृष्टि कुरुक्षेत्रे एवाजायत। अतः कुरुक्षेत्रं हि देवाना देवयजनम्। ( सृष्टिरूपयज्ञस्य सम्पादनस्थानम्) उच्यते। 'तस्मादाहु कुरुक्षेत्रं देवानां देवयजनम्' (श० ब्रा० १४।१।१।२) महर्षिणा मनुनाऽपि मनुस्मृतौ कुरुक्षेत्र मानवसभ्यताया आदि स्रोत: स्वीकुर्वताऽन्यदेशनिवासिभिरत्रोत्पन्नेभ्यो ब्राह्मणेभ्यः स्व-स्व-चरित्रस्य शिक्षा ग्रहीतुमादेशो दत्तोऽस्ति—

> एतद्देश-प्रसूतस्य सकाशादग्रजन्मनः।
> स्व स्व चारित्र शिक्षेरन् पृथिव्या सर्वमानवाः॥ = २।२०

अपिच कुरुक्षेत्रं ब्रह्मावर्तसम पवित्रं मन्यमानेन मनुना वर्णाश्रमिणे द्विजवर्गायात्रैव निवासस्य निर्देश कृतोऽस्ति। मनोर्दृष्टौ समस्तपृथिव्यपेक्षया आर्यावर्तं तदपेक्षया मध्यप्रदेश तदपेक्षया च ब्रह्मावर्तं परम पवित्रं विद्यते। अतो भारतीयैर्वेद-स्मृति-पुराणपरम्पराविद्भिर्विद्वद्भिरार्याणामदिनिवासस्थानमेतद् भारतवर्षमेव मन्यते। पुराणेषु सृष्टेरादि-पुरुषस्य स्वायम्भुवमनोरादिनिवासस्थानं सुपुनीते सरस्वतीतटसमीपे ब्रह्मावर्ते एवोक्तमस्ति। स्वायम्भुवो मनुर्हि आदित एव ब्रह्मावर्ते निवसन् सप्तसागरद्वीपाया समस्ताया वसुन्धरायाः शासनं करोतिस्म[1]। किञ्च स्वायम्भुवात् मनो शतरूपाया द्वौ पुत्रौ समुत्पन्नौ प्रियव्रतः उत्तानपादश्च, तावपि यथाधर्मं सप्तद्वीपवती मही शशासतु.[2] 'अपिच ब्रह्मणा प्रजोत्पत्यर्थमादिष्ट कर्दम ऋषि पवित्रे सरस्वती नदीतटे सहस्रवर्षपर्यन्तं तपश्चचार[3]। आदिराज्ञो मनोरावासस्थाने ब्रह्मावर्ते यत्र सरस्वती प्रवहति,

---

१ प्रजापतिसुत सम्राण्मनु विख्यातमङ्गल।
ब्रह्मावर्तं योऽधिवसन् शास्ति सप्तार्णवा महीम्॥ = श्री० भा० ३।२१।२५

२. प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै।
यथाधर्मं जुगुपतु सप्तद्वीपवती महीम्॥ = श्री०भा० ३।२१।२

३. प्रजा सृजेति भगवान् कर्दमो ब्रह्मणोदित।
सरस्वत्यां तपस्तेपे सहस्राणा समा दश॥ = श्री० भा० ३।२१।६

तत्र राज्ञा पृथुना दीक्षापूर्वकं शतमश्वमेधयज्ञाः कृता.,। महाराजात् पृथोः पूर्वमस्यां भूमौ नगरग्रामादिव्यवस्था नासीत्। तेन स्वधनुषः कोट्या पर्वतशिखराणि विदार्य सञ्चूर्ण्य च पृथ्वी निवासयोग्या कृषियोग्या च समतला कृता[1] प्रबलैरेभिः पौराणिकैः प्रमाणैरपि स्पष्टं प्रतीयते यद् मानवसृष्टेरादिपुरुषो भगवान् मनुः तथा तत्कालीना ऋषयो महर्षयश्च भारतवर्षस्यैतेष्वेव पुनीतेषु स्थलेषु निवसन्तः तपस्यन्तश्च मानवसृष्टि-कार्ये सफला बभूवुः। अतो महाभारते पुराणेषु चैतस्य देशस्य महिम्नो महद् गुणगान कृतमस्ति। कुरुक्षेत्रस्य वर्णनप्रसङ्गे महाभारते लिखित-मस्ति यद् ये नराः सरस्वती-दृषद्वत्यो र्मध्यवर्तिनि कुरुक्षेत्रे निवसन्ति ते स्वर्गे एव निवसन्ति। एतेन कुरुक्षेत्राय स्वर्गस्य मान्यता प्रदत्ताऽस्ति[2] त्रिषु लोकेषु भारतवर्षमेव सर्वश्रेष्ठं पुण्यप्रद च कर्मक्षेत्रमभिमतं विद्यते।[3]

अनेकयोनिषु जन्मग्रहणानन्तरं कदाचित् पूर्वजन्मकृतपुण्यवशाज् जीवस्य अस्मिन् पवित्रतमे भारतवर्षे मानवजन्म जायते[4] वायुवेगे-नोड्डीयमानः कुरुक्षेत्रस्य धुलिरपि महापातकिने सद्गतिं प्रददाति।[5]

स्वर्गस्थिता अपि देवा इदं गायन्ति यत् ते जीवा धन्यतमाः सन्ति, ये देवदेहत्यागानन्तरं स्वर्गापवर्गयोः साधनभूतायां भारतवर्षे मानव-योनौ जन्म गृह्णन्ति। तदुक्तं गरुडपुराणस्य प्रेतकल्पे।[6]

अत एव ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे हिमालयाद् दक्षिणसमुद्रपर्यन्तं पुण्यक्षेत्रं भारतवर्षं सर्वस्थलेषु श्रेष्ठतम मुनीनाञ्च तपः स्थलमुक्तमस्ति—

१. प्राक् पृथोरिह नैवेषा पुरा ग्रामादिकल्पना।
 यथादीक्षन राजा तु हयमेधशतेन स.।
 ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती॥ = श्री० भा० ४।८।३२

२. दक्षिणेन सरस्वत्या दृषद्वदुत्तरेण च।
 ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे॥ = वन०पर्व० ८३।४

३. त्रैलोक्ये भारतं धन्यं कर्मक्षेत्रञ्च पुण्यदम्। = ब्र० वै० ४।५२।४०

४. अत्र जन्म सहस्राणां सहस्रैरपि सत्तम।
 कदाचिल्लभते जन्तु र्मानुष्यं पुण्यसञ्चयात्॥ = वि० पु० २।१।२४

५. पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः।
 अपि दुष्कृत-कर्माणं नयन्ति परमां गतिम्॥ = म० भा० ७।१।३

६. गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे।
 स्वर्गापवर्गस्य फलार्जनाय भवन्ति भूयः पुरुषाः सुरत्वात्॥१।६

हिमालयादासमुद्रं पुण्यक्षेत्रं च भारतम् ।
श्रेष्ठं सर्वस्थानानां च मुनीनां च तपः स्थलम् ।।

अपि च मत्स्यपुराणे लिखितमस्ति यद् बुधादिलायामुत्पन्न. चन्द्रवंश-प्रतिष्ठापको धर्मिष्ठो राजा पुरूरवाः सकललोकवन्दितो मान्यश्च प्रतिष्ठान-पुरे तिष्ठन् धर्मेण प्रजा पालयन् सप्तद्वीपवती मही सम्यक् सशास—

इलोदरं तु धर्मिष्ठं बुधः पुत्रमजीजनत् ।
पुरूरवा इति ख्यात. सर्वलोकनमस्कृतः ।।
सप्तद्वीपा वसुमती सशैलवनकानना ।
धर्मेण पालिता तेन सर्वलोकहितैषिणा ।। = म० पु० २४।९.१३

किञ्च राज्ञो नहुषस्य पुत्रो राजा ययातिरपि सप्तद्वीपा पृथिवी विजित्य पञ्चधा विभज्य पञ्चभ्यः स्वपुत्रेभ्य प्रदत्ता । ते पश्चापि पितुः प्राप्ता सकला वसुन्धरा यथाभाग धर्मपूर्वकं पालयामासुः । सूर्यवंशी चक्रवर्ती राजा मान्धाताऽपि निखिलं भूमण्डलं प्रसशास—

सप्तद्वीपा ययातिस्तु जित्वा पृथ्वी ससागराम् ।
व्यभजत् पञ्चधा राजा पुत्रेभ्यो नाहुषस्तदा ।।
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेश धर्मज्ञै धर्मेण प्रतिपालिता ।। = वा०पु० ९३।९०-९१
यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनी प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युत तेजसा ।।
यावत्सूर्य उदेतिस्म यावच्च प्रतितिष्ठति ।
सर्वं तद् यौवनाश्वस्य मन्धातुः क्षेत्रमुच्यते ।। = श्री०भा० ९।१६।३४

किञ्च प्रकृते पूर्णविकास एव सृष्टेः प्रादुर्भावस्य मुख्य कारणं विद्यते । तथा च प्रकृते पूर्णो विकासो भारते एवोपलभ्यते तत्रापि कुरु-क्षेत्रे । विश्वस्य विभिन्नेषु प्रदेशेषु स्त्री-पुरुषौ प्रायः एकरूपौ प्राप्येते, किन्तु भारतवर्षे अनेकवर्णा मानवा मिलन्ति । यदि मद्रासे उत्तमोत्तम-शालग्रामशिलावत् श्यामलवर्णा स्त्री-पुरुषाणा मूर्तय उपलभ्यन्ते, तर्हि भूस्वर्गे काश्मीरे कर्पूरकायेभ्य आंग्लेभ्योऽप्यधिकगौरवर्णा व्यक्तयो दरीदृश्यन्ते ।भारते विविधवर्णाना स्त्री-पुरुषाणामुपलम्भात् कूर्मपुराणे लिखितमस्ति, यद् भारतवर्षे विविधवर्णा स्त्री-पुरुषाश्च भवन्ति । अपिच एते विविधाना देवानामर्चनपरायणाः सन्तो विविधानि कर्माणि कुर्वते—

भारते तु स्त्रियः पुंसो नानावर्णा प्रकीर्तिताः ।
नाना देवार्चने युक्ता नाना कर्माणि कुर्वते ।। = कू० पु० उ०४।।२१

ऋतुपरिवर्तनं हि प्रकृते नियन्त्रणेन जायते। यत्रान्येषु देशेषु वर्ष-पर्यन्तमेक एव ऋतुः तिष्ठति, तत्र भारतवर्षे यथासमयं षण्णां ऋतूनां विकासो भवति। अतः प्रतीयते यद् भारतवर्षे प्रकृतेः पूर्णो विकासो जायते। किञ्च खगोलविषयकगतिविधिं विज्ञातुं यस्या भूमध्यरेखाया उपयोगः क्रियते, सा रेखा—पुरीरक्षसां देवकन्याथ काञ्ची'''कुरुक्षेत्रमध्ये भुवो मध्यरेखा, इत्यनुसारं लङ्का-कन्याकुमारी-काञ्जीवरं च स्पृशती कुरु-क्षेत्रो परितः प्रयाति। अतो भारतेऽन्यदेशापेक्षया कुरुक्षेत्रे समये समये सर्वेषां ऋतुनां जायते पूर्णो विकासः। अतएव आदिसृष्टिः भारतवर्षस्य कुरुक्षेत्रे जातेत्यत्र न भवितुर्हति काचिद् केषाञ्चिदपि विप्रतिपत्तिः। तस्माद्भारतवर्षमेवास्ति आर्याणामादि निवासस्थानमत्रैव वेदानां विकासो जातस्तथेदमेवास्ति हिन्दूसभ्यताया भारतीयसंस्कृतेश्चादि स्रोतः। इत एव ज्ञानसूर्य उदीयान्यानपि देशान् विकासयति निरन्तरम्। अतएवास्य देशस्य प्राशस्त्यं पुराणेषु महता गौरवेण गीतमस्ति।

प्रथमत स्तुआर्याणां परस्वत्वायत्तीकरणस्य परधर्मे आक्रमणस्य पर-द्रव्यापहरणस्य प्रवृत्तिरेव नासीत्। अत एवास्माकमादर्शभूतो राजा मर्या-दापुरुषोत्तमो भगवान् श्रीरामचन्द्रो वालिनं निहत्य तद्भ्रात्रे सुग्रीवायैव तद्राज्यं प्रदत्तम्, स्वर्णमय्याः लङ्काया अधिपतिमत्याचारिणं रावणमपि हत्वा तद्भ्रात्रे विभीषणाय तद्राज्यं समर्पितम्, नाणुमात्रमपि ततो गृही-तम्। लीलापुरुषोत्तमो भगवान् श्रीकृष्णोऽपि दुष्टस्य कंसस्य वधं विधाय तत्पितरमुग्रसेनं जरासन्धवधं कृत्वा तत्पुत्रसहदेवञ्च तयो राज्येऽभिषिक्त-वान्। अत एव न्यायप्रियाणामार्याणां वाह्यत आगमनाक्रमणयोः साध-नाय पाश्चात्यानां प्रयासः सर्वथा कपोलकल्पितो भ्रममूलकोऽज्ञान विजृम्भणत्वादस्ति नूनमुपेक्ष्यश्च। वस्तुतो वैदिका ऋषयो महर्षयः तत्सन्ततयश्च आर्या भारतवर्षप्रसूता एव सन्ति, नागन्तुका विद्यन्ते ते। तेषामागन्तुकत्वे प्रमाणाभावः। अतो वैदिका आर्या मूलतो भारतवर्ष-निवासिन एव विद्यन्ते इत्यत्र न कस्यचन संशयस्य गन्धोऽपि वर्तते।

अतएव भारतस्य प्राचीनतां पर्यालोचयता मेगस्तनीजेनोल्लिखित-मस्ति, यद् भारतेऽग्णिता जातयो निवसन्ति स्म। एता मूलरूपे न विदेशिया, अपितु भारतीया एवासन्। भारतस्य वहिः प्रदेशादागत्य न काऽपि जातिरत्रावसत्। द्रष्टव्यम्-एम० क्रिण्डलः-एँश्येन्ट इण्डिया मेगस्तनीज एण्ड आर्यन्स पृ० १७५।

---

कस्यापि देशस्य समाज-राजनीति-धर्म-कर्मादिसांस्कृतिकजीवनस्याध्ययनाय तस्य देशस्य भौगोलिकं ज्ञानं परमं प्रयोजनीयं भवति। यथार्थभौगोलिकज्ञानस्याभावे कस्यापि विशिष्टदेशस्य समाज-राजनीति-धर्मादिसांस्कृतिकजीवनस्य सम्यक् परिचयप्राप्तिः सर्वथाऽसम्भावाऽस्ति। पुराणेषु समस्ते भूवलये स्थितानां देशानां तत्रत्यनिवासिनामाचार-विचार-व्यवहार-स्वभाव-सभ्यता-संस्कृति-प्रभृतीनां वर्णनं विद्यते। अतः पुराणेषु चित्रितानां लोक-राष्ट्र-प्रजा-वन-पर्वत-नद-नदी-ग्राम-नगरादीनां वर्णनं भौगोलिकपरम्परायै परमोपयोगि मन्यते।

पुराणानां भौगोलिकं क्षेत्रमत्यन्तं विस्तृत मानवबुद्ध्यगम्यं वर्तते। अत आधुनिकदृष्टविचारधारायामिदं कल्पनातीत प्रतीयते, परमेतद्विवेचनाय तत्कालीनपौराणिकदृष्टिरवश्यमपेक्षिताऽस्ति। पौराणिकदृष्टेरभावे तस्य यथार्थता उपयोगिता वा नावगता भवितुमर्हति।

## भुवनकोषविवरणम्

सन्ति पुराणानुसारमनन्तानि ब्रह्माण्डानि, तत्र प्रत्येकब्रह्माण्डे चतुर्दश भुवनानि भवन्ति। तानि च चतुर्दश लोका अप्युच्यन्ते, येषु सप्त लोका उपरि वर्तन्ते, सप्त चाधः सन्ति। तेषु पृथिवीत आरभ्य भूः, भुवः, स्वः, मह, जनः, तपः, सत्यञ्चेति सप्त लोका उपरि विद्यन्ते। अधस्ताच्च सन्ति-अतल-वितल-सुतल-तलातल-रसातल-महातल-पातालाख्याः सप्त लोकाः। ऊर्ध्वलोकेषु देवानामधस्ताच्च आसुराणां निवासो वर्तते—

> भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा।
> जनस्तपस्तथा सत्यमेतावान् लोकसंग्रहः॥ = वा० पु० ४६।१५०
> अतलं सुतगान् ब्रह्मा ततोऽधो वितलं द्विज।
> ततोऽधः सुतलं चैव ततोऽधश्च तलातलम्॥
> महातलमधस्तस्मात् ततोऽधश्च रसातलम्।
> तस्मादधश्च पातालं लोकानेव यथाक्रमम्॥ = प० पु० ७।२।१२

देवराजस्य इन्द्रस्य राजधानी स्वर्गलोके, असुरराजस्य च बलेः राजधानी पाताललोके विद्यते। एवमेव चतुर्दशानां लोकानामनेके अन्तर्विभागा अपि वर्तन्ते। यथा किल भुवर्लोकस्य अन्तर्विभागा गन्धर्वलोकादयः सन्ति तथैव भूलोकस्यापि मृत्यु-पितृ-प्रेत-नरकनामकाः

चत्वारो लोका अन्तर्विभागरूपेण वर्तन्ते। मृत्युलोकोऽयं चतुर्दशानां भुवनानां केन्द्ररूपोऽस्ति। अत्रैव जीवा मातृगर्भाज् जन्म लभन्ते। मृत्युलोके एव समुत्पद्य सर्वैः जीवैः स्वस्वशुभाशुभकर्मभोगानन्तरं नूतनानि शरीराणि संगृह्यन्ते। यतो हि मृत्युलोकोऽयं कर्मभूमिः, अत्रैव स्वातन्त्र्येण विविधानि शुभाशुभकर्माणि विधातुं सौकर्यं विद्यते। देवाः असुराश्च स्वस्वलोकेभ्यः अग्रे गन्तुं न प्रभवन्ति, किन्तु प्राणिनः अत्रैव मृत्युलोके जन्म आसाद्य भूयः सत्कर्मानुष्ठानद्वारा लोकान्तरेषु गन्तुं शक्नुवन्ति। अस्मादेव कारणादत्र ब्रह्माण्डे मृत्युलोकस्य प्राधान्यमस्ति।

मृत्युलोको हि उपरिवर्तमानानां सप्तलोकानामन्यतमस्य भूलोकस्य चतुर्थो भागः। अत्रत्या जीवा मातृगर्भादुत्पद्यन्ते मृत्युमपि प्राप्नुवन्तीति हेतोः अयं मृत्युलोक इति उच्यते। किञ्च मृत्युलोकप्रभवाः प्राणिनः स्वकीयकर्मपरवशाः सन्तो मृत्योरनन्तरं आतिवाहिकेन शरीरेण दैवसाहाय्यमवाप्य देवलोकेषु गच्छन्ति। तत्र स्वस्वकर्मानुसारं केचन स्वर्गलोके विविधं स्वर्गीयसुखमुपभुञ्जते। केचिच्च नरकलोके पापकर्मपरिणाममनेकप्रकारकं दुस्सहं दुःखमनुभवन्ति। मृत्युलोकादपरे त्रयो लोकाः देवलोकाः कथ्यन्ते। तेषु देवपिण्डधारिणो देवाः निवसन्ति, मानवपिण्डधारिणो मनुष्याः तान् द्रष्टुं न प्रभवन्ति, यदि तेषामनुग्रहो भवेत्, तदा द्रष्टुं शक्नुवन्ति। देवलोका अस्माकं मानवलोकादतीताः सूक्ष्माश्च सन्ति। तत्र यथा देवा देवपिण्डानि बिभ्रति, तथैवासुरा अपि देवपिण्ड दधति। तत्र विशेषस्तु एतावानेव वर्तते यद् आत्मोन्मुखवृत्तिप्रधाना देवाः इन्द्रियोन्मुखवृत्तिमुख्याश्च असुरा भवन्ति। अतएव समये समये देवलोके प्रायो देवासुरसङ्ग्रामो बोभवीतितमाम्। तत्रोन्नतिकारिणो देवा न कदाचिदसुराणामधिकारमपहर्तुमिच्छन्ति, स्वाधिकारे एव ते सन्तुष्यन्ति, किन्तु विषयलोलुपा असुराः सर्वदैव देवाधिकारमात्मसात् कर्तुं प्रयतन्ते। एतदेव देवासुरसङ्ग्रामस्य मूलङ्कारणमस्ति। यदा देवासुरसंग्रामेऽसुराणां विजयो जायते, पराजयश्च भवति देवानां तदाऽघटितघटनापटीयस्या ब्रह्मशक्तेः महामायाया अनुकम्पया देवानां विजयादसुराणां पराजयेन दैवराज्ये पुनः शान्तिरायाति। ततः स्वस्थतया स्थिता देवाः स्वर्गसुखमनुभवन्ति।

भूलोकस्य चतुर्षु भेदेषु प्रथमः पितृलोकः, यत्र धर्मराजापरनामधेयस्य यमस्य राजधानी संयमनी नाम वर्तते। द्वितीयो नरक-

लोकः, यत्राशुभकर्मकारिणो जीवाः फलभोगाय गच्छन्ति। तृतीयः प्रेतलोकः, यत्र मरणानन्तरं प्रेतभूता जीवाः कियत्कालं तिष्ठन्ति। चतुर्थश्चायं मृत्युलोको, यत्र वयं वसामः। अस्मिन् मृत्युलोके एव मातृगर्भाज्जीवा जायन्ते, अन्यलोकेषु अयोनिजा एव जीवाः उपलभ्यन्ते। अस्य मृत्युलोकस्य गमनागमनकेन्द्रस्थानत्वाज् जीवा पितृप्रेतनरकात्मके लोकत्रये स्वस्वशुभाशुभकर्मणां फलभोगाय बम्भ्रम्यमाणा मोक्षप्राप्तेः पूर्वं पुनः मृत्युलोके एव जन्म लभन्ते।

## भूलोकादिविवरणम्

पार्थिवजगच्चरणसञ्चारयोग्यो भूलोकोऽस्ति प्रथमः। पृथिवी-सूर्ययोर्मध्येयत्सिद्धगण-मुनिवृन्द-सेवित स्थानं विद्यतेतदस्ति द्वितीयो भुवर्लोकः। सूर्य-ध्रुवयोर्मध्ये यच्चतुर्दशलक्षयोजनस्यान्तरमस्ति तदस्ति स्वर्लोकः। भूर्भुवः स्वरिति त्रयो लोका त्रैलोक्यमित्युच्यते तयेषां संज्ञाऽस्ति कृतक इति। जन-तपः-सत्य-लोका अकृतका इति कथ्यन्ते। अनयो र्द्वयोः कृतकाकृतकयोर्मध्यो महर्लोको विद्यते, यः कल्पान्ते केवलं जनशून्यो जायते, किन्तु न सर्वथा प्रणश्यति। अत एव स कृतकाकृतक इत्युच्यते। एवं सप्तोर्ध्वलोका सप्त चाधोलोकाः सङ्कलनया एषां चतुर्दशलोकानां विस्तार एकं ब्रह्माण्डं भवति। तथाचोक्तं विष्णुपुराणे—

पादगम्यन्तु यत् किञ्चिद्वस्त्वस्ति पृथिवीमयम्।
स भूर्लोकः समाख्यातो विस्तरोऽयं मयोदितः॥
भूमि-सूर्यान्तरं यच्च सिद्धादिमुनि-सेवितम्।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम॥
ध्रुव-सूर्यान्तरं यच्च नियुतानि चतुर्दश।
स्वर्लोकः सोऽपि गदितो लोक संस्थान चिन्तकैः॥
त्रैलोक्यमेतत्कृतकं मैत्रेय! परिपठ्यते।
जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम्॥
कृतकाकृतयोर्मध्ये महर्लोक इति स्मृतः।
शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति॥
एते सप्त मया लोका मैत्रेय! कथितास्तव।
पातालानि च सप्तैव ब्रह्माण्डस्यैव विस्तरः॥ = २।७।१६-२१

नन्वेवं विस्तृतस्य ब्रह्माण्डस्य वर्णनेन को लाभ इति चेदत्रोच्यते—

श्रीमतो भगवतो विराट्स्वरूपे स्थिरं कृतं मनोऽतिसूक्ष्मे स्वप्रकाशे निर्गुणे ब्रह्मणि स्थिरं कर्तुं शक्यते। अत एव पुराणेषु भगवतो ब्रह्माण्डरूपस्य-

विराटरूपस्य वर्णनं कृतं विद्यते । वस्तुतो हि पुराणैः एवं प्रकारस्य ब्रह्माण्डस्य वर्णनं साधकानां मनांसि अवरोधयितुमेव कृतं विद्यते । अयं सर्वतन्त्र-सम्मतः सिद्धान्तोऽस्ति,यत् पूर्वं मनः स्थूले पदार्थे स्थिरं भवति । ततश्चाञ्चल्यं परिहाय शनैः शनैः सूक्ष्मे वस्तुनि स्थिरं भवति । साधकस्येदमावश्यकं कर्तव्यं भवति यत् स प्रथमं स्वकीयं मनो भगवतः स्थूले रूपे विराट्स्वरूपे स्थिरं कृत्वा सूक्ष्मे स्थिरयितुं प्रयतेत । तथाचोक्तं श्रीमद्भागवते—

श्रुत्वा सूक्ष्मं तथा स्थूलं रूपं भगवतो यतिः ।
स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेत् ॥ = ५।२६।४०

भगवतो गुणमये स्थूलरूपे आवेशितं मनो ह्यगुणे सूक्ष्मतमे आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुम् ॥ = ५।१६।३

## भूलोकस्य विभाजनम्–

पौराणिकभुवनकोशसम्बन्धिनां विचाराणामनुशीलने क्रियमाणे प्रतीयते यदस्माकं पृथिवी पुराणेषु प्रकारद्वयेन विभक्ताऽस्ति । सप्तद्वीपा पृथिवी, चतुर्द्वीपा वा । सप्तद्वीपा पृथ्वीति सिद्धान्तानुसारमस्मिन् समस्ते भूमण्डले सप्त द्वीपाः सन्तिः, ते च द्वीपा एकैकेन समुद्रेणावृताः सन्ति । एतत्कल्पनानुसारं जम्बूद्वीपः सर्वेषां द्वीपानां मध्ये विद्यते, यस्य विस्तारो लक्षयोजनपरिमितोऽस्ति । अन्ये च द्वीपाः स्वस्वपूर्वद्वीपेभ्य आयामे-द्विगुणिताः सन्ति । अयं सिद्धान्तः प्रायः प्रतिपुराणं विस्तरतो वर्णितो विद्यते, किन्तु वायु-मत्स्यपुराणयोश्चतुर्द्वीपाणामप्युल्लेखो विद्यते ।

## चतुर्द्वीपा पृथिवी—

मत्स्यपुराणं-वायुपुराणं च चतुर्द्वीपाया अपि पृथिव्या विवरणमुपस्थापयतः, तदनुसारमस्यां पृथिव्यां चत्वारो महाद्वीपाः सन्ति, ये सुमेरोश्चतुर्दिक्षु विस्तृताः सन्ति । पूर्वस्यां दिशि वर्तते भद्राश्वनामा महाद्वीपः, दक्षिणस्यामस्ति भारतद्वीपः, पश्चिमस्यां विद्यते केतुमालः, उत्तरस्याञ्च दिशि विराजते उत्तरकुरुनामको महाद्वीपः । एते चत्वारो महाद्वीपाः पद्माकारायाः पृथिव्याश्चतुर्दिक्षु विस्तृताः चतुःपद्मपत्रवद् विस्तृता विस्तरतो वर्णिताः सन्तिः ।

महाद्वीपास्तु विख्याताश्चत्वारः पत्रसंस्थिताः ।
तत. कर्णिकसंस्थानो मेरुर्नाम महाबलः ॥ = वा० पु० ३४।४६
चतुर्महाद्वीपवती सेयमुर्वी प्रकीर्तिता ।
नानावर्णप्रकारैर्हि नानावर्णैर्दलैस्तथा ॥ = वा० पु० ४१।८३

एते चत्वारो महाद्वीपा अतिमनोहराः सर्वविधैः भौगोलिकैःसाधनैः सम्पन्नाः सन्ति। प्रतिमहाद्वीपं मुख्यतयैको विशिष्टः पर्वतः, एका परमपवित्रा नदी, एकं सुन्दरं वनम्, एकः सुरम्यः सरोवरः, एको महान् वृक्षः, समाराधनार्थैको भगवदवतारश्च प्रोक्तोऽस्ति—

चतुर्महाद्वीपवती चतुराक्रीडकानना ।
चतुष्केतुमहावृक्षा चतुर्वरसरस्वती ॥
चतुर्महाशैलवती चतुरोरगसंश्रया ।
अष्टोत्तरमहाशैला तथाष्टवरपर्वता ॥ वा० पु० ४२।८०-८१

(भद्राश्ववर्षम्)
(१) पर्वतो देवकूटः
(२) नदी सीता
(३) वनं चैत्ररथम्
(४) सरोवरोऽरुणोदः
(५) वृक्षः कदम्बः
(६) अवतारो हयग्रीवः




(भारतवर्षम्)
(१) पर्वतो हिमालयः
(२) नदी अलकनन्दा
(३) वनं नन्दनम्
(४) सरोवरो मानसः
(५) वृक्षो जम्बूः
(६) अवतारः कच्छपः

(कुरुवर्षम्)
(१) पर्वतः शृंगवान्
(२) नदी सोमा
(३) वनं सावित्रम्
(४) सरोवरो महाभद्रः
(५) वृक्षो वटः
(६) अवतारो मत्स्यः

(केतुमालवर्षम्)
(१) पर्वतः पारियात्रः
( ) नदी चक्षुः
(३) वनं वैभ्राजम्
(४) सरोवरः शीतोदः
(५) वृक्षोऽश्वत्थः
(६) अवतारो वराहः

मत्स्यपुराणे वायुपुराणे च मेरुं वर्णयित्वा प्रोक्तमस्ति—

स तु मेरुः परिवृतो भुवनैर्भूतभावनैः।
यस्येमे चतुरो देशा नाना पार्श्वेषु संस्थिताः॥
भद्राश्वं भारतं चैव केतुमालं च पश्चिमे।
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः॥ = म० पु० ११३।४३,४४

चत्वारो नैकवर्णाढ्या महाद्वीपाः परिश्रुताः।
भद्राश्वभारताश्चैव केतुमालाश्च पश्चिमाः॥
उत्तरा कुरवश्चेति कृतपुण्यप्रतिश्रयाः।
सैषा चतुर्महाद्वीपा नाना-द्वीप-समाकुला
पृथिवी कीर्तिता कृत्स्ना पद्माकारा मया द्विजाः॥ = वा०पु० ४१।८४,८५

## सप्तद्वीपा पृथिवी—

सप्तद्वीपा पृथिवीति सिद्धान्तानुसारमयं भूलोकः सप्तसु द्वीपेषु विभक्तो विद्यते। तत्रैकस्य द्वीपस्यानन्तरं समुद्रः, पुनर्द्वीपः पुनः समुद्र इत्येवं क्रमेण सप्त द्वीपाः सप्त समुद्राश्च व्यवस्थिताः सन्ति। सप्तानां द्वीपानां समुद्राणां च पुराणेषु निर्दिष्टानि नामानि, यथा विष्णुपुराणे—

(१) जम्बूद्वीपः (२) प्लक्षद्वीप. (३) शाल्मलिद्वीपः (४) कुशद्वीपः (५) क्रौञ्चद्वीपः (६) शाकद्वीपः (७) पुष्करद्वीपश्च। एते सप्त द्वीपाः क्रमशः चतुर्दिक्षु सप्तभि वलयाकारै लवणसमुद्र-इक्षुरससमुद्र-सुरासमुद्र-घृतसमुद्र-दधिसमुद्र-दुग्धसमुद्र-स्वादूदकसमुद्रैरावृताः सन्ति। एकद्वीप-समुद्रापेक्षया द्वितीययो द्वीपसमुद्रयो परिमाणं द्विगुणमस्ति। एषां सर्वेषां द्वीपानां मध्ये जम्बूद्वीपोऽस्ति तथा तन्मध्येऽपि सुवर्णमयः सुमेरु-नामकः पर्वतो वर्तते—

जम्बू-प्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः॥
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः।
लवणेक्षु-सुरा-सर्पि-दधि-दुग्ध-जलैः समम्॥
जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः।
तस्यापि मेरुमैंत्रेय! मध्ये कनक-पर्वतः॥ = वि० पु० २।२।५-७

जम्बूद्वीपो हि बहिश्चतुर्दिक्षु लक्षयोजनपरिमितेन वलयाकारेण क्षार-समुद्रेण परिवृतो वर्तते। यथा जम्बूद्वीपः सर्वतः क्षारसमुद्रेण परिवृतो-ऽस्ति तथैव प्लक्षद्वीपेनापि क्षारसमुद्रः परिवृतोविद्यते। जम्बूद्वीपस्य

विस्तारो लक्षयोजनपरिमितो वर्तते तथा प्लक्षद्वीपस्य ततो द्विगुणितो द्विलक्षपरिमितो विस्तारो विद्यते। जम्बूद्वीपे यथा जम्बूवृक्षोऽस्ति तथैव प्लक्षद्वीपे सुवर्णमयः प्लक्षवृक्षोऽस्ति येनायं द्वीपः प्लक्षद्वीपनाम्ना विख्यातोऽस्ति। प्लक्षद्वीपः स्वकीयेन मानेन, वृत्ताकारेणेक्षुरससमुद्रेणावृतोऽस्ति। प्लक्षद्वीपावरकं इक्षुरसमुद्रः स्वद्विगुणितेन विस्तारवता शाल्मलिद्वीपेनावृतोऽस्ति। शाल्मलिद्वीपश्च स्वसमानविस्तारवता सुरासमुद्रेणावृतो वर्तते तथा सुरासमुद्रः शाल्मलिद्वीपद्विगुणितविस्तारवता कुशद्वीपेन परिवेष्टितोऽस्ति। शाल्मलिद्वीपे महान् शाल्मलिवृक्षो वर्तते, यत्र गरुडस्य निवासोऽस्ति, कुशद्वीपे च कुशस्य वृक्षोऽस्ति। कुशद्वीप. स्वसमानविस्तारवता घृतसमुद्रेणावृतोऽस्ति तथा घृतसमुद्रः क्रौञ्चद्वीपेनास्ति परिवेष्टितो यस्य विस्तारः कुशद्वीपाद् द्विगुणितो विद्यते, यत्र क्रौञ्चनामको महान् पर्वतो वर्तते। क्रौञ्चद्वीपः चतुर्दिक्षु स्वसमानविस्तरेण दधिसमुद्रेण परिवृतो वर्तते, सोऽपि शाकद्वीपेनावृतो विद्यते यो विस्तारे क्रौञ्चद्वीपाद् द्विगुणितोऽस्ति, यत्र शाकस्य महान् वृक्षोऽस्ति, यस्य वायोः स्पर्शमात्रेण परमाह्लाद उत्पद्यते, तन्नाम्नाऽस्य प्रदेशस्य नाम शाकद्वीप इति जातः। शाकद्वीपः स्वसमानविस्तारवता मण्डलाकारेण दुग्धसमुद्रेणावृतोऽस्ति सोऽपि दुग्धसमुद्रः शाकद्वीपद्विगुणितेन पुष्करद्वीपेन परिवेष्टितोऽस्ति। पुष्करद्वीपश्च चतुर्दिक्षु स्वसमानविस्तारवता स्वादूदकसमुद्रेण आवृतो वर्तते। अत्र सुवर्णमय एको विशालः पुष्करः (कमलम्) अस्ति, यन्नाम्ना तस्य देशस्य नाम पुष्करद्वीप इत्यजायत—

(१) जम्बूद्वीपं समावृत्य लक्षयोजनविस्तृतः।
मैत्रेय! वलयाकारः स्थित. क्षारोदधि र्वहि.॥ = २।३।२८

(२) क्षीरोदेन यथा द्वीपो जम्बूसंज्ञोऽभिवेष्टितः।
संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः।
जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितः॥
स एव द्विगुणो ब्रह्मन्! प्लक्षद्वीप उदाहृतः।
प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपः समावृत।
तथैवेक्षु-रसोदेन परिवेषानुकारिणा॥

(३) शाल्मलेः समुद्रोऽसौ द्वीपेनेक्षुरसोदकः॥
विस्तराद् द्विगुणेनाथ सर्वतः संवृतः स्थितः॥
एष द्वीपः समुद्रेण सुरोदेन समावृतः।

(४) विस्तराच्छाल्मलस्यैव समेन तु समन्ततः।
सुरोदकः परिवृतः कुशद्वीपेन सर्वतः॥
शाल्मलस्य तु विस्ताराद् द्विगुणेन समन्ततः॥
तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः।
घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः॥

(५) क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन।
आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः॥
दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः।
क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन महामुने॥

(६) शाकद्वीपस्तु मैत्रेय! क्षीरोदेन समन्ततः।
शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः॥
क्षीराब्धिः सर्वतो ब्रह्मन्! पुष्कराख्येन वेष्टितः।
द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः॥

(७) स्वादूदकेनोदधिना पुष्करः परिवेष्टितः।
समेन पुष्करस्यैव विस्तरान्मण्डलस्तया॥= २।४।१-८७

एवं निर्दिष्टनामानः सप्त द्वीपा मण्डलाकारेण पृथक् पृथक् स्थितैः पूर्वोक्तैः सप्तभिः समुद्रैरावृताः सन्ति, तथा ते द्वीपा तद्वेष्टकाः समुद्राश्च परस्परं सन्ति समानाः, परमुत्तरोत्तरं द्विगुणिता भवन्ति—

एवं द्वीपाः समुद्राश्च सप्त सप्तभिरावृताः।
द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ॥ =वि० पु० २।४।८८

द्वीपास्तद्वेष्टकाः समुद्राश्च

(१) जम्बूद्वीपः क्षारसमुद्रेण परिवेष्टितोऽस्ति
(२) प्लक्षद्वीप इक्षुरससमुद्रेण ,,
(३) शाल्मलिद्वीपः सुरासमुद्रेण ,,
(४) कुशद्वीपः घृतसमुद्रेण ,,
(५) क्रौञ्चद्वीप दधिसमुद्रेण ,,
(६) शाकद्वीपः दुग्धसमुद्रेण ,,
(७) पुष्करद्वीपश्च स्वादूदकसमुद्रेण ,,

एवं विष्णुपुराणानुसारं यो द्वीपो येन समुद्रेण परिवेष्टितो वर्तते तयोर्द्वयोः प्रमाणं सममस्ति, परन्तु वामन-कूर्मपुराणयोः (अ० ४६,५० )

एषु द्विगुणितस्यास्ति अन्तरम्। प्रतिद्वीपतो द्वीप-तद्वेष्टकसमुद्रयो र्मानं द्विगुणितं जायते। एवं स्वादूदकस्य समुद्रस्य चतुर्दिक्षु तद्द्विगुणिता जनरहिता सुवर्णमयी भूमिर्वर्तते[1]। ततो दशसहस्रयोजनविस्तारवान् दशसहस्रयोजनोन्नतश्च लोकालोकाख्यः पर्वतो विद्यते[2]। तदग्रे तं पर्वतं समावृत्य घोरोऽन्धकार आच्छन्नोऽस्ति,यश्चतुर्दिक्षु लक्षयोजनपरिमितेनाण्डकटाहेन समावृतो वर्तते[3]। इत्थमण्डकटाहेन सह द्वीप समुद्र-पर्वतादिभिर्युक्तमिदं समस्तं भूमण्डलं पञ्चाशत्कोटियोजनविस्तृतं विद्यते[4]।

## द्वीप-समुद्र-मानम्

| | द्वीपाः समुद्राश्च | तन्मानम् |
|---|---|---|
| (१) | जम्बूद्वीपः | १००००० |
| (,,) | क्षारसमुद्रः | २००००० |
| (२) | प्लक्षद्वीप | ४००००० |
| (,,) | इक्षुरसमुद्रः | ८००००० |
| (३) | शाल्मलिद्वीप | १६००००० |
| (,,) | सुरासमुद्रः | ३२००००० |
| (४) | कुशद्वीप | ६४००००० |
| (,,) | घृतसमुद्र | १२८००००० |
| (५) | क्रौञ्चद्वीपः | २५६००००० |
| (,,) | दधिसमुद्रः | ५१२००००० |
| (६) | शाकद्वीपः | १०२४००००० |
| (,,) | दुग्धसमुद्रः | २०४८००००० |
| | जम्बूद्वीपतो दुग्धसमुद्रपर्यन्तम् | ४०९५००००० |
| (७) | पुष्करद्वीप | ४५२०००००० |
| (,,) | स्वादूदकसमुद्रः | ४५२०००००० |
| | अण्डकटाहः | १००००० |
| | | ५००००००० |

१. स्वादूदकस्य परितो दृश्यते लोकसंस्थितिः।
द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥ = वि० पु० २।४।९४

२. लोकालोकस्ततः शैलो योजनायुत विस्तृतः।
उच्छ्रायेणापि तावन्ति सहस्राण्यचलो हि सः ॥ = वि० पु० २।४।९५

३. ततस्तम समावृत्य तं शैलं सर्वतः स्थितम्।
तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम् ॥ = वि० पु० २।४।९६

४. पञ्चाशत्कोटि विस्तारा सेयमूर्वी महामुने।
सहैवाण्डकटाहेन सद्वीपाब्धि-महीधरा ॥ = वि० पु० २।४।९७

## निष्कर्षः—

जम्बूद्वीपतो दुग्ध (क्षीर) समुद्रपर्यन्तं यत्र नैमित्तिकप्रलयकाले भगवान्नारायणः शयनं करोति, तत्र गणनया ४०६५००००० योजनानि भवन्ति। तदनन्तरं ४५२०० ०० परिमितस्य पुष्करद्वीपस्य, तद्वेष्टक-स्वादूदकसमुद्रस्य च मानम्४५२ ० ००० अस्ति। तदनु १००००० योजन-परिमितमण्डकटाहमस्ति। सङ्कलनयाऽस्य समस्तस्य भूमण्डलस्य मानं ५००००००००० योजनपरिमितं निश्चितमस्ति।

विज्ञानस्याधुनिकी विचारधारा एवम्भूतं पौराणिकं वर्णनं भावुक-कतापूर्णं भ्रामकमव्यावहारिकं केवलं काल्पनिकं च मन्यते, यतोऽस्मिन् वर्णने ऐतिहासिकसत्यताया अभावो विद्यते। वैज्ञानिकानुसन्धानेन भौगो-लिकान्वेषणाय प्रत्यक्षीकृततत्त्वेषु ईदृशानां द्वीप-समुद्राणां किञ्चिदपि चिह्नं नेदानीं यावद् दृष्टिगतं कृतम्। अत एव पौराणिकं वर्णनं सर्वथा काल्प-निकं सिद्ध्यति। अबुलफज्लेन जम्बूद्वीपस्य कतिपयपौराणिकवर्णना-नां तथा तदितरेषां बहिर्वर्तिनां षण्णां द्वीपानां नूनं काल्पनिकदेश-वदेवासत्यत्वं स्वीक्रियते। द्विरापत्वात् स्मृतो द्वीपः (पा० टी० ५) इत्या-धारेण स द्वयोर्जलाशयो र्मध्यगतभूम्यतिरिक्तं किमपि न मनुते।[1]

अबुलफज्लमतेन कतिपयानां द्वीपानां नामकरण जाति-जनपद-देशाना-माधारेण जातमस्ति। तदनुसारं द्वीपानामस्तित्वमेशियान्तर्गतमेव वर्तते। यथाऽऽधुनिकं काबुलं तेन प्लक्षद्वीपः स्वीकृतोऽस्ति। श्रीनगरस्य दक्षिणे वर्तमानं कनिष्कपुरं कुशद्वीपः सम्भावितोऽस्ति। ईराने स्थितं सेइस्तानं शाकद्वीपस्यापभ्रंशोऽभिमतो वर्तते। एवमल्बेरूणिनापि पुष्करद्वीपः चीन-मङ्गोलियामध्ये सम्भावितो विद्यते[2]।

यद्यपि प्राचीनार्वाचीनयोराधारेण विचारे क्रियमाणे पौराणिक-द्वीपसागरसम्बन्धे कश्चिन्निर्णयो निश्चितनिष्कर्षतां न गच्छति, तथापि अल्बेरूणि-अबुलफज्लप्रभृतीनां प्रसिद्धानामैतिहासिकविदुषां सम्भावित-कल्पनाप्रतिपादने पूर्णयथार्थता विद्यते, इति दृढतया स्वीकर्तुं न शक्यते,

---

१—इ० गु० पृ० ६८।
२—प्राचीन भारत पृ० ७१।

यतो हि येषां द्वीपानां सागराणाञ्च विस्तारः पुराणानुसारं लक्षयोजनं-तश्चतु पष्ठियोजनं यावत् निर्णीतो विद्यते, स काबुल-चीन-मङ्गोलियास-दृशपरिमिते स्थाने न समाविष्टो भवितुमर्हति।

पुराणप्रणेतुः प्रतिपादनेऽतिशयोक्तिकथनं काल्पनिकताकल्पनं वा ऐतिहासिकप्रमाणाभावे सरलमस्ति, किन्तु, तस्य निःस्वार्थस्य निस्पृह-स्यान्तर्द्रष्टु विरक्तस्य मुनेः मनसि एवम्भूताया असत्यकल्पनाभावनाया कथं जागृति जनितेत्यपि चिन्तनस्यास्ति विषयः। अस्य महाविशालस्यः कल्पनातीतस्य विश्वब्रह्माण्डस्य कल्पनासमावेश. मानवमस्तिष्के न सम्भवति। सम्भवोऽस्ति वैज्ञानिकी प्रगति. स्वक्रमिकानुसन्धानप्रक्रिया-द्वारा अग्रे कदाचित् पौराणिकाना लोकाना द्वीपानां सागराणाञ्चान्वेषणं कृत्वाऽस्माकं समक्षे सत्यत्व समुपस्थापयेत्। किञ्च पूर्वकाले येषा तत्त्व ना वय काल्पनिकस्य जगतः क्रीडाया उपकरणमात्र मन्यामहेस्म, तानि तत्त्वानि अद्यत्वे वैज्ञानिकचमत्कृतिद्वाराऽस्माक दृष्टिगोचरीभूतानि, तदा तेषा-मस्तित्वविषयेऽस्माक हृदये सन्देहस्य लेशमात्रमपि नावकाशस्तिष्ठति। भावुकतापूर्णसम्भावनेय बुद्धिबलेन काल्पनिकमसत्यं वेति मन्तु शक्यते। परमैतिहासिकताया अभावेऽपि भौगोलिक-साहित्यिकादिपरम्परायै भूविवरणमिदं परमोपयोगि मूल्यवच्च प्रतीयते।

कियन्तो वर्तमाना विपश्चितोऽस्य भूमण्डलस्य विभिन्नान् भागानेव पुराण-वर्णिताना सप्ताना द्वीपानां नामान्तर कथयन्ति, यथा जम्बूद्वीपः (यूरोप-एशिया) शाकद्वीप (आस्ट्रेलिया) कुशद्वीपः (दक्षिणी अमेरिका) क्रौञ्च-द्वीपः (उत्तरी अमेरिका) शाल्मलिद्वीपः (ग्रीनलैण्ड) प्लक्षद्वीप (विक्टो-रिया लैण्ड) पुष्करद्वीपश्च (अफ्रिका[1])।

पद्मपुराणस्य स्वर्गखण्डे तु नवाना द्वीपाना चर्चा विद्यते—

ससागरा नव द्वीपा दत्ता भवन्ति मेदिनी। = ७।२६

महाभारतस्यादिपर्वणि च त्रयोदश द्वीपाना वर्णनमुपलभ्यते—

त्रयोदश समुद्रस्य द्वीपानश्नन् पुरूरवा। = ७४।१६

महाकविकालिदासो हि—अष्टादशद्वीपनिखातयूप इति ब्रवीति।

## जम्बूद्वीपस्य विभाजनम्

पुराणानुसार जम्बूद्वीपे नव वर्षाणि (खण्डानि) सन्ति—(१) भारत-वर्षम् (२) किंपुरुषवर्षम् ( ) हरिवर्षम् (४) इलावृत्तवर्षम् (५) रम्यक-वम् (६) पंहिरण्मयवर्षम् (७) उत्तरकुरुवर्षम् (८) भद्राश्ववर्षम् (६) केतु-

१—अधिकं द्रष्टव्यं प० बलदेवोपाध्यायाना पुराणविमर्शे पृ० २५२।

मालवर्षञ्च। तत्र प्रत्येकवर्षस्य विस्तारो नव सहस्रयोजनं विद्यते तथा सर्वेषां मध्ये इलावृतवर्षं वर्तते, यस्य मध्ये सुवर्णमयो मेरुपर्वतोऽस्ति। एवमिलावृताद्दक्षिणे क्रमशो हरिवर्षं किंवर्षं भारतवर्षञ्च विद्यते, उत्तरे रम्यकवर्षं हिरण्मयवर्षमुत्तरकुरुवर्षञ्च वर्तते, पूर्वे भद्राश्ववर्षं, पश्चिमे च केतुमालवर्षम् विद्यते तथाहि विष्णुपुराणे—

> प्रथमं भारतं वर्षं ततः किंपुरुषं स्मृतम्।
> हरिवर्षं तथैवान्यन्मेरो दक्षिणतो द्विज॥
> रम्यकं चोत्तरं वर्षं तस्यानु हिरण्मयम्।
> उत्तराः कुरवश्चैव यथा वै भारतं तथा॥
> नवसाहस्रमेकैकमेतेषां द्विजसत्तम।
> इलावृत्तं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः॥ = २।२।१२-२३
> भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे।

तथाचेलावृत्तस्य दक्षिणे भागे निषध-हेमकूट-हिमालयनामानस्त्रयो वर्षपर्वताः सन्ति, ये क्रमशः हरिवर्ष-किंपुरुषवर्ष-भारतवर्षाणां सीमानं विभजन्ते। एते पूर्वतः पश्चिम पर्यन्तं विस्तृता दशदशयोजनोच्छ्रिताश्च वर्तन्ते। इलावृतस्योत्तरे भागे नील-श्वेत-शृंगवन्नामानस्त्रयः वर्षपर्वता विद्यन्ते, ये क्रमशो रम्यक-हिरण्मयोत्तरकुरुवर्षाणां सीमानं निर्दिशन्ति। एतेऽपि पूर्वतः पश्चिमसमुद्रपर्यन्तं विस्तृता. द्विदिवसहस्रयोजन-लम्बायमानाश्च सन्ति।

(८) भद्राश्ववर्षम्
पूर्वे

नीलपर्वतः
(५) रम्यकवर्षम्
श्वेतपर्वत.
(६) हिरण्ममयवर्षम्
शृंगवान् पर्वतः
(७) उत्तरकुरुवर्षम्




(१) भारतवर्षम्
हिमालयपर्वतः
(२) किंपुरुषवर्षम्
हेमकूटपर्वतः
(३) हरिवर्षम्
निषधपर्वतः

पश्चिमे
(९) केतुमालवर्षम्

एषु सर्वेषु वर्षेषु केवलमेकं भारतवर्षमेव मनुष्याणां शुभाशुभकर्मणां भोग्यस्थानमस्ति। अन्यानि चाष्टवर्षाणि देवलोकानां भेदा विद्यन्ते। एवं जम्बूद्वीपस्यैतेषु नवखण्डेषु एकं भारतवर्षमेव कर्मक्षेत्रमस्ति, अवशिष्टानि अष्टवर्षाणि स्वर्गान्निवृत्तानां पुण्यात्मनामुपभोगाय स्थानानि सन्ति। अतस्तेषां नाम भौमं स्वर्गमस्ति।

तेषामष्टानां वर्षाणां वैशिष्ट्यवर्णनप्रसंगे विष्णुपुराणे प्रोक्तमस्ति यत् जम्बूदीपस्य भारतवर्षातिरिक्तेष्वष्टसु वर्षेषु शोक-श्रम-उद्वेग क्षुत्-पिपासादीनां भयं न विद्यते। तत्रत्या स्वस्था निर्भया अत्यन्तं सुखिनश्च जना भवन्ति। तेषामायुः दशद्वादशसहस्रवर्षपरिमितं भवति। तेषु वर्षेषु कदाचिदपि वर्षणं न जायते, पार्थिवेन जलेनैव कार्यं निर्वहति तथा तत्र त्रेतादियुगकल्पना न भवति। प्रतिवर्षं च सप्त सप्त कुलपर्वता विद्यन्ते, येभ्यः शतशो नद्यो निःसृताः सन्ति—

यानि किं पुरुषादीनि वर्षाण्यष्टौ महामुने।
न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम्॥
स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः।
दश द्वादशवर्षाणां सहस्राणि स्थिरायुषः।
न तेषु वर्षते देवो भौमान्यम्भांसि तेषु वै॥
कृतत्रेतादिकं नैव तेषु स्थानेषु कल्पना।
सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः॥
नद्यश्च शतशस्तेभ्यः प्रसूता हि द्विजोत्तम। = वि० पु० २।२-५१-५४

## भारतवर्षस्य विभाजनम्

पुराणानुसारं भारतवर्षस्य विभाजनं नवसु खण्डेषु जातमस्ति—(१) इन्द्रद्वीप (२) कसेरुद्वीपः (३) ताम्रपर्णी (४) गभस्तिमान् (५) नागद्वीपः (६) सौम्यद्वीपः (७) गान्धर्वद्वीपः (८) वरुणद्वीपः (९) समुद्रैः परिवृतं नवमं स्वयमस्ति भारतवर्षम्—

भारतस्यास्य वर्षस्य नव भेदान् निशामय।
इन्द्रद्वीपः कसेरुश्च ताम्रपर्णी गभस्तिमान्॥
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः।
अयं तु नवमस्तेषां द्वीपः सागर-संवृतः॥ = म० पु० ११३।७,८

वायुपुराणमपि एतान्येव नामानि संकेतयत् कथयति यत् इमानि

नव खण्डानि भिन्नै भिन्नै नवभिः पर्वतैरावृतानि सन्ति। अत एव एकतो द्वितीयस्मिन् सुगमतया गन्तुं न शक्यते—

> भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः।
> पर्वतान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम्॥ = वा० पु० ४५।७८

मारकण्डेयपुराणमपि एतदेव समर्थयति, परन्तु वामनपुराणं नवमस्य खण्डस्य नाम कुमारद्वीप इति कथयति, यो हि दक्षिणत उत्तरपर्यन्तं विस्तृतोऽस्ति—

> यस्तु नवमस्तेषां द्वीपः सागरसंवृत.।
> कुमाराख्यः परिख्यातो द्वीपोऽयं दक्षिणोत्तरः॥ = वा० पु० १३।११

कविवरराजशेखरेणापि स्वकाव्यमीमांसायामस्य खण्डस्य नाम कुमारीद्वीप एव निर्दिष्टम्। मत्स्यपुराणं नवमस्य भागस्य विस्तारः कन्याकुमारीत आरभ्य गङ्गोत्तरीपर्यन्तं दक्षिणोत्तरं सहस्रयोजनपरिमितं ब्रवीति—

> योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः।
> आयतस्तु कुमारीतः गङ्गायाः प्रवहावधिः॥ = ११३।१०

तथा वायुपुराणं कथयति, यत् नवमो भागः कन्याकुमारीनामा दक्षिणोत्तरसम्बध्यमानो विस्तृतो नव सहस्रकोशपरिमितो विद्यते—

> आयतो ह्याकुमारीक्यादागंगाप्रभवाच्च।
> तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु॥

पद्मपुराणस्य क्रियायोगसागरखण्डे तु—

हिमाद्रिदक्षिणं यद्वै विन्ध्याद्रेरुत्तरं तथा ।
आहुस्तद् भारतं वर्षं शुभाशुभफलप्रदम् ॥ =७।२

भारवर्षस्य नवसु भेदेषु कन्याकुमारीतो हिमालयपर्यन्तं विस्तृतः समुद्रपरिवेष्ठितश्च भारतद्वीपोऽस्तीति कथनस्य तात्पर्यमिदमवसायते यत् अद्यत्वे यावती पृथिवी, उपलभ्यते तस्या नाम पुराणेषु भारतवर्षमस्ति साम्प्रतं यद् हिन्दुस्थानमुच्यते, तद् भारतवर्षस्यैकं खण्डमात्रमस्ति । अन्येषां खण्डानां यानि नामानि पुराणेष्वङ्कितानि सन्ति तानि, अद्यत्वे कालक्रमतः परिवर्तितानि जातानि, तत्रत्या भाषा-आचार-विचार-व्यवहारादयश्च परिवर्तिताः अभूवन् । अतः पुराणेषु लिखतानि तानि नामानि अद्यत्वे आश्चर्यजनकानि जातानि सन्ति ।

भारतवर्षस्य नवसु खण्डेषु इदमेवेकं खण्डं सर्वप्रधानमस्ति । अतोऽस्यान्यन्नाम न गृहीत्वा भारतवर्षस्य हृदयभूतमिदं खण्डमपि भारतमुच्यते । यथा महत्यपि भूलोकविस्तारे क्वचन पृथिवीमात्रमेव भूलोकमुच्यते तथैव मृत्युलोकस्य नाम भारतवर्षं सदपि इदं प्रधानं खण्डमेव भारतवर्षं कथ्यते जनैः । भारतवर्षस्येन्द्रादिद्वीपातिरिक्ता अष्टौ उपद्वीपा अपिऽये पुराणेषु प्रोक्ताः सन्ति, ते यथा–(१) स्वर्णप्रस्थः (२) चन्द्र शुक्लः (३) आवर्तनः (४) रम्यकः (५) मन्दहरिणः (६) पाञ्चजन्यः (७) सिंगलः ( ८ ) लङ्काचेति । एषु सिंगलो लङ्काचेति नामद्वयमेव साम्प्रतमप्युपलभ्यते, अन्येषां तु नामानि परिवर्तितानि । तथाहि

जम्बुद्वीपस्यच राजन् ! उपद्वीपानष्टौ हैक उपदिशन्ति सागरात्मजैरश्वान्वेषणे इमां मही परितो निरवनिद्भूरुपकल्पितान् । तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो रमणको मन्दरहरिणः पाञ्चजन्य. सिंगलो लङ्केति (श्रीमद्भागवते ५।१६। २६, ३०) ।

## भारतवर्षस्य नामकरणम्

पुराणप्रतिपादितवंशावल्यनुसारं विश्वस्यास्य प्रथमः पुरुष आसीत् स्वायम्भुवमनुस्तस्य पुत्रो राजा प्रियव्रतः, तस्य पुत्रो बभूव आग्नीध्रः, तत्पुत्रो जातो नाभिः, तत्पुत्रोऽभवदृषभदेवः यस्य शतपुत्रेषु ज्येष्ठः सर्वगुणश्रेष्ठो भगवद्भक्तो भरतोऽजायत । तेनैव स्वपितृ राज्यसिंहासनमवाप्तं तस्य नाम्नाऽस्य देशस्य नाम भारतमिति जातम् । तथाहि श्रीमद्भागवते–

प्रियव्रतो नाम सुतो मनोः स्वाम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिः ऋषभस्तत्सुतः स्मृतः ॥

अवतीर्णं पुत्रशतं तस्यासीद् ब्रह्मपारगम् ।
तमाहु र्वासुदेवांशं मोक्षधर्मविवक्षया ॥
तेषां वै भारत. श्रेष्ठो नारायण-परायण ।
विख्यातं वर्षमेतद् यन्नाम्ना भारतमुत्तमम् ॥ = ११।२।१५-१७

वायुपुराणे लिखितमस्ति यत् स्वशतपुत्रेषु ज्येष्ठं पुत्रं भरतं राज्यसिंहासने संस्थाप्य ऋषभदेवेन वानप्रस्थाश्रमस्याश्रयणं कृतम् । तेन वनगमनसमये दक्षिणदिशि वर्तमानं हिमवर्षं भरताय समर्पितम् । तत एव विद्वांसः तद्वर्षं भरतनाम्ना भारतवर्षं कथयन्ति—

ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः ।
सोऽभिषिच्याथ भरतं पुत्रं प्राव्रज्यमास्थितः ॥
हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत् ।
तस्मात्तद्भारतं वर्षं तस्य नाम्ना विदुर्बुधा. ॥ = ३३।५१-५२

मार्कण्डेयपुराणेऽपि कियच्छब्दपरिवर्तनेन सह स्वायम्भुवसर्गवर्णनप्रसंगे प्रोक्तमस्ति यत् आग्नीध्रपौत्रेण नाभिपुत्रेण ऋषभदेवेन स्वशतपुत्रेषु श्रेष्ठं भरतं राज्येऽभिषिच्य तपस्तप्तुं पुलहाश्रमे गतम् । पित्रा भरताय हिमवर्षं प्रदत्तमतोदो वर्षं तन्नाम्ना भारतवर्षमिति प्रसिद्धं जातम्—

आग्नीध्रसूनो नभिस्तु ऋषभोऽभूत् सुतो द्विज ।
ऋषभाद्भरतो जज्ञे वीर. पुत्रशताद्वरः ॥
सोऽभिषिच्यर्षभः पुत्रं महाप्राव्रज्यमास्थितः ।
तपस्तेपे महाभागः पुलहाश्रमसंश्रयः ॥
हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता ।
तस्मात्तु भारतं वर्षं तस्य नाम्ना महात्मनः ॥ = ५ ।४०-४१

भारतवर्षनामकरणकारणं निर्दिशतो विष्णुपुराणस्य कथनमस्ति यत् पित्रा ऋषभदेवेन वनं गन्तुकामनया प्रस्थानं कुर्वता स्वकीयं राज्यं स्वज्येष्ठपुत्राय भरताय प्रदत्तम् । अतस्तत्समयात् हिमवर्षं भारतवर्षमिति नाम्ना विख्यातम्—

ततश्च भारतं वर्षमेतल्लोकेषु गीयते ।
भरताय यतः पित्रा दत्तं प्रातिष्ठता वनम् ॥ = वि० पु० २।१।३२

अग्निपुराणमपि ऋषभदेवपुत्रस्य भरतस्य नाम्नाऽस्य देशस्य नाम भारतवर्षमिति व्यपदिशति—

ऋषभो मेरुदेव्याश्च ऋषभाद्भरतोऽभवत् ।
ऋषभो दत्तश्रीः पुत्रे शाल्ग्रामे हरिं गतः ।।
भारताद्भारतं वर्षं भरतात् सुमतिस्त्वभूत् । = ब्र० पु० १०७।११२

श्रीमद्भागवतस्य कथनमस्ति यद् भगवान् ऋषभदेव इमां भूमिं कर्मक्षेत्रं मत्वा गुरुकुले ब्रह्मचर्यपूर्वकमध्ययनानन्तरं गुरोराज्ञया गृहस्थाश्रमे प्रविश्य इन्द्रपुत्र्या जयन्त्या सह विवाहं कृत्वा तस्यामात्मसमान् शतपुत्रानुत्पादयामास। तेषु सर्वगुणश्रेष्ठो महायोगी ज्येष्ठपुत्रो भरतोऽभवत्, यन्नाम्ना एतद्वर्षं भारतवर्षमिति कथ्यते जनैः—

अथ ह भगवान् ऋषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैं गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामात्मजानामात्मसमानानां शतं जनयामास। येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येनेदं वर्षं भारतवर्षमिति व्यपदिशन्ति (श्रीमद्भागवते ५।४।८,९)।

पुनरग्रे तत्रैवोल्लिखितमस्ति यद् भारतवर्षनामकरणात्पूर्वमस्य देशस्य नामाजनाभमासीत्, परन्तु पश्चाद् ऋषभदेवपुत्रस्य भरतस्य नाम्नाऽस्य देशस्य नाम भारतवर्षमित्यजायत—

अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति। (५।७।३)

अजनाभशब्दस्य व्युत्पत्तिलभ्योऽर्थोऽस्ति-यदजस्य = अजनाम्नो भगवतो विष्णो र्नाभिकमले स्थितो देशः, यस्य तात्पर्यमस्ति, यद् ब्रह्मणा भगवतो नारायणस्य नाभिकमलादुद्भूते कमले समुपविश्य यस्य वर्षकस्य निर्माणं कृत तदेवास्ति अजनाभवर्षम्, अथवा आग्नीध्रपुत्रो नाभिः तथा अजो भगवदवतारो ऋषभदेवः, आभ्यां द्वाभ्यामस्मिन् देशे शासनं कृतमित्यतोऽस्य प्रदेशस्य व्युत्पत्तिलभ्योऽर्थोऽजनाभ इति प्रतीयते।

वायुपुराणानुसारमस्य भारतवर्षस्य पूर्वतन नाम हैमवतवर्षमासीत्, यतो हि भारतवर्षस्य सीम्नो विभाजको हिमवान् (हिमालय) नामा वर्षपर्वत एवास्ति। एवं भारतस्योत्तरस्यां दिशि स्थितेन हिमवता ऽन्यवर्षेभ्यो विभक्तत्वादस्य भारतवर्षस्य पूर्वतनं नाम हैमवतवर्षमिति स्वाभाविकं प्रतिभाति - इदं हैमवतं वर्षं भारतं नाम विश्रुतम्। (उपोद्घातपादे ३४।८८)

लिङ्गपुराणे लिखितमस्ति यद् हिमालयाद् दक्षिणे वर्तमानं हिमवर्षं ऋषभदेवेन भरताय प्रदत्तमतो हि तद् वर्षं तन्नाम्ना भारतं निगद्यते—

हिमाद्रेर्दक्षिणं वर्षं भरताय न्यवेदयत्।
तस्मात्तु भारतं वर्षं तस्य नाम्ना विदुर्बुधाः॥=४७।२३

कूर्मपुराणं कथयति यद् नाभितो मेरुदेव्यां महातेजस्वी ऋषभदेवनामकः पुत्रोऽजायत। तस्य शतपुत्रेषु भरतो ज्येष्ठ आसीत्। ऋषभदेवेन स्वपित्रा नाभितः प्राप्तं हिमवर्षं स्वपुत्राय भरताय प्रदत्तम्। अतस्तन्नाम्ना तद्वर्षं भारतवर्षमिति कथ्यते—

हिमाह्वयं तु यद्वर्षं नाभेरासीन्महात्मनः।
तस्यर्षभोऽभवत्पुत्रो मेरुदेव्यां महाद्युतिः॥
ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः।
तस्मै तद्दत्तवान् तस्मात्तन्नाम्ना भारतं स्मृतम्॥=४०।३७-३८

एवमेषां पुराणानामाधारेण निःसंशयं वक्तुं शक्यते यद् ऋषभदेवपुत्रस्य भरतस्य नाम्नैवास्य देशस्य नाम भारतवर्षमिति सञ्जातम्। वायुमत्स्यपुराणे तु मनुष्याणामादिजनकं मनुमेव प्रजानां भरण-पोषणाभ्यां भरतं कथयतः तथा तन्नाम्नैवास्य देशस्य नाम भारतमिति मन्येते—

भरणात् प्रजनाच्चैव मनुर्भरत उच्यते।=वा० पु० ४५।७६
निरुक्तवचनैश्चैव वर्षं तद् भारतं स्मृतम्॥=म० पु० ११३।५

अपि च महाप्रतापिनो राज्ञो दुष्यन्तात् शकुन्तलायामुत्पन्नस्य भरतस्य नाम्नाऽप्यस्य देशस्य नाम भारतमिति मनुते वायुपुराणम्—

चक्रवर्ती ततो जज्ञे दौष्यन्ति र्नृपसत्तमः।
शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्॥=९९।१३३

एवं तत्तत्पुराणेषु भारतस्य नामकरणविषये त्रीणि मतान्युपलभ्यन्ते, किन्तु ऋषभदेवपुत्रस्य भरतस्य नाम्नैव भारतस्य प्रसिद्धि प्राशस्त्य ञ्चाधिकांशा विद्वांसो मन्यन्ते।

## कर्मभूमिर्भारतम्—

भारतवर्षस्य मानवाः स्वैः स्वैः शुभैः कर्मभिः स्वर्गं गन्तुं शक्नुवन्ति परमपुरुषार्थं मोक्षमप्यवाप्तुं पारयन्ति। तथाऽशुभकर्मसु प्रवृत्तौ सत्यां नीचयोनिषु नरके वा पतनमवश्यं भावि। एतदतिरिक्ते कस्मिन्नपि लोके प्राणिनां कर्मकृते विधानं नास्ति। अतः पुराणेषु एतद् भारतवर्षं स्वर्गापवर्गप्राप्तिशीलानां पुंसां कृते कर्मभूमिः प्रोक्ताऽस्ति—

कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्।
न खल्वन्यत्र मर्त्यानां कर्म भूमौ विधीयते॥= व० पु० २।३।२५

शुभकर्मणां सम्पादने स्वन्त्रत्वाद् भारतवर्षस्य मानवः केवलमजस्रं कर्मफलभोगेषु समासक्तेभ्यो देवेभ्योऽपि श्रेष्ठतमोऽभिमतोऽस्ति। विष्णुपुराणे जम्बूद्वीपस्य विशेषताऽभिव्यञ्जनपूर्वकमुक्तमस्ति यत् प्रथम जम्बूद्वीप एव सर्वेषु द्वीपेषूत्कृष्टो वर्तते, तत्रापि तदन्तर्गतं भारतवर्षं सर्वश्रेष्ठं विद्यते, यतो हीदं कर्मभूमिरस्ति। एतदतिरिक्तानि अष्टौ अन्यानि वर्षाणि भोगभूमयः सन्ति—

अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने।
यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः॥ = वि० पु० २।३।२२

श्रीमद्भागवते जम्बूद्वीपान्तर्गतं भारवर्षं कर्मक्षेत्रमुक्तमस्ति तत्राऽन्यानि अष्टवर्षाणि देवतानामवशिष्टफलभोगाय पार्थिवस्वर्गमुक्तानि—
तत्रापि भारतमेव वर्षं कर्म क्षेत्रम्। अन्यान्यष्ट वर्षाणि स्वर्गिणा पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति (५।१७।११) देवीभागवतेऽप्यस्यैव समर्थनं कृतिमस्ति—

तत्रापि भारतं वर्षं कर्मक्षेत्रमुशन्ति हि।
अन्यानि चाष्टवर्षाणि भौमस्वर्गप्रदानि च।
स्वर्गिणां पुण्यशेषस्य भोगस्थानानि नारद॥ = ८।७।३४

वायुपुराणानुसारं भारते जन्म गृहीत्वा शुभकर्मद्वारा स्वर्गस्य प्राप्तिं कर्तुं शक्यते, उपरितनेषु लोकेषु गन्तुमागन्तुं वा शक्यते तथा मोक्षं च प्राप्तुं पार्यते। भारतातिरिक्तेषु लोकेषु कर्म कर्तुमवसरो नावाप्यते—

अत. स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते। = ४५।७७

ब्रह्मपुराणे विश्वस्मिन् भारतवर्षं कर्मभूमिरुक्ताऽस्ति—

पृथिव्यां भारतं वर्षं कर्मभूमिरुदाहृता। = २७।२

मार्कण्डेयपुराणस्य कथनमस्ति यद् दक्षिणे वर्तमानं भारवर्षं कर्मभूमिरस्ति। इतोऽन्यत्र पुण्यपापयोः प्राप्तिर्न भवति। अत इतोऽतिरिक्तानि अन्यानि वर्षाणि केवल भोगभूमय एव सन्ति—

भारतं नाम यद्वर्षं दक्षिणेन मयोदितम्।
तद् कर्मभूमिर्नान्यत्र संप्राप्तिः पुण्यपापयोः॥ = ५५।२१

कूर्मपुराण कथयति यद् अधिकारिणां मनुष्याणां कृते इदं भारतवर्षं कर्मभूमिरस्ति—

कर्मभूमिरियं विप्राः! नराणामधिकारिणाम्। = पूर्वार्द्ध ४७।२३

लिङ्गपुराणमपि भारतवर्षं कर्मभूमिं साधयत् कथयति यद् भारतवर्षं एव स्वर्गापवर्गयोः प्राप्तये युगकर्मानुसारं मनुष्याणां प्रवृत्ति र्भवति नान्यत्र—

इह स्वर्गापवर्गार्थं प्रवृत्ति र्येंन मानुषी।
तेषां च युगकर्माणि नान्यत्र मुनिपुङ्गवाः॥=पूर्वार्द्धे ५२।३२

महाभारतस्य (वनपर्वणि) लिखितमस्ति यद् अस्यां कर्मभूमौ भारतवर्षे जन्म गृहीत्वैवान्ते जीवः स्वर्गसुखकामनया सुरालयं गच्छति—

कर्मभूमिमिमां प्राप्य पुनर्याति सुरालयम्।=१८१।३१

एवं प्रायः प्रतिपुराणं महाभारते च भारतवर्षं कर्मभूमिमुक्त्वाऽस्य वैशिष्ट्यं निर्दिष्टमस्ति तथा महद्भिरुत्कृष्टैः शब्दैरस्य प्रशस्तिः पुराणेषु गीताऽस्ति। तदनुसारं विश्वस्मिन् भारतवर्षसमो द्वितीयो देशः प्रशस्तो नास्ति। भारतवर्षं भूमण्डलेऽद्वितीयोऽनुपमश्च देशोऽस्ति। मानवजीवनस्य समुन्नते र्यावन्ति कल्याणकारीणि कर्माणि सन्ति, तेषां बीजानि भारतवर्षे विद्यमानानि सन्ति। अत एव विदेशीया एतत् स्वर्णपक्षिणं कथयित्वा भूयो भूयो लुण्ठयितुं प्रायतन्त।

## भारतवर्षप्रशस्तिः

पुराणानुशीलनेन प्रतीयते यदस्माकं पूर्वजानां स्वदेशं प्रति कियदगाधं प्रेमासीत्। पुराणानुसारमैहिक-पारलौकिकौद्योगिकार्थिक सांस्कृतिक-राजनीतिकक्षेत्रेषु भारतवर्षं सर्वोत्कृष्टमुक्तमस्ति। पुराणेषु सत्कर्मद्वारा सर्वोत्तमलोकप्राप्तिकर्ता भारतवर्षीयो मानवो न केवलं स्वर्गलोकभोगासक्तेभ्यो देवेभ्य उत्कृष्टोऽभिमतः, अपितु भारतं कर्मभूमिमुक्त्वाऽस्य महत्त्वं गीतमस्ति। स्वायम्भुवमनुपुत्रस्य प्रियव्रतस्य सन्ततिभिः समस्ते भूमण्डले स्वकीयमाधिपत्यं स्थापयित्वा सर्वानपि द्वीपान् स्वकीयोपनिवेशान् निर्माय प्रतिवर्षं करग्रहणं कृतं तथा भारतीयसभ्यता-संस्कृत्योः प्रचारः प्रसारश्च पूर्णतया कृत आसीत्।

विष्णुपुराणे जम्बूद्वीपस्य वैशिष्ट्यव्यञ्जनपूर्वकमुक्तमस्ति यत् सहस्रजन्मानन्तर महत्पुण्योदयेनास्मिन् परमपवित्रे भारतवर्षे जीवस्य मनुष्यजन्मग्रहणसौभाग्यमुपतिष्ठते—

अत्र जन्म सहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तु र्मानुष्यं पुण्यसञ्चयात्॥=२।३।२३

शिवपुराणानुसारं भारतवर्षे एव सत्कर्मपरायणा मुनिजनाः परलोकार्थं तपस्यन्ति, धर्मप्रिया यज्ञिका याजन्ते, तथोदारा दानिनश्च समादरपूर्वकमर्थिभ्यो दानं प्रददते—

तपस्तपन्ति मुनयः जुह्वते चात्र यज्विनः।
दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ = उ० सं० १९।१६

स्वर्गस्था देवा अपि निरन्तरं गायन्ति, यत् ते जीवा अस्मदपेक्षयाऽतिधन्याः सन्ति, ये स्वर्गापवर्गसाधककर्मभूमौ भारते मनुष्ययोनिषु जन्म गृहीत्वा स्वानि शुभकर्माणि परमात्मनि समर्प्य सर्वपापविरहिताः सन्तोऽन्तेऽनन्त एव लीयन्ते। न ज्ञायते यत् सत्कर्मणां क्षये जाते वयं क्व जन्म ग्रहीष्यामः। अतस्ते प्राणिनो धन्याः सन्ति, येऽतिपुनीते भारतवर्षे भूयो भूयो मानवजन्म गृह्णन्ति निवसन्ति च सुखपूर्वकम्—

गायन्ति देवाः खलु गीतकानि धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पद-हेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥

(ग. पु. प्रे. क., ११६। वि. पु. २।३।२४, शि. पु. उ. सं. १८।१६)

अस्यैव भावस्य स्पष्टीकरणं कुर्वता मार्कण्डेयपुराणेनोक्तमस्ति यद् देवानां मनःसु अयं मनोरथो निरन्तरं जागरूकः तिष्ठति, यद् देवयोनेः भोगस्य समाप्तौ वयं पृथिव्यां कदा जन्म ग्रहीष्यामः, यतो हि मनुष्याः स्वशुभकर्मद्वारा यानि यानि अशक्यानि कार्याणि कर्तुं पारयन्ति, तानि अस्माभिर्देवैः सर्वैरसुरैश्च विधातुं न शक्यन्ते—

देवानामपि विप्रर्षे सदा एष मनोरथः।
अपि मानुष्यमाप्स्यामो देवत्वात् प्रच्युताः क्षितौ।
मनुष्यः कुरुते यत्तु तन्न शक्यं सुरासुरैः ॥ = ५७।६३।६४

सनत्कुमारस्य सम्मतमस्ति यद् भारते समुत्पन्नास्ते मनुष्या धन्या सन्ति, ये सुखपूर्वकं स्वेषु स्वेषु शुभकर्मसु प्रवृत्ताः सन्तः स्वर्गं मोक्षं च लभन्ते—

प्राप्स्यन्ति धन्याः खलु ते मनुष्याः सुखैर्युताः कर्मणि सन्निविष्टाः।
जनुर्हि देवा खलु भारतेऽस्मिन् ते स्वर्गमोक्षौभयलाभवन्तः ॥

(शि० पु० उ० सं १८।२०)

अस्याः कर्मभूमेर्भारतस्य प्रशंसायां श्रीमद्भागवत-देवीभागवतयोः वचनमस्ति यद् यत्र भगवतोऽमृतमयी कथासरिन्न प्रवहति, यत्र भगवद्भक्ताः साधवो न तिष्ठन्ति, यत्र वा श्रीभगवत्प्रीत्यर्थं यज्ञानां महोत्सवो नानुष्ठीयते तद् यदि स्वर्गसममपि स्थानं स्यात्तत्र न स्थातव्यं नवा गन्तव्यम्, महता पुण्येन भारते जन्म लब्ध्वा भगवन्तमुपासते जनाः—

न यत्र वैकुण्ठकथासुधाऽऽपगा न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ॥
अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥
(श्री० भा० ५।१९।२१।२४, दे० भा० ११।११।२२।२५)

एवं भारतवर्षस्य प्रशस्तिप्रसङ्गे श्रीमद्भागवतस्य पञ्चमस्कन्धे एकोनविंशतितमेऽध्याये २१-२८ तथा देवीभागवते एकादशस्कन्धस्यैकादशेऽध्याये च २२-२६ श्लोकाः समाना एव सन्ति। तेषु न किञ्चिद्वर्णपरिवर्तनमस्ति न वा मात्रापार्थक्यं विद्यते।

एवं पुराणानां दृष्टौ कर्मसम्पादने स्वतन्त्रत्वाद् भारतवर्षस्य मानवः समस्तैश्वर्यसम्पन्ने सर्वोत्कृष्टभोगभूमौ स्वर्गलोके हि केवलं शुभकर्मणां फलभोगेषु आसक्तेभ्यो देवेभ्योऽपि श्रेष्ठतरः प्रशस्यश्चास्ति। तस्मात् स्वदेशं प्रति पुराणानामपूर्वं प्रेम पर्यालोच्य मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्यादर्शमयं वचनं सर्वथा सुसङ्गतं भवति—

अपि स्वर्णमयी लङ्का न मे लक्ष्मण ! रोचते ।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥

## भारतवर्षस्य वैशिष्ट्यम्

भारतवर्षं हि मृत्युलोकस्य उत्तममङ्गमस्ति। उत्तमाङ्गत्वादेवात्र भारतवर्षे भाषा-शरीर-सौन्दर्यादीनां प्रकृतेश्चापूर्वा पूर्णता दरीदृश्यते। अत्रारुन्धती-सीता सावित्री-दमयन्तीप्रभृतयः पातिव्रत्यधर्मपरायणाः स्त्रियः, ध्रुव-प्रह्लादाद्या भक्तप्रवरा बालकाः, हरिश्चन्द्र-युधिष्ठिरादयः सत्यसर्वस्वा, धर्मात्मानो राजानः,शिबि-दधीचि-बलि-कर्णप्रभृतयो दातारः, वसिष्ठ-विश्वामित्रादयस्तपस्विनः, राम-कृष्णादयोऽवताराः, याज्ञवल्क्य-पतञ्जलि-प्रभृतयो योगिनः,मार्कण्डेय-कपिलादयो मुनयः, अत्रि-भरद्वाज वामदेवादयो ऋषयः, व्यास-वाल्मीकि-प्रभृतयः ग्रन्थप्रणेतारोमहर्षयः,गौतम-कणादादयो दार्शनिकाः, अनुसूया-लोपा-मुद्रा-मदयन्ती नर्मदादयस्तपस्विन्यः, मदालसा-सुकन्यासमानाः सद्गृहिण्योनार्यश्च प्रादुर्भूयास्य भारतवर्षस्य महिमानं समवर्धयन्। हिमालयतः कन्याकुमारीपर्यन्तम्, कच्छतः कटकपर्यन्तं च सर्वेषां मानवानां हृदि एकं ऐक्य सकललोककल्याणकारिणी भारतीया संस्कृतिः विकासते। भारते परस्परमाचार-विचार-व्यवहार-वेश-भूषा-भाषादीनां भेदे स्त्यपि सर्वे रामकृष्णादिकमवतारं मन्यन्ते, जन्मान्तरं स्वीकुर्वन्ति

श्राद्धादौ विश्वसन्ति, देवतापूजनादौ प्रवर्तन्ते, तीर्थयात्रादिकं कुर्वन्ति, दानं ददते, पूज्येषु श्रद्दधते, प्राणपणेनापि गोरक्षां कर्तुं निरन्तरं चेष्टन्ते, परोपकारे प्रयतन्ते, पापाच्च विरमन्ति। तेषां दृढतरोऽस्ति विश्वासो, यत् परोपकारेण पुण्यं भवति, परपीडनेनच पापं प्रजायते—

अष्टादशपुराणानां व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

आधुनिकाः पदार्थविद्यावेदिनः वैज्ञानिका अपि भारतस्य प्राकृतिकीं पूर्णतां स्वीकुर्वन्ति, मन्यन्ते च यद् भारतवर्षसदृशः पूर्णप्रकृतिसम्पन्नः प्रदेशो नास्मिन् भूमण्डले क्वचिदस्ति। सर्वोन्नतः सर्वसमृद्धिशाली विशालो नगाधिराजो हिमालयो विन्ध्यश्च भारतवर्षमेवालङ्कुरुतः। सर्वतोऽधिकपुण्यशालिनी त्रिलोकपावनी भव्या भगवती भागीरथी भारतवर्षे एव निभाल्यते, यस्या अपूर्वं महिमानं बहवो विदेशीया अपि विद्वांसो मन्यन्ते। विश्वविश्रुता वाराणसी, त्रिवेणीतटे वर्तमानस्तीर्थराजः प्रयागश्च केषां सचेतसां मनांसि न मोदयतः, ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चत्वारो वर्णा अत्रैव वर्तन्ते। षण्णां ऋतूनां यथाक्रममत्रैव प्रादुर्भावो भवति। विविधप्रकाराः श्वेत-कृष्ण-गौराङ्गाः मानवाश्चात्र भारतवर्षे एव दृश्यन्ते। सर्वेषु देशेषु लब्धजन्मानो जीवाः भारते एव प्राणान् धारयितुं शक्नुवन्ति, नान्यत्रेति भारतस्य प्रकृतिपूर्णता सुतरां सिध्यति। भारतीयो धर्मः, संस्कृतिः, ज्ञानम्, विज्ञानम्, वेदाः, पुराणानि, धर्मशास्त्राणि, दर्शनानि च भारतस्य सूक्ष्मप्रकृतिपूर्णताया वैज्ञानिकगम्भीरगवेषणायाश्च प्रत्यक्षप्रमाणभूतानि सन्ति।अतो हि नूनं भारतवर्षमिदं स्वभावतो मृत्युलोकस्योत्तमाङ्गभूतमित्यत्र नास्ति कश्चित् सन्देहलेशः। यथा किलोत्तमाङ्गं शिरः ज्ञानेन्द्रियाणां केन्द्रस्थानं तथैव मृत्युलोकोऽयं सर्वेषां लोकानां श्रेष्ठतरं केन्द्रं विद्यते। तत्रापि अस्माकं भारतवर्षम्, यत्र जन्म लब्धुं देवा अपि निरन्तरं वाञ्छन्ति।

यद्यपि पुराणेषु भुवनकोशवर्णने भारतादन्यदेशानामपि रुचिरं वर्णनं विद्यते, तथापि भगवतो लीलास्थली पुण्यतमा भारतभूमिरेवास्ति। अत्रैव समये समये प्राकृतमानव इवावतरति स्वयं भगवानादिपुरुषो नारायणः, रक्षति वर्णाश्रमव्यवस्थाम्, पालयति धर्मपथानुगामिनः, अधर्मनिवृत्तये दुष्टान् निहत्य धर्मग्लानिं दूरयति, सुखयति च सर्वं लोकम्। पवित्रतमेऽत्र भारत एव बदरिकाश्रमतो रामेश्वरपर्यन्तं जगन्नाथपुरीतो द्वारकां यावत् मध्ये मध्ये पवित्राणि तीर्थानि पूज्यानि देवस्थानानि च सन्ति, यत्रत्या स्थावरजङ्गमा अपि पुण्यभाजः पूततमा धन्यतमाश्च मन्यन्ते

जनैः। अतएव भारतीया भारतभूमिमिमां स्नेहमयीमुदारां मातरमिव श्रद्धया सततं समाद्रियन्ते, संस्मरन्ति स्तुवन्ति च प्रत्यहं प्रातरुत्थाय—

समुद्रवसने देवि ! पर्वतस्तनमण्डले ।
विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।।

## सुमेरुपरिचय

जम्बूद्वीपस्य नवानां खण्डानां मध्ये इलावृत्तवर्षमस्ति, तस्यापि मध्ये पर्वतराजः स्वर्णमयः सुमेरुः स्थितोऽस्ति। अयं लक्षयोजनोच्छ्रितो वर्तते, यत्र चतुरशीतियोजनः पृथिव्या उपरि तथा षोडशसहस्रयोजनः पृथिव्या अधस्ताद् विद्यते। अयं मूलभागे षोडशसहस्रयोजनस्तथा उपरि चतुर्दिक् द्वात्रिंशद् योजनोऽस्ति। मेरोश्चतुर्दिक्षु चत्वारः पर्वताः एवं विस्तृताः सन्ति, मन्ये सुमेरोः धारणायैते ईश्वरकृताः स्तम्भाः सन्ति, यतो हि उपरि विस्तृत्वादधश्च संकुचितत्वात् सुमेरोः पतनस्य सम्भावना न भवेत्। एते सर्वे दश दश योजनोन्नता विद्यन्ते। तत्र पूर्वे मन्दरो दक्षिणे गन्धमादनः पश्चिमे विपुलः सुपार्श्वश्चोत्तरे विद्यते—

महापादास्तु चत्वारो मेरोरथ चतुर्दिशम्।
यैः धृतत्वान्न चलति सप्तद्वीपवती मही ।। = वा० पु० ३४।११
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः। = वि० पु० २।२।१६

तेषु चतुर्षु पर्वतेषु क्रमशः चत्वारो विशाला ध्वजाकारा एकादश-सहस्रोच्छ्रिताः कदम्ब-जम्बू-अश्वत्थ-वटवृक्षाः, दुग्ध-मधु-इक्षुरस-शुद्धजला श्चत्वारः सरोवराश्च सन्ति, येषु मोदमाना देवा अप्सरोभिः सह विहरन्ति। मन्दराचलतो निःसृत्यारुणोदानाम्नी नदी इलावृत्तस्य पूर्वभागे प्रवहति। गन्धमादने वर्तमानस्य जम्बूवृक्षस्य पक्वफलानां रसनेन पूर्णा जम्बूनाम्नी नदी मेरोर्दक्षिणे भागे प्रवहति। सुपार्श्वपर्वताद् पञ्च मधुरा धारा निःसृत्य तत्पश्चिमं भागं सुवासयन्ति। विपुलपर्वताद् दुग्ध-दधि-मध्वादीनां नदा निर्गत्य इलावृत्तस्योत्तरे भागे प्रवहन्ति।

सुमेरोर्मूले विंशतिः तथा चतुर्दिक्षु अष्टौ विशालाः पर्वताः सन्ति-येषां मध्ये निरन्तरं सोऽग्निवद्दीप्यमानो दृश्यते। सुमेरोरुपरि अन्तरिक्षे ऽवस्थिता चतुर्दशयोजनविस्तृता ब्रह्मणः सुवर्णमयी ब्रह्मपुरी विद्यते। यत्र ऋद्धि-सिद्धि-गन्धर्व-देवता-योगीन्द्र-मुनीन्द्रोपेन्द्रादिभिः सेवितो ब्रह्मा

विराजते। ब्रह्मलोकस्य चतुर्दिक्षु अष्टानां लोकपालानामत्यन्तं मनोहराः अष्ट पुर्यः सन्ति। सुमेरोः पूर्वभागे इन्द्रस्यामरावती नाम्नी पुरी विद्यते, या सर्वविधशोभासम्पन्नाऽस्ति तथा तत्र सिद्ध-चारण गन्धर्व-किन्नराप्सरसो देवताश्च विराजन्ते। अग्निकोणे ऽग्निदेवस्य तेजोवती नाम्नी नगरी विद्यते, यत्र स स्वतेजसा निरन्तरं विराजते। दक्षिणे यमराजस्य संयमिनी नाम्नी पुरी वर्तते, यत्र पाञ्चभौतिकस्थूलशरीरत्यागानन्तरं जीवाः स्व-स्वशुभाशुभकर्मणां भोगाय गच्छन्ति। नैऋत्यकोणे निर्ऋतिदेवताया रक्षोवती नाम्नी नगरी वर्तते, या राक्षसद्वारा संस्कृता तिष्ठति। पश्चिमे वरुणस्य शुद्धवती नाम्नी पुरी विद्यते, यत्र सिद्ध-गन्धर्व-सेवितो वरुणदेवो निवसति। वायव्यकोणे वायुदेवताया गन्धवती पुरी विद्यते, यत्र प्रभञ्जनदेवो विराजते। उत्तरे सोमस्य कान्तिमती पुरी वर्तते, यत्र धर्मनिरता जनाः सोममुपासते। ईशानकोणे ईशानदेवस्य यशोवती नगरी विद्यते, यत्र रुद्रद्वाराधिष्ठितं महद् भवनमस्ति, स तत्रैव गणेश्वरैः प्रमथादिभिश्च सम्वृत्तो विराजते। विवरणमस्याधो निर्दिष्टे चक्रे द्रष्टव्यम्—



जम्बूद्वीपे सुमेरुपर्वत एक एवंविधो महत्त्वपूर्णः पर्वतोऽस्ति, यतोऽनेकाः पर्वतश्रेणयो निर्गत्य सर्वतः परिसरन्ति। अस्य पुराणवर्णितभौगोलिकस्थितेराधारेणास्मिन् वैज्ञानिकेयुगे मौलिकमन्वेषणं कृत्वा महतोऽपि महान् लाभः प्राप्तुं शक्यते। कियन्त आधुनिकाः समालोचकाः सुमेरुं पामीरपर्वतप्रतिनिधिं मन्यन्ते। डा० हर्षमहोदयः 'मेरु होमलेण्ड आफ दी अरियन्स' इति शीर्षके लेखे मेरुपर्वतमलताईपर्वतस्य क्षेत्रे स्थितं मन्यते। अलताई पर्वतो वर्तमाने एशियामानचित्रे पश्चिमसाइवेरिया मङ्गोलियामध्ये दृश्यते। डा० हर्षे महोदयेन एवं सिद्धान्तं स्थिरीकर्तुमनेकेषां प्रमाणानां युक्तीनाञ्चोल्लेखं कुर्वता अलताई पर्वतक्षेत्रे वर्तमानं मेरुमेव आर्याणां मूलनिवासस्थानं निश्चितमस्ति। अलताईशब्दो मङ्गोलियाभाषाया अस्ति यस्यार्थो भवति, सुवर्णपर्वतः। पुराणेषु सुमेरुः सुवर्णमयः पर्वतः प्रोक्तोऽस्ति तथा देवानां निवासभूमिः कथितोऽस्ति। अतोऽयं भूतलस्वर्गोऽपि प्रोच्यते। एवं डा० हर्षे महोदयस्य सिद्धान्तानुसारं पुराणेषु हिमालयस्योत्तरे वर्णितः सुमेरुपर्वतः साइवेरियायां वर्तमानः अलताई पर्वत एव सम्भवति।

पुराणेषु भुवनकोश एको महत्त्वस्यास्ति विषयः, यत्र समस्तानां भुवनानां भौगोलिकं नाम विस्तारः स्वरूपं च पुराणद्वारा समुपस्थापितमस्ति। भुवनकोशस्य वास्तविकज्ञानाय तत्केन्द्रभूतस्य सुमेरोः स्वरूपज्ञानमत्यन्तमावश्यकमस्ति। पुराणेषु सम्पूर्णा पृथिवी कमलरूपा स्वीकृताऽस्ति, यस्याः कर्णिकायां मेरुपर्वतस्य स्थितिरुक्ताऽस्ति। मेरुः पृथिव्या नाभिबन्धनमभिमतमस्ति। पृथिव्या नाभिबन्धनत्वात् सुमेरुः केन्द्रस्वरूपमस्ति यं मूलं मत्वा भुवनकोशस्य विन्यासोजातः। पुराणानुसारं सुवर्णमयो मेरुपर्वत इलावृत्तमध्ये स्थितो जम्बूद्वीपस्यास्ति केन्द्रम्। इलावृत्तं सुमेरोश्चतुर्दिक्षु नवसहस्रयोजनपर्यन्तं विस्तृतमस्ति। पुराणेषु समस्तस्य भूमण्डलस्य विवरणं महता कौशलेनोपस्थापितं वर्तते। पौराणिकं भूगोलं न केवलं कल्पनाप्रसूतमस्ति, किन्तु यथार्थमस्ति। तथापि पौराणिकभूगोलस्य सामग्री इयती अपूर्णा विद्यते, यस्या आधारे विश्वस्य मानचित्रं साम्प्रतं न सम्मुखे आयाति। अस्मिन् सम्बन्धे इदानीमपि अधिकस्यान्वेषणस्यावश्यकताऽस्ति।

## पौराणिकाधुनिकभूगलयोरन्तरम्

पौराणिकभूगोल-वर्तमानभूगलयोरिदमन्तरमस्ति। यद् भगवता वेदव्यासेन पुराणेषु भूमण्डलस्य विशिष्टा भागा सप्तसु द्वीपेषु विभक्ताः,

किन्तु आधुनिका भूगोलवेत्तारो विपश्चितः (१) यूरेशिया, (२) अफ्रिका, (३) आस्ट्रेलिया, (४) उत्तरो अमेरिका, (५) दक्षिणो अमेरिकेति पञ्च-महाद्वीपान् मन्यन्ते तथा अवशिष्टान् भूखण्डानुपद्वीपनाम्ना व्यवहरन्ति। किन्तु व्यासदेवेन पुराणेषु क्षारेक्षुसुराघृतदधिदुग्धस्वादूदकनाम्ना सप्त समुद्रा उक्ताः सन्ति। परं वर्तमानभूगोलमर्मज्ञा विद्वांसो विभिन्नभागेषु जलस्य भिन्न-भिन्नविशेषतया समुद्राणां विभिन्नानि नामानि मन्यन्ते। यथा—(१) क्षारसमुद्रः (इण्डियन ओसन), (२) इक्षुरससमुद्रः (सोमीर), (३) सुरासमुद्रः (अटलाण्टिक सागर), (४) घृतसमुद्रः (हुडनस), (५) दधि-समुद्र. (अण्टार्टिका), (६) दुग्धसमुद्रः (ह्वाइट ओसन), (७) स्वादूदक-समुद्र. (रूमसागर), पौराणिकैः समुद्रैः सहैषामाधुनिकसमुद्राणां नामतुल-नया प्रतीयते यत् प्राय उभयो. सिद्धान्ते साम्यमेवास्ति।

पुराणेषु द्वीप-नद-नदी-पर्वतादिभौगोलिकस्थितेश्चित्रणे स्मर्तव्यं यद् भौगोलिकस्थिते निरन्तरं परिवर्तन जायते। सहस्रवर्षपूर्वं यत्र महान्तः पर्वता आसन्, तत्राद्य समुद्रा जाताः। यत्र च गभीराः समुद्रा आसन् तत्राद्य महान्तो गरयो दृश्यन्ते। बहवो द्वीपाः समुद्रे विलीनाः, अनेके जलमयाः प्रदेशा जननिवासयोग्या जाताः। इतिहासवेत्तारः सम्यग्जानन्ति यदमे-रिकायाः प्राकट्ये कियन्ति वर्षाणि अभूवन् ?

कविवरभवभूतिकृते उत्तररामचरिते सीतया सह पुष्पकविमानेन लङ्कात अयोध्या प्रत्यागच्छता श्रीरामेण जनस्थानस्य प्राकृतिकच्छटा-परिवर्तनस्याकर्षकं चित्रमुपस्थापयता प्रोक्तं प्रिये, यत्र पूर्वं स्रोतो वह-तिस्म तत्रेदानीमुच्छलन्त्या नद्या पुलिनं दृश्यते, यत्र हरितवृक्षव्याप्त सघनं वनमासीत्तत्राद्य विस्तृता भूमिरलोक्यते। यच्च स्थान पूर्वं विरलं विलोक्यते स्म, तदद्य पुष्पित-फलित-लतिकाच्छन्न जातमस्ति। बहुदिना-नन्तरमद्येदं जनस्थान मया विलक्षणमनुभूयते, किन्तु यत्र कुत्र पर्वताना यथावद् विन्यासैरेवेदं जनस्थानं प्रतीयते—

> पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितः,
> विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
> बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं,
> निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥ = १।७२

केवलमिदं कल्पनामात्रं न विद्यते। अद्यत्वे कियद्दिनपूर्वं यमुनातीरे निर्मितादागरास्थितताजमहलाद् यमुना दूरं गताऽस्ति, कौरववंशस्य प्राचीनराजधानी हस्तिनापुरं भग्नावशेषातिरिक्तं किमस्ति ? तक्षशिला-

नालन्दा ओदन्ती-विक्रमशिलादीनां विश्वविद्यालयानां का स्थितिरस्ति ? हड़प्पा-मोहनजोदड़ो-सिन्धुघाटी-सभ्यतादीनां दर्शनेनाद्यत्वे काः काः कल्पनाः क्रियन्ते ? प्राचीनतत्त्वान्वेषका भूगर्भविद्याविशारदा अद्यत्वे राजपूतानारेगिस्तानं प्राचीनं समुद्रं कथयन्ति। यदा समुद्रस्थाने रेगिस्तानं सम्भवति तर्हि लक्षवर्षपूर्वं पुराणेषूल्लिखितभौगोलिकस्थितिषु परिवर्तनं न किञ्चिद् आश्चर्यजनकं सभवति। अत. पौराणिकाधुनिकभूगोलयोरन्तरे सत्यपि पौराणिकं भूगोलं न कपोलकल्पितं मन्तु युक्तमस्ति, प्रत्युत तत् सर्वथा सत्यं प्रामाणिकं चेति मत्वा तस्य वास्तविकतान्वेषणाय नूनं दीर्घतरः प्रयत्नो विधातव्यः।

## भौगोलिकमैतिहासिकं च तथ्यम्

प्रायः प्रतिपुराणं सर्गवर्णनप्रसङ्गे पृथ्वी-नक्षत्र-ग्रहोपग्रह-ब्रह्माण्डानामाविर्भावस्य क्रमो वर्णितोऽस्ति। सप्तद्वीपायाः सप्तसमुद्रायाः पृथिव्या वर्णनमपि प्रत्येकपुराणे समानरूपेणोपलभ्यते, किन्तु द्वीप-वर्षादीनां वर्णनस्य तत्सीम्नो विस्तारस्य चाधुनिकपरिमाणेन संगतिर्जायते। एवं द्वीपादीनां नामकरणमपि अद्यतनभूगोलेन सह न संगतं भवति। प्राचीना ऋषयो महर्षयश्च प्रायोऽरण्यवासिनो दिव्यदृष्टिसम्पन्नाश्च आसन्। समस्तं जगद् तेषां हस्तामलकवत् प्रत्यक्षमासीत्। तन्मुखाम्भोजनिःसृतंभूमण्डलस्य परिमाणमपि न केवलं काल्पनिकं भवितुमर्हति। अतः तात्कालिको भौगोलिकः सीमा अन्यादृश आसीदथवा योजनपरिमाणः कश्चिदल्पीयानेव प्रचलित आसीदिति कल्पनमसंगतं न प्रतिभाति।

पुराणेषु समस्ते भूवलये स्थितानां देशानां वर्णनं तत्रत्यानां निवासिनामाचार-विचार-व्यवहार-वेष-भूषा-स्वभाव-सभ्यता-रुचिप्रभृतीनां भौगोलिकस्थितेश्च वर्णनमपि विद्यते, परन्तु भारताद्भिन्नानां देशानां नाम्नोऽप्रचलितत्वात्तत्सम्बन्धे इदमित्थं रूपेण किञ्चिन् कथनं सगतं न प्रतीयते। पुराणेषु जम्बूद्वीपः सम्भवतः एशियायाः प्राचीनं नाम प्रतीयते। भारतस्य सीमासु स्थितानां देशानां प्रकृतिवर्णने पुराणेषु न क्वचन शैथिल्यं विलोक्यते। यदा पुराणेषु भगवान् व्यासः पूर्वतः पश्चिमलम्बायमानस्य हिमालयतो दक्षिणे कन्याकुमारीपर्यन्तस्य च भारतस्य विभागं कर्तुं प्रयतते, तदा तस्य हृदये देशप्रेम्णोऽभिमानो जागृतो भवति, तदानीं स भारतादन्यं कमपि देशं न निर्दिशति, भारतस्य वैशिष्ट्यं व्यञ्जयन् ब्रवीति यदयं देशः सर्वदेशेभ्योऽप्यस्ति महान् विचित्रः। कर्मभूमेरित

एव स्वर्गापवर्गावाप्तिः सम्भवति। अस्यैकैकोऽपि कणः परमः पवित्रोऽस्ति। अतोऽत्र जन्म ग्रहीतुं देवा अपि अभिलषन्ति। कन्याकुमारीतो गङ्गोत्तरी-पर्यन्त प्रसृतस्य भारतवर्षस्यान्येषामष्टविभागानां च सोम्नो ज्ञानं सम्यक् न जायते। अतोऽनुमीयते यत् प्राचीनकाले भारतस्य सीमा भौगोलिक-स्थितिश्च काचिदन्यैवासीत्। भारतवर्षीय-नद-नदी-पर्वतादीनां वर्णने तद्भौगोलिकस्य ज्ञानस्याभासो भवति। पुराणानुसारं बृहत्तरभारतस्य विस्तारः पूर्वे प्राग्ज्योतिषात्(आसाम) ईरानपर्यन्तं, दक्षिणे कन्याकुमारीतः तुर्किस्तानपर्यन्तमासीत्। इयति विशाले भूभागे भारतीयायाः संस्कृतेः प्रचारः प्रस्तारो व्यवहारश्चासीत्।

आक्षेपः—कियन्तो नवीनाः समालोचकाः कथयन्ति यत् पौराणिकं भूगोलं सर्वथाऽप्रामाणिकमशुद्धञ्च वर्तते। यतो हि पुराणकर्तुःसम्यग्-भूगोलस्य ज्ञानं नासीत्। अतस्तन्निर्मितं पुराणमपि अश्रद्धेयमस्ति।

परिहारः—पौराणिकं भूगोलं सर्वथा सत्यं शुद्धं प्रामाणिकं श्रद्धेयञ्च विद्यते। यैः पुराणानां सम्यगध्ययनं न कृतमस्ति ते पौराणिकं भूगोलं निकाममप्रामाणिकमसत्यञ्चेति कथयेयुः, परन्तु विधिवत् पुराणानाम-ध्ययनकर्तारः पौराणिकं भूगोलं सत्य प्रामाणिकञ्च मन्यन्ते।

पुराणरहस्यानभिज्ञा व्यक्तयः पुराणवर्णितां पृथिवीं प्रत्यक्षपृथिवीतो यदा मेलयन्ति तदा तैर्दृश्यमानायाः पृथिव्या व्यास-परिधि-क्षेत्रफलादिषु महदन्तरं दृश्यते। अतः पौराणिकस्य भूगोलस्य वास्तविकज्ञानाय सर्व-प्रथम पुराणानां पूर्वापरमध्ययनं विधेयम्, ततस्तेषा ज्ञानं भविष्यति यद् यस्यां भूमौ वयं निवसामः, तत्समाना बहवो भूमयः पुराणवर्णितभूगो-लाभ्यन्तरे समागच्छन्ति। पौराणिकं भूगोलं केवलं दृश्यमानायाः पृथिव्या एव भूगोल नास्ति, किन्तु पौराणिके भूगोले खगोलमपि सन्निविष्टं वर्तते। यस्यां पृथिव्यां वयं वसामः, तत्र न कोऽप्येवंविधः पर्वतो वर्तते यो लक्षयोजनक्रोशपरिमितः स्यात्। नापि तत्राष्टदिक्पालानां नगर्यो दृश्यन्ते। अतः पुराणानि यां पृथिवीं वर्णयन्ति सा काचिदन्यैवास्ते। दैर्घ्य-विस्तारयोर्ध्यानमदत्वा बलात्कारेण केवलमात्मभूमिमात्रस्वी-कारोऽस्ति भ्रमः। अस्माकं भूगोले न सन्ति ते विशालाश्चत्वारः पर्वताः, येषु आम्रजम्बूवृक्षाणां रसेन नद्यः प्रवहन्ति, न वा तत्रेक्षुरस-दुग्ध दधि-घृतसरोवरा दृश्यन्ते। ते तु स्वर्गलोके वर्णिता सन्ति ऋग्वेदे (४।३४।६)

घृतह्रदा मधुकूलाःसुरोदकाः क्षीरेण पूर्णा उदकेन दध्ना।
एतास्त्वा धारा उपयन्तु सर्वाः स्वर्गलोके मधुमत पिन्वानाः॥

पुराणवर्णिता भूमिरतिविस्तृता भूमिरस्ति तां स्वनिवासभूमितो मेलयित्वा पौराणिक्या भूमेरसत्यत्वप्रतिपादनं न कस्यचिद् विचारशीलस्य कर्तव्यं विद्यते। एवन्तु स एव वक्तुं शक्नोति, येन पुराणवर्णिते भूगोले न सम्यग्ध्यानं प्रदत्तमस्ति।

श्रीमद्भागवतं हि सूर्यतः 'पञ्चविंशतिकोटियोजनानामुपरि, सूर्यतः पञ्चविंशतिकोटियोजनानामधः, सूर्यतः पञ्चविंशति कोटियोजनं वामे पञ्चविंशतिकोटियोजनञ्च दक्षिणे च विस्तृतां भूमिं मनुते—

> अण्डमध्यगतः सूर्यो द्यावाभूम्यो यदन्तरम्।
> सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः॥ = ५।२०।४३

एतदेवैकं ब्रह्माण्डमुच्यते। अस्य ब्रह्माण्डस्य गोलार्द्धद्वयं विद्यते। द्वयोर्योगं कृत्वा श्रीमद्भागवतादौ पृथिव्या मानं पञ्चाशत्कोटिविस्तृतं लिखितमस्ति—पञ्चाशत्कोटिविस्तीर्णा सशैलवनकानना॥

पौराणिकैर्विद्वद्भिः एतत् स्थूलं जगदेवेन्द्रियातीतस्य सूक्ष्मस्य जगतः सर्वाङ्गपूर्णं प्रतिबिम्बमभिमतं वर्तते। सूक्ष्मे जगति येषां येषां पदार्थानां यादृशी यादृशी स्थितिरस्ति पुराणैरपि तत्प्रतिनिधिपदार्थानां तादृशी तादृशी स्थितिः वर्णिताऽस्ति। यथा कर्गजेऽङ्कितभूगोलचित्रे दृश्यमानस्य जगतः प्रमुखानां नद-नदी-ग्राम-नगर-वन-पर्वत-समुद्रादीनामङ्कित कृत्रिम रेखात्मकं चित्रं न वास्तविकनद नदी-ग्राम-नगर-वन-पर्वत समुद्रादीना समानं भवति। तेषां परिमाणे कियदन्तरं भवत्येव तथैव दृश्यमानमिद स्थूलं जगदपि इन्द्रियातीतस्य तस्य सूक्ष्मजगतः प्रतिचित्रमात्रमस्ति, यथा मानचित्रेऽङ्किता गंगा-यमुना दीनां प्रतिमूर्तयो रेखा न वास्तविकगंगा-यमुनादिवत् स्वतरङ्गैः किमप्याप्लावयन्ति तथैव पुराणवर्णितं नद-नदी-नगरादिसंस्थानं न तादृश कार्यकारि स्थूले जगति समुपलभ्यते।

कस्यापि ग्रन्थकारस्य वास्तविकमभिप्राय व्यञ्जयितु तद्ग्रन्थेऽङ्कित-पारिभाषिकशब्दानामावश्यकता भवति। भूगोले तु पारिभाषिकशब्दाना-मधिक मूल्य भवति। यतो हि तत्सम्बन्धिनं प्रत्येकं भावं व्यक्ती कर्तुं भूयो भूय पारिभाषिकशब्दानां प्रयोग आवश्यको भवति। पारिभाषिक-शब्दानामर्थसीम्नो निर्धारणं ग्रन्थकारस्येच्छायामस्ति निर्भरम्। स यं शब्दं यावद् व्यापकं कर्तुं वाच्छति तावत् स्वेच्छापूर्वकं करोति। अस्मिन् अन्यस्य विचारः तस्मिन् नियन्त्रण कर्तुं न प्रभवति। अत. पौराणिक-भूगोलविषयकपारिभाषिकशब्दानामर्थसीमा पौराणिकभाषानुसारमेव

मन्तुं शक्यः। लोकव्यवहारे भूमण्डलशब्दस्यार्थः पृथ्वीमात्रं कामं भवेत्, किन्तु पुराणेषु भूमण्डलशब्दपरिभाषा कृताऽस्ति, यत् सूर्यो यावद् दूरं स्वकीयं तापमुपस्थापयितुं शक्नोति तथा ताराभिः सह चन्द्रमा वा यावत्पर्यन्तं दृश्यते, तावदेव विस्तृतं स्थानं भूमण्डलमुच्यते। तथा चोक्तं श्रीमद्भागवते।

भूमण्डलायामविशेषो यावदादित्यस्तपति, यत्र चासौ ज्योतिषां गणैश्चन्द्रमा वा सह दृश्यते (५।१६।१)। विष्णुपुराणेऽप्युक्तमस्ति यत् सूर्यकिरणानां यावत् प्रकाशो भवति तथा चन्द्रमसो रश्मयो यावत्पर्यन्तमुपतिष्ठन्ते तत्प्रदेशस्य नाम पृथिवी वर्तते। सा समुद्र-नद-नदी-पर्वतपर्यन्ता कथं न स्यात्?

रविचन्द्रमसो यावत् मयूखैरवभासते।
स समुद्रसरिच्छैला तावती पृथिवी स्मृता ॥ = २।७।३

*अनयैव दृष्ट्या पृथिव्या दैर्घ्यविस्तारौ पञ्चाशत्कोटियोजनपरिमिता-*वुक्तौ स्तः, तथा सप्तसमुद्राणां वर्णनमपि अनयैव दृष्ट्या जातमस्ति।

कियन्तः समालोचकाः पुराणेषु आक्षिपन्ति यत् पुराणेषु दुग्ध-दधि-घृत-सुरादिसमुद्राणां सुवर्णमयस्य सुमेरुपर्वतस्य च यद्वर्णनं दृश्यते तदसम्भवं प्रतीयते, यतः पुराणेषु येषां नद-नदी-नगर-सरोवर वन-पर्वतादीनां वर्णनं विद्यते, नाद्यत्वे ते क्वचनोपलभ्यन्ते। जम्बूरसपरिपूर्णस्य जम्बूनदस्य, आम्ररसेन वहन्त्या अरुणोदाया नद्या, इक्षुरस-दुग्ध दधि-घृत-सुरादि समुद्राणां स्वर्णसुमेरुपर्वतस्य, स्वर्गनरकादीनां च न क्वचनोपलब्धिर्भवति। तथा तेषां यद् दैर्घ्य-विस्तारौनत्याधस्त्यादि निर्दिष्टं न तत् प्रत्यक्षमवतरति नवाऽनुमानद्वारा तस्य सत्यता स्वीकर्तुं शक्या। पुराणानुसारमस्माकं पृथिव्या परिमाणं पञ्चाशत्सहस्रयोजनपरिमितमुक्तमस्ति, परं प्रत्यक्षे प्रायः सा चतुः सहस्रक्रोशपरिमिताऽस्ति। एवं सुमेरोरौनत्यं लक्षयोजनपरिमितं कथितं विद्यते, किन्तु पृथिव्यां पर्वतानामौनत्यं सार्द्ध-द्विसहस्रतोऽधिकं नास्ति। आधुनिकैः गवेषकैः हिमालयस्यगौरीशंकर-शिखरस्यौनत्यं २९००० फुटपरिमितमुक्तं, किन्तु पुराणेषु अस्य परिमाणं सहस्रयोजनपरिमितं निर्दिष्टं वर्तते। अतः पौराणिकं भूगोलं सर्वथाऽसङ्गतमप्रामाणिकमश्रद्धेयञ्चास्तीति।

तन्न युक्तिसहं प्राधान्येन व्यपदेशा भवन्तीति न्यायानुसारं यथा केनचिद् विशिष्टगुणकारणेन कश्चन पदार्थः तन्नाम्ना प्रसिद्धयति तथैव दुग्ध-दधि-घृत-सुराणामभावेऽपि तत्समानस्वादिष्टजलत्वेन समुद्राणां

नामापि तादृशं प्रसिद्धम्। सुमेरोः सुवर्णमयकथनस्य तात्पर्यमिदमेव सम्भवति यत्तत्राधिकमात्रायां सुवर्णमुपलभ्यते। एवं यद्यपि ग्रीनलैण्डस्याक्षरार्थो भवति हरितं स्थानं तथाप्येतस्याभिप्रायोऽयं न भवति यत्तत्रत्यानि दुग्ध-दधि-जल-प्रस्तर-मृत्तिकादीनि सर्वाण्येव वस्तूनि हरितानि भवन्ति, किन्तु परिपूर्णशाद्वलाधिक्येनैव तस्य द्वीपस्य नाम ग्रीनलैण्डमिति जातम्। तथा गोल्डनटेम्पल शब्दस्यार्थो भवति सुवर्णमन्दिरम् एवं काठ की हवेली इत्यस्यार्थो भवति काष्ठगृहं, किन्तु एतेन न ज्ञेयं भवति यत्तत्रेष्टका-प्रस्तर-चूर्णादयो न संलग्ना सन्ति, परन्तु उपरिभागेऽधिकसुवर्णोपयोगेन तादृशस्य मन्दिरस्य नाम गोल्डनटेम्पल इति जायते तथा काष्ठाधिक्येन च तादृशस्य गृहस्य नाम काठ की हवेली इति जायते। एवं पुराणेषु भूमण्डलविषये यत् किमपि लिखितमस्ति तत् सर्वथा विवेकपूर्णमस्ति। तस्य माननेन महर्षेर्व्यासस्याद्भुतायां प्रतिभायामाश्चर्यं जायते। पृथिव्या परिमाणं व्यासः परिधिः क्षेत्रफलम् सीमा पर्वतास्थितिर्दैर्घ्यं विस्तार औन्नत्यं नद-नदी-वन-सरोवरादीनां संस्थानं सर्वाङ्गपूर्णं वर्णितं वर्तते। अतो वैज्ञानिकप्रकाशे यत् किमपि दृश्यते तत् पुराणवर्णितस्य रहस्यस्यास्ति छायामात्रम्। तस्मात् पुराणोक्तं सर्वं सगतं विश्वसनीयमनुसन्धेयञ्चेति निश्चप्रचम्।

**खगोलचर्चा**

प्रायः सर्वेषु पुराणेषु खगोलसम्बन्धिविवेचनं विद्यते, परं विशेषतया विष्णु ब्रह्माण्ड-कूर्मपुराण-भविष्यपुराण-श्रीमद्भागवतेषु तु खगोलस्य पर्याप्तं विवेचन कृतमस्ति। एषु सूर्य-चन्द्रादि-ग्रहोपग्रह-नक्षत्र-मण्डल-राशिचक्र-शिशुमारचक्र ध्रुवतारादीनामुत्पत्ति-गति--विगति परिवर्तनादि-रहस्यं विवेकपूर्णपद्धत्या लिखितमस्ति। केषां ग्रहोपग्रहताराणां किं परिमाणमस्ति? को ग्रहः पृथिवीत कियद्दूरं वर्तते? कश्च ग्रहः कया गत्या कियति काले केन मार्गेण भ्रमति? कस्य ग्रहस्य कदा को वा कुत्र च प्रभावो भवति? एभ्यो ग्रहोपग्रहादिभ्यः को लाभो भवति मानवानामिति तर्कसंगतं विवेचन पुराणानामस्ति मौलिको विषयः।

विश्वस्य वैज्ञानिकाः खगोलविषयकगवेषणायां यथायथमग्रेसरन्ति तथा तथा पौराणिकं खगोलं समीचीनं प्रतीयते। अमेरिका-रूसयोरुपग्रहैः विश्वस्य वैज्ञानिकानां नेत्राणि उद्घाटितानि। समस्त संसार· साम्प्रतं मन्तुमुद्यतो जातोऽस्ति, यत् पुराणवर्णितं खगोलं सत्यमस्ति। रूसस्य राकेटो मङ्गललोकमाक्रामति। अमेरिकायाः स्फुटनिकश्चन्द्रधरातले भूयो भूयो गच्छति प्रत्यागच्छति च।

अखिललोकस्रष्टुः भगवन्नारायणनाभिह्रदसमुद्भवसरोजजन्मनो हि ब्रह्मणो मानसपुत्रो महर्षिरत्रिमुनिर जायत। स च लोककल्याणकामनया पित्रा विधात्रा सृष्ट्यर्थं समादिष्टो मनोवाक्कायकर्मभिः शुभानि समाचरन् काष्ठ-कुड्य-शिलासन्निभ ऊर्ध्वबाहुः सन् दिव्यत्रिंशत्सहस्रवर्षपर्यन्त-मनुत्तमं नाम दुश्चरं तपस्तेपे। तेनानन्दमयं क्लेशनिवारकं ब्रह्मविष्णु-महेशानामान्तरिकं तेजः प्रकाशितम्। तेषामष्टमांशेन च सोमस्योत्पत्ति-रजायत। तपःप्रभावात् सञ्जातनिर्मलकान्तेर्निर्निमेषं तपतस्तस्य अत्रि-मुने र्नेत्राभ्यां तेजोबिन्दुः सहसा प्रास्रवत्, यज्ज्योत्स्नया स्थावरजङ्ग-मात्मके समस्ते विश्वे प्रकाशो जातः[1]।

लोकपितामहस्य विधेरादेशात्तं तेजोबिन्दुं पुत्रेच्छया स्त्रीरूपेण दिशो धारयामासुः, किन्तु तत्तेजसो दुर्धर्षतया ताश्चिरं धर्तुमसमर्थाः सत्यो भूमौ प्राक्षिपन्। ततो वेधा वसुधायां पतन्तं तमादाय पुरुषाकारं च विधाय स्ववेदमये रथे संस्थाप्य तेन सागरपर्यन्ताया वसुन्धराया एकविंशतिवारं प्रदक्षिणं कारयित्वा तं स्वं धाम नीतवान्।

तत्र देवर्षिभिः सोमदैवत्यै र्मन्त्रैः संस्तूयमानं तं भगवानब्जयोनि-रशेषौषधि-द्विज-नक्षत्राणामाधिपत्येऽभ्यषेचयत्[2]।

मत्स्यपुराणानुसारं तु राज्ञः पृथोः पृथिव्या आधिपत्येऽभिषे-कानन्तरं तेनैवौषधि-यज्ञ-व्रत-तपसामाधिपतिश्चन्द्रः कृतः[3]।

चन्द्रमसो यत्तेजः पृथिव्यामपतत्तदोषधिरूपेण परिणतम्। अतो-ऽद्यत्वेऽपि तत्तेजसा रात्रौ जाज्वल्यमाना भवन्त्योषधयः। एवं चन्द्रमा

---

१. आदिष्टो ब्रह्मणा पूर्वमत्रिः सर्गविधौ पुरा।
अनुत्तमं नाम तपः सृष्ट्यर्थं तप्तवान् प्रभुः॥
अपः सुस्राव नेत्राभ्यां धाम तच्चाम्बुसम्भवम्।
दीपयद्विश्वमखिलं ज्योत्स्नया सचराचरम्॥ म. पु. २३।२.६

२. द्विजातीनां वीरुधां च नक्षत्राणां ग्रहैः सह।
यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत्॥ वा. पु. ७०।३

३. यदाभिषिक्तः सकलाधिपत्ये पृथुर्धरित्र्यामधिपो बभूव।
तदौषधीनामधिपं चकार यज्ञव्रतानां तपसां च चन्द्रम्॥ म. पु. ८।२

ओषधीशो द्विजराजश्च कथ्यते[1]। अत एवं कोषकाराः-'ओषधीशो निशापतिः' द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः, इत्यादि चन्द्रपर्यायमाहुः। एवं प्राप्ताधिपत्यः स भुवनत्रयं पालयन् विष्णुध्यानैकतत्परो दश पद्मवर्षपर्यन्तं तीव्रं तपः समाचरन् भगवन्तं विष्णुं प्रसाद्य तेन वरं वृणुष्वेत्युक्तः शक्रलोकजिगीषया करिष्यमाणे स्वराजसूये यज्ञे प्रत्यक्षीभूय फलभोक्तृत्वस्य च वरं ययाचे[2]। ततो भगवता विष्णुना तथास्त्वित्युक्त्वाऽन्तर्हिते तस्मिन्नयं तपसो विरम्य महतोत्साहेन ससम्भारं राजसूयं नाम महायज्ञं समाजह्रे, यत्र महर्षिरत्रिर्होता, भृगुरध्वर्युः, हिरण्यगर्भ उद्गाता, स्वयं ब्रह्मैव ब्रह्मा, उपद्रष्टा साक्षाद्धरिः सदस्याश्च सनकादयो मुनयोऽभुवन्[3]।

ईदृशस्यापूर्वस्य राजसूयसत्रस्य सम्पादनप्रभावादत्युत्कृष्टाधिपत्याधिष्ठातृत्वाच्चैनं मद आविवेश। मदावलेपाच्चासौ भ्रान्तचित्तो दुर्बुद्ध्याऽवितयावनतः सन् देवगुरोः पत्नीं तारानाम्नीं बलाज्जहार। बृहस्पतिना तदनुरोधेन देवै भूयो याच्यमानो देवर्षिभिश्च प्रेर्यमाणोऽपि स तत्सुखपाशबद्धो न तां प्रत्यावर्तयत्[4]। तन्त्र-मन्त्र-यन्त्राद्यभिज्ञोऽपि वाक्पतिर्न तस्मै शापं प्रदातुं प्राभवत्, न सा कैरप्युपायैः तस्यापकारं कर्तुं समर्थो

---

१. तद्दीप्तिरधिका तस्माद्रात्रौ भवति सर्वदा।
तेनौषधीशः सोमोऽभूद् द्विजेशश्च निगद्यते॥ म. पु. २३।१३

२. ततो वव्रे वरान् सोमः शक्रलोकं जयाम्यहम्।
प्रत्यक्षमेव भोक्तारो भवन्तु मम मन्दिरे॥
राजसूये सुरगणा ब्रह्माद्याः सन्तु मे द्विजाः॥ म. पु. २३।१८

३. होतात्रिर्भृगुरध्वर्युरुद्गाताऽभूच्चतुर्मुखः।
ब्रह्मत्वमगमत्तस्य उपद्रष्टा हरिः स्वयम्।
सदस्याः सनकाद्यास्तु राजसूयविधौ स्मृताः॥ तत्रैव. २३।२१-२२

४. तदा तत् प्राप्य दुष्प्रापमैश्वर्यमृषिसंस्तुतम्।
स विभ्रममतिः विप्रा विनयोऽविनयाहतः॥
बृहस्पतेः स वै भार्यां तारां नाम यशस्विनीम्।
जहार सहसा सर्वानवमत्याङ्गिरः सुतान्॥
स याच्यमानो देवैश्च तथा ब्रह्मर्षिभिश्च ह।
नैव व्यसर्जयत्तारां तस्मायाङ्गिरसे तदा॥ वा. पु. ९०।२७-१९॥

जातः[1]। देवगुरुं बृहस्पतिं प्रति द्वेषकारणाद् देवविद्वेषिणामसुराणा-माचार्यः शुक्राचार्यश्चन्द्रमसः पार्ष्णिग्राहोऽजायत। उशनसः सहयोगाच्च दैत्यदानवनिकाया अपि तत्पक्षे महान्तमुद्योगं चक्रुः। बृहस्पतिपक्षे तु सकलदेवसेनासहायः शक्रोऽपि सहायकोऽभवत्। बृहस्पतेः पितु-रङ्गिरसः सकाशोपलब्धविद्यः तत्स्नेहपाशबद्धो रुद्रोऽपि तत्साहाय्य-कामनया प्रमथगणैः साकं स्वकीयमाजगवं धनुरादाय सोमेन सह योद्धुमुपस्थितः[2]। श्रीमद्भागवतमप्येतत् सर्वं समर्थयति।

ततो रुद्रपुरोगा इन्द्रादिदेवा असुरेषु, असुराश्चोशनसा समन्विता देवेषु सरोषं शस्त्रास्त्राणि मुमुचुः। एवमुग्रतीक्ष्णैरायुधैः परस्परं युध्यतोः बाणांश्च प्रक्षिपतो द्वयो र्दलयोरतीवोग्रो भयङ्करस्तारानिमित्तः तारकामयः सङ्ग्रामः समारब्धः।

येन भूम्यन्तरीक्षयो र्महती भीतिरुत्पन्ना। ईदृशेन सकलक्षोभकरेण महाहवेन क्षुब्धहृदयमशेषं जगद् ब्रह्माणं शरणमुपेत्य तन्निवारणाय प्रार्थनाञ्चकार। ततो लोकपितामहेन ब्रह्मणा विश्वविनाशाय प्रवृत्ते तस्मिन् तारकामये सङ्ग्रामे सहसा कथञ्चित् प्रविश्य भगवन्तं पिनाक-पाणिमुग्रमुशनसं देव-दैत्य-दानवगणांश्च निवारयन् सोममुवाच-सोम! परस्त्रीहरणादकार्यात्त्वं सौम्योऽपि ग्रहेषु पापीयान् गणयिष्यसे, बृहस्पते-र्भार्यां तारां प्रत्यावर्तय, परस्वप्रत्यर्पणेऽपमानं न सम्भवति[3]। ततः ओमित्युक्त्वा युद्धाद्विरतेऽशुमाली स्वयमेव विधाता गुरवे तां तारां प्रत्यावर्तयत[4]। ततः

---

१. शशाक शापं न च दातुमस्मै न तन्त्रशास्त्राग्निविषैरशेषैः।
तस्यापकर्तुं विविधैरुपायैर्नैवाभिचारैरपि वागधीशः ॥ म. पु. २३।३३

२. तत. सशिष्यो गिरिश पिनाकी बृहस्पतिस्नेहवशानुबद्धः ॥
धनुर्गृहीत्वाजगवं पुरारि र्जगाम भूतेश्वरसिद्धजुष्टः।
युद्धाय सोमेन विशेषदृप्तः तृतीयनेत्रानलभीमवक्त्र.॥ तत्रैव. २३।३७

३. तदस्त्रयुग्मं जगतः क्षयाय प्रवृद्धमालोक्य पितामहोऽपि।
अन्तःप्रविश्याथ कथं कथञ्चिन्निवारयामास सुरैः सहैव ॥
यस्मात् परस्त्रीहरणाय सोम! त्वया कृतं युद्धमतीव भीमम्।
पापग्रहस्त्वं भविता जनेषु शान्तोऽप्यलं नूनमथासितान्ते ॥
भार्यामिमामर्पय वाक्पतेस्त्वं नचावमानोऽस्ति परस्वहारे ॥ म. पु. २३।४४।४६

४. ततो निवार्योशनसं रुद्रं ज्येष्ठं च शङ्करम्।
ददावाङ्गिरसे तारां स्वयमेव पितामहः ॥ वा. पु. ९०।३५

ग्रामन्तः प्रसवामालोक्य देवगुरुः-देवि ! नैव मम क्षेत्रे भवत्यन्यसुतो ग्राह्यः, तस्मादेनमुत्सृजेति तामुवाच । सा चैवमुक्ता पत्युरिच्छन्दानुसारिणी सोमेन बलादाहित त गर्भं तृणगुच्छे उत्ससर्ज । स चोत्पन्नमात्र एवातितेजसा समेषां देवाना तेजांसि अभिभूतवान् । ततः कनकप्रभस्य कुमारस्यातितेजस्वितया चारुतया च गुरुमिन्दुश्च साभिलाषौ दृष्ट्वा समुत्पन्नसन्देहा. सन्तो देवाः—माता भस्त्रा पितुः पुत्रः, इत्यादिवचनात् पितुरेव पुत्र', मातैव पुत्रजनकं वेत्ति, इत्यतोऽस्य को जनक इति निश्चेतु तारामेव पप्रच्छुः-कथय सुभगे ! कस्यायमात्मजः कुमार सोमस्य, गुरोर्वा ? इत्येव बहुशः पृष्टाऽपि सा यदा ह्रिया न किञ्चिदुक्तवती[1] तदा कुमार क्रोधाविष्ट' प्राह-दुष्टे अम्ब ! कस्मान्न मम तातमाख्यासि, साम्प्रतमेवाहमलीकलज्जावत्यास्ते शास्ति करोमि ।[2]

अथ प्रपितामहो ब्रह्मा तं कुमारमपवार्य स्वयमेवाप्राक्षीत्-वत्से ! सत्यं ब्रूहि, कस्यायमौरस. कुमार , सोमस्याथ बृहस्पतेर्वा ? तत. सा लज्जा जड शनैः प्राह-सोमस्येति । ततः स्फुरदुच्छ्वसितामलकपोलकान्तिरुडुपतिः कुसुमशरसुन्दरं त सुकुमार कुमार प्रेमनिर्भरमालिङ्ग्य-साधु वत्स ! साधु ! प्रज्ञासम्पन्नोऽसीत्युच्चार्य बुध इति तस्य नाम चक्रे[3] । ततो-विधाता तस्याभिषेक विधाय युवान कृत्वा तस्मै ग्रहसाम्य प्रदाय पश्यत्सु च देवेषु ब्रह्मर्षिभिः सह स्वक धाम जगाम ।[4]

ततः प्राप्तापूर्वाधिपत्याधिष्ठातृत्वमाह्लादजनक सर्वानन्दकर सोम समवेक्ष्य दक्षप्रजापतिना रूपलावण्यसम्पन्ना' सुयोग्या स्वकीया. सप्तविंशति-

---

१. अपृच्छस्ते सुरास्तत्र केन जात कुमारकः ।
अथ सा लज्जिता तेषा न किञ्चिदवदत्तदा ॥ म पु २४।५

२ ह्रीयमाणा यदा देवान्नाह सा साध्वसाधु वा ।
तदा ता शप्तुमारब्ध कुमारो दस्युहन्तम ॥ वा पु ९०।४०

३ सा प्राञ्जलिरुवाचेद ब्रह्माण वरद प्रभुम् ।
सोमस्येति महात्मान कुमार दस्युहन्तमम् ॥
तत सुतमुपाघ्राय सोमो धाता प्रजापति ।
बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमत ॥ वा. पु ९०।४२,४३

४ अभिषेकं तत कृत्वा युवानमकरोद्विभु ।
ग्रहसाम्यं प्रदायाथ ब्रह्मा ब्रह्मर्षि संयुत ॥
पश्यता सर्वदेवाना तत्रैवान्तरधीयत ॥ म पु २४।८६

कन्यकाश्चन्द्रमसे पत्नीत्वेन समर्पिताः। एताः सर्वा दक्षात्मजाश्चन्द्र-पत्न्यः कालविभागज्ञापने नियुक्ता लोकव्यवहारनिर्वाहाय नक्षत्रनाम्ना ज्यौतिषशास्त्रेषु व्यवहृता विद्यन्ते[1]।

यद्यपि चन्द्रमसः सर्वा अपि भार्याः समानरूपवत्यः सर्वाङ्गसुन्दर्यश्चासन् तथापि तासु रोहिणी सर्वातिशायिनी चन्द्रमसो मनोरमा बभूव[2]। अतोऽन्या उपेक्ष्य स रोहिण्यामेव प्रीतिमानभूत्। तदिदमनुचितं मत्वा ताः सर्वा ईर्ष्यावत्यः पितुः समीपमुपेत्यामुमर्थं शशंसुः-तात! अस्मासु तुल्यप्रभावासु सतीष्वपि ते जामाता रोहिणीमेवाधिकं भजतीति। ततो दक्षः चन्द्रमसमाहूय सर्वासु समानभावेन व्यवहाराय सोममादिश्य ताः प्रत्यावर्तयत। अथापि तदादेशमवहेल्य स पूर्ववद् रोहिण्यामेवासक्तो बभूव।

पुनस्तच्छ्रुत्वा दक्षेण रोषात्तदर्थं राजयक्ष्माणमुत्पाद्य तच्छरीरे प्रवेशितः। ततः शनैः शनैः क्षीयमाणे चन्द्रे यदा ओषधयः प्रजाश्च क्षीणतां-मुपगताः तदा देवानामनुरोधेन दक्षः तद्रोगनिवृत्तये उपायं निर्दिशन्नुवाच-सोमो हि सर्वासु भार्यासु समानं व्यवहरतु, अपि च पश्चिमे समुद्रे सरस्वत्यब्धिसङ्गमे हिरण्मयतीर्थे स्नानं च कुर्यात्। तत्रैव भगवतो महादेवस्याराधनया तस्य कान्तिः प्रागिव निर्मला भविष्यति[3]। अयं पञ्चदशदिन-पर्यन्तं क्षीणो भविष्यति तथा पञ्चदश दिनानि यावद् वर्द्धिष्यते। तदनुसारं सोऽमावस्यायां तत्र तीर्थे स्नात्वा तत्तीर्थप्रभावात् पूर्ववत् स्वकीयानि प्रकाशवन्ति प्रभायुक्तानि शीतलानि किरणान्यवाप्य पुनः समस्तं जगत् प्रकाशयितुमारब्धवान्। अतस्तत्कालादेव तत्तीर्थं प्रभाप्राप्त्या प्रभासतीर्थनाम्ना प्रसिद्धं जातम्।[4] तेनैव शापेनाद्यापि चन्द्रमाः कृष्णपक्षे

१. ताः सर्वास्त्वनवद्याङ्गाः कन्याः कमललोचनाः।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे॥ म. भा. आ प ७५।९
सप्तविंशत्तु याः कन्या दक्षः सोमाय ता ददौ।
सर्वा नक्षत्रनाम्न्यस्ता ज्योतिषे चैव कीर्तिताः॥ वा. पु. ६६।५२

२. तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमा भुवि।
अत्यरिच्यत तासां तु रोहिणी रूपसम्पदा॥ म० भा० श. प. ३५।४६

३. समं वर्ततु सर्वासु शशी भार्यासु नित्यशः।
समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसङ्गमम्।
आराधयतु देवेशं ततः कान्तिमवाप्स्यति॥ म० भा० श. प. ३५।७७

४. विमुक्तशापः पुनराप्य तेजः सर्वं जगद् भासयते नरेन्द्र!
एवं तु तीर्थप्रवरं पृथिव्या प्रभासनात् तस्य ततः प्रभासः॥ तथैव, ३५।४२

प्रतिपदमारभ्यामांयावत् क्रमशः प्रत्यहं क्षीयते तथा शुक्लपक्षे प्रतिपदमारभ्य पूर्णिमापर्यन्तमेकैकाभिः कलाभिः वर्द्धते। पीयूषपिण्डमयं तस्य मण्डलाकारं स्वरूपं मेघस्य श्यामया रेखयाऽऽच्छन्नमिव दृश्यते तथा तस्य शरीरमध्ये मेघश्यामलं शशकचिह्नं स्पष्टं विलोक्यते। इति महाभारतीया कथाऽत्रानुसन्धेया ( शान्तिपर्वणि ३४२।५७-५८ )। अत एव च चन्द्रार्घ्यप्रदानसमये सोमस्यात्रिनेत्र-समुद्रसम्भवत्वं सम्यक् संघटते—

अत्रिनेत्रसमुद्भूत ! क्षीरोदार्णवसम्भव !
गृहाणार्घ्यं मया दत्तं रोहिण्या सहित. शशि !

वायुपुराणानुसारं तु राजयक्ष्मणा प्रतिदिनं क्षीयमाणः सोमः स्व पितरमत्रिमुनिमुपेत्य तन्निवृत्तये प्रार्थयाञ्चकार। तदनु तेन स्वकीयेनतपोबलप्रभावेण तस्य शमनं विधाय स स्वस्थीकृतः।

अपि च शीतलरश्मिः सूर्यं इव तेजस्वी प्रकाशमयः प्रसन्नात्मा चन्द्रमाः समुद्रमन्थनसमये मथ्यमानात् क्षीरसमुद्रान्निर्गतेषु चतुर्दशरत्नेष्वन्यतमं रत्नमप्युक्तमस्ति महाभारते पुराणेषु च[1]। पूर्णिमायां चन्द्रोदयसमये ताम्रपात्रे मधुमिश्रितपक्वान्नैर्युक्तस्य बलेश्चन्द्रमसे समर्पणेन चन्द्रसमुद्रयो वृद्धिर्जायते, साध्य-रुद्रादित्य-विश्वेदेव मरुद्गणाश्विनीकुमारादीनां च महती तृप्तिर्भवति।

किञ्च धर्मपुत्रेषु अष्टसुवसुषु अन्यतमोऽपि सोमः प्रोक्तो विद्यते। वसुरूपेणायं मानस्विन्या गर्भजोऽस्ति। अस्य मनोहरनामिकायां पत्न्यां चत्वारस्तनया अजायन्त-वर्चाः, शिशिरः, प्राणः, रमणश्च। तत्र सोमः स्वं ज्येष्ठं पुत्रं वर्चसं देवकार्यसिद्धिनिमित्तं षोडशवर्षपर्यन्तं भूतले स्थातुं पणीकृत्य प्रेषितवानासीत्, योऽभिमन्युरूपेणार्जुनात् सुभद्रायामुत्पन्न आसीत्।[2]

पीयूषपिण्डस्य सोमस्यामृतमयः षोडशकलाः सन्ति। तत्र कृष्णपक्षे प्रतिपदमारभ्यामावस्यापर्यन्तं प्रत्यहं पितृदेवाः क्रमश एकैकां कलां पिबन्ति। दर्शपर्यन्तं पञ्चदशसु कलासु पितृभिः पीतासु षोडश्याः कलाया अवशिष्टत्वादेककलं चन्द्रमसं भगवान् भास्करः स्वकीयेन सुषुम्णाख्येन

---

१. ततः शतसहस्रांशुः मथ्यमानात्तु सागरात्।
प्रसन्नात्मा समुत्पन्नः सोमः शितांशुरुज्ज्वलः॥ म० भा० आ. प. १८।३४

२. यस्तु वर्चा इति ख्यातः सोमपुत्रः प्रतापवान्।
सोऽभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत्॥
ततः षोडशवर्षाणि स्थास्यत्यमरसत्तमाः॥ म. भा. आ. प. १६७।११२

रश्मिना पुन पूर्णिमापर्यन्तमेकैकामेव कलामाप्याययति। एव सुधास्राविकिरणस्य सोमस्यामावस्या यावदेकैवा कला पितर पिबन्ति। पितृभि पीतसुध कलामात्रावशिष्ट सोम सूर्यदेव स्वे प्रकाशमये किरणे पुन पोषयति। येन क्रमेण पितरश्चन्द्रमसोऽमृत पिबन्ति तेनैव क्रमेणादित्य शुक्लपक्षीयप्रतिपत्तिथित पूर्णिमापर्यन्त प्रतिदिन निशाकर पुष्णाति[1]। इत्थ पञ्चदशभिर्दिनै सञ्चित सोमामृत सुधाहारा पितर पुन पातुमारभन्ते, यतस्ते मृत्युभेषजरूपाया सुधाया नियमेन पानात् कल्पान्तकालपर्यन्तं जीवन्ति। अतस्ते सुधाहारदिना अमरा अप्युच्यते[2]।

तथा च जन्यभावमात्रस्य नियमेन ध्वसप्रतियोगित्वात् पितृदेवानाममरत्वमनुपपन्नमित्याक्षेपो निरस्त, प्रलये भावभूताना तेषा पितृदेवाना विनाशे सति तत्पूर्वकाल यावत् स्थितिरूपस्यामरत्वस्य निर्बाधात्।

यस्मिन् समये द्विकलामात्रावशिष्टश्चन्द्रमा सूर्यमण्डले प्रविश्य तस्यामानामके किरणे तिष्ठति स कालोऽमावस्या तिथि ब्थ्यते।[3] अमावस्याया रात्रौ सोम क्रमश प्रथम जले प्रविशन् वृक्षलतादिषु निवसन् सूर्ये प्रविशति। अतोऽस्मिन् समये यो वृक्षादि छिनत्ति पत्रादिक वा त्रोटयति तस्य ब्रह्महत्याया पातक भवति[4]।

तदेव दर्शाहोरात्रेऽप्सु वीरुत्सु च प्रवेशादुपक्षीणप्राये कलात्मके पञ्चदशभागे किञ्चिदवशिष्टे सति अपराह्णे पितृगणा पानार्थं चन्द्रमसं पर्यु-

---

१ क्षीण पीत सुरै सोममाप्याययति दीप्तिमान्।
मैत्रेयैककल सत रश्मिनैकेन भास्कर॥
येन क्रमेण पीतोऽसौ देवस्तेन निशाकरम्।
आप्याययत्यनुदिन भास्करो वारितस्कर॥ वि पु २।११।४५
पीतं पञ्चदशाहञ्च रश्मिनैकेन भास्कर।
आपूरयन् ददौ तेन भार्ग भागमह क्रमात्॥
इत्येव सूर्यवीर्येण चन्द्रस्याप्यायते तनु।
पूर्णिमास्या प्रदश्येत शुक्ल सम्पूर्णमण्डल॥ म पु २५।५५ ५७

२ सम्भृतश्चार्द्धमासेन तत् सोमस्थं सुधामृतम्।
पिबन्ति देवा मैत्रेय! सुधाहारा यतोऽमरा॥ वि० पु० २।१२।६

३ कलाद्वयावशिष्टस्तु प्रविष्ट सूर्यमण्डलम्।
अमाख्यरश्मौ वसति अमावस्या तत स्मृता॥ तत्रैव २।१२।८

४ छिनत्ति योऽपो यस्तु वीरुधस्थ निशाकरे।
पत्र वा पातयत्यर्क ब्रह्महत्या स विन्दति॥ तत्रैव २।१२।१०

पासते। द्विकलं सोमं पर्युपास्य तस्येन्दोः शिष्टां पञ्चदशीं कलामेव द्विलव-परिमितं कालं निभृतं पितरः पिबन्ति, नतु षोडशीं कलामपि। इत्यमा-मावस्यायां सोमस्य गभस्तिभ्यो निःसृत सुधामृतं पीत्वा सौम्या बर्हिषदः अग्निष्वात्ताश्च पितरो मासपर्यन्तं परमां तृप्तिमाप्नुवन्ति[1]। सोमाच्चैवा-मृतप्राप्तिः पितॄणां तर्पणं तथा। इत्यादि वचनानुसारम् अमावस्यायां कुहुकाले सोमामृतेन तर्पणस्य महन्महत्त्वमस्ति। अत एव बुधस्य पुत्रः पुरूरवाः[2] कुहुमात्रे सोमसुधया पितॄन् तर्पयितुं प्रत्यमावस्य दिवमुप-तिष्ठते स्म। एवं चन्द्रमाः शुक्लपक्षे देवगणान् कृष्णपक्षे पितॄन् तथाऽ-मृतमयैः शीतलैः रश्मिभिर्वृक्षलतौषधीश्चाह्लादयन् मनुष्य-पशु-पक्षी-कीट-पतङ्गादीन् समस्तान् प्राणिनो निरन्तरं पुष्णाति[3]।

एवं विष्णुशक्त्यधिष्ठितस्य रवेरपि पित्रादितर्पकत्वमुक्तमस्ति। शुक्ल-प्रतिपदमारभ्यापूरित. षोडशकलः सन् कृष्णपक्षीयप्रतिपदादि प्रत्यहमे-कैककलांशेनामरैः पीयते। एवममरैरेकैककलायामंशेन पीताया चतुर्द-श्यन्ते द्विकलमवशिष्टं सन्तं कृष्णपक्षक्षये दर्शे पितरः किञ्चित् पिबन्ति। तेन चन्द्रतर्पणप्रकारेण भास्करात्तेषां देवपितॄणां तर्पणं भवति[4]।

---

१ निःसृत तदमावस्या गभस्तिभ्यः सुधामृतम्।
मास तृप्तिमवाप्याग्र्या पितर सन्ति निर्वृत्ताः॥
सौम्या बर्हिषदश्चैव अग्निष्वात्ताश्च ते त्रिधा॥ वि. पु २।१२।१३

२. ऐलः पुरूरवा विद्वान् मासि श्राद्धचिकिर्षया।
ततः स दिवि सोमं वै ह्युपतस्थे पितॄनपि॥
द्विलवं कुहुमात्रं च वसंस्तेषां च तृप्तये।
स्वधामृतेन सौम्येन तर्पयामास वै पितॄन्॥ म. पु. ४०।७-१२

३. एवं देवान् सिते पक्षे कृष्णपक्षे तथा पितॄन्।
वीरुधौषधिनिष्पत्त्या मनुष्य–पशु–कीटकान्॥
आप्यायति शीतांशु. प्रकाशाह्लादनेन च॥ वि पु. २।१२।१४-१५

४ पितृदेवमनुष्यादीन् स सदाऽऽप्याययन् प्रभु।
परिवर्त्तत्यहोरात्र कारणं सविता द्विज॥
सूर्यरश्मि. सुषुम्णो यस्तर्पितस्तेन चन्द्रमाः।
कृष्णपक्षेऽमरैं शश्वत् पीयते वै सुधामयः॥
पीतं तद् द्विकलं सोमं कृष्णपक्षक्षये द्विज।
पिबन्ति पितरः शेषं भास्करात्तर्पणं तथा॥ तत्रैव. २।११।२१-२३

भगवान् भास्करो हि समस्तस्य जगत आत्माऽस्ति। स पृथिवी-द्युलोकयोर्मध्ये स्थितः आकाशमण्डलस्याभ्यन्तरे कालचक्रे चङ्क्रममाणो द्वादशान् मासान् विभजति। रात्रिदिनयोर्व्यवस्थायाः कारणं भगवान् सूर्यं प्रातरुदीय माध्याह्नं यावत् स्वकिरणैस्तपति, ततो क्षीयमाणैरश्मिभिरस्तं याति, सूर्यस्योदयास्तमनाभ्यामेव पूर्वपश्चिमयोर्दिशो ज्ञानं जायते—

> अहोरात्रव्यवस्थानकारणं भगवान् रविः।
> उदितो वर्द्धमानाभिरामध्याह्नात्तपन् रविः॥
>
> ततः परं ह्रसन्तीभिर्गोभिरस्तं नियच्छति।
> उदयास्तमनाभ्याञ्च स्मृते पूर्वापरे दिशौ॥ = वि० पु० २।८।१८-१९

एष एवादित्यः षण्णामृतूनां हेतुः। इत एव दक्षिणायनोत्तरायणयोर्भवति विभागः। युगानां भेदकः कल्पकारकश्चायमेव। अस्यैवाधारेण ब्रह्मणः परार्द्धसंख्या संभवति। अयमेव संसारस्य कर्ता धर्ता भर्ता चाभिमतोऽस्ति। ब्रह्मनिष्ठा ब्राह्मणाः दैनन्दिन गायत्रीमन्त्रद्वारा एतमेवोपासते। मर्यादा-पुरुषोत्तमस्य भगवतः श्रीरामस्य कुलस्यादिकारणमयमेवास्ति। अतः समस्तस्यास्य जगतोऽयं मान्यः प्रणम्यश्च विद्यते। श्रीमद्भागवते वर्णनं विद्यते यत् पृथिव्या यावन्तो विभागा भवन्ति, ते सर्वे भगवता सर्योण भवन्ति—

| सूर्यतः | १ | लक्षयोजनोपरि | चन्द्रमा वर्तते । |
|---|---|---|---|
| चन्द्रमसः | १ | ,, | नक्षत्रमण्डलमस्ति । |
| नक्षत्रमण्डलतः | २ | ,, | बुधोऽस्ति । |
| बुधतः | २ | ,, | शुक्रोऽस्ति । |
| शुक्रतः | २ | ,, | मङ्गलोऽस्ति । |
| मङ्गलतः | २ | ,, | बृहस्पतिरस्ति |
| बृहस्पतितः | २ | ,, | शनैश्चरो वर्तते । |
| शनैश्चरतः | १ | ,, | सप्तर्षिमण्डलमस्ति । |
| सप्तर्षिमण्डलतः | १ | ,, | ध्रुवलोको विद्यते । |
| ध्रुवलोकतः | १ | कोटियोजनोपरि | महर्लोको वर्तते । |
| महर्लोकतः | २ | ,, | जनलोकोऽस्ति । |
| जनलोकतः | ८ | ,, | तपोलोको विद्यते । |
| तपोलोकतः | १२ | ,, | सत्यलोकः(ब्रह्मलोकः)। |

भूमेर्योजनलक्षे तु सौरं मैत्रेय ! मण्डलम् ।
लक्षाद्दिवाकरस्यापि मण्डलं शशिनः स्थितम् ॥

पूर्णे शतसहस्रे तु योजनानां निशाकरात् ।
नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते ॥

द्वे लक्षे चोत्तरे ब्रह्मन् ! बुधो नक्षत्रमण्डलात् ।
तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थितः ॥

अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः ।
लक्षद्वये तु भौमस्य स्थितो देवपुरोहितः ॥

शौरिर्बृहस्पते श्चोर्ध्वं द्विलक्षे समवस्थितः ।
सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तमाः ॥

ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वं व्यवस्थितः ।
मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ॥

ध्रुवादूर्ध्वं महर्लोको यत्र ते कल्पवासिनः ।
एक-योजन-कोटिस्तु यत्र ते कल्पवासिनः ॥

द्वे कोटी तु जनो लोको यत्र ते ब्रह्मणः सुताः ।
सनन्दनाद्याः प्रथिताः मैत्रेयामलचेतसः ॥

चतुर्गुणोत्तरे चोर्ध्वं जनलोकात्तपः स्थितम् ।
वैराजा यत्र ते देवाः स्थिताः सद्विवर्जिताः ॥

षड्गुणेन तपोलोकः सत्यलोको विराजते ।
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः ॥ = वि०पु० २-७-५-१५

ध्रुवलोको हि विष्णो परमं पदमुच्यते। एतदाश्रयेण विष्णो. प्रेरणया कालचक्रे नियुक्ता ग्रहोपग्रहनक्षत्रादिज्योतिर्गणा. स्व-स्व कार्यानुसारं कल्पपर्यन्तं निरन्तरं भ्रमन्ति न केऽपि स्वस्थानात् पृथिव्यां च्यवन्ते, सर्वे स्व स्वकक्षासु स्थिरा. तिष्ठन्ति।

केचन ज्योतिश्चक्रं शिशुमारचक्ररूपेण वर्णयन्तो ब्रुवते यत् तस्य पुच्छभागे ध्रुवोऽवस्थितोऽस्ति। ध्रुवोऽयं स्वयं वभ्रम्यमाणश्चन्द्रसूर्यादीन् भ्रामयति। तेन भ्रमणशीलेन ध्रुवेण सह नक्षत्राण्यपि चक्रवत् परिभ्रमन्ति। सूर्य-चन्द्र-तारा-नक्षत्रादि. समस्तो ग्रहगणो वायुमण्डलमय्या रज्ज्वा ध्रुवेण साकं सम्बद्धोऽस्ति। तथा चोक्तं विष्णुपुराणे—

तारामयं भगवत शिशुमाराकृति प्रभो।
दिवि रूपं हरे यत्तु तस्य पुच्छे स्थितो ध्रुव ॥
सैव भ्रमन् भ्रमयति चन्द्रादित्यादिकान् ग्रहान्।
भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत् ॥
सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहै सह।
वातानीकमयैर्बन्धै ध्रुवे बद्धानि तानि वै ॥ = २।९।१-३

एवं सूर्यस्याधारभूतो ध्रुवस्तस्य चाधारः शिशुमारोऽस्ति तथा तदाश्रय श्रीनारायणोऽस्ति। तस्य शिशुमारस्य हृदये स एव श्रीनारायणः स्थितो यो सर्वेषां प्राणिनां पालक आदिभूत. सनातनः पुरुषोऽस्ति—

आधारभूतः सवितु ध्रुवो मुनिवरोत्तमाः।
ध्रुवस्य शिशिमारोऽसौ सोऽपि नारायणात्मक. ॥
हृदि नारायणस्तस्य शिशुमारस्य संस्थितः।
बिभर्ता सर्वभूतानामादिभूत: सनातन ॥ = २।९।२४-२५

खगोलवद् भौगोलिकेऽपि जगति वन पर्वत-नद-नदी-नानादेशानामत्यन्त महत्त्वपूर्णं स्थानमस्ति। तथाचोक्तं महाभारतस्य वनपर्वणि—

नदीनां पर्वतानां च नामधेयानि सञ्जय।
तथा जनपदादीनां ये चान्ये भूमिमाश्रिताः। = ५।१

नैसर्गिकसुषमाया मूलस्रोतसो रूपेण वन पर्वत नदीनामाधिक्येन प्राधान्यं विद्यते। प्रकृतिलोके पर्वतानां मूल्यमनेकाभिः दृष्टिभिरतिमहदस्ति। पुराणपरम्परायां पर्वता देवतुल्या पूज्या अभिमता सन्ति। अधिष्ठातृरूपेण गोवर्द्धनादीनां गिरीणां यज्ञानुष्ठानस्याप्युल्लेखो वर्तते।

## पर्वतानां विभाजनम्

पौराणिक भूगोलप्रसङ्गे मुख्यतया पञ्चविधाः पर्वता उक्ताः सन्ति- (१) मर्यादापर्वताः (२) वर्षपर्वताः (३) कुलपर्वताः (४) विष्टम्भकाः (५) केशराचलाश्च । तत्र मर्यादापर्वतास्ते सन्ति, ये मेरो र्मर्यादास्थितये तच्चतुर्दिक्षु स्थिताः सन्ति । विष्णुपुराणेऽष्ट मर्यादापर्वता उक्ताः सन्ति- जठर-देवकूट-गन्धमादन-कैलास-निषध-परियात्र-शृङ्गवज्जारुधयः, यत्र द्वौ जठर-देवकूटौ मर्यादापर्वतौ मेरो. पूर्वस्यां गन्धमादन-कैलासौ दक्षिण-स्यां निषध-पारियात्रौ पश्चिमस्यां शृङ्गवज्जारुधी च उत्तरस्यां दिशि स्थितौ स्त. । एवं द्वौ द्वौ मर्यादापर्वतौ मेरोश्चतुर्दिक्षु स्थितौ स्त :—

> इत्येते मुनिवर्योक्ता मर्यादापर्वतास्तव ।
> जठराद्याः स्थिता मेरोस्तेषां द्वौ द्वौ चतुर्दिशम् ॥ = वि०पु० २।२।४४

अपिच—

> मर्यादापर्वताः प्रोक्ता अष्टाविह मया द्विज ।
> जठराद्या स्थिता मेरो श्चतुर्दिक्षु महर्षिभिः ॥ = कू०पु० ४६।४०
> मर्यादात् पर्वतानेतानष्टावाहुर्मनीषिणः । = लि०पु० पू० ४८।२५

(२) वर्षपर्वतास्ते उच्यन्ते, ये एकं वर्षं द्वितीयस्माद्वर्षात् पृथक् कुर्वन्ति । विष्णुपुराणानुसारं वर्ष-पर्वताः षट् सन्ति, येषु हिमवान् हेमकूटो निषधश्चैते त्रयो मेरो र्दक्षिणे भागे सन्ति तथा नीलः श्वेतः शृङ्गी चेमे त्रयो मेरोरुत्तरे विद्यन्ते—

> हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे ।
> नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥

एवं लिङ्गपुराणे मेरोरुत्तरे दक्षिणे च क्रमशो वर्तमानानां षण्णामेव वर्षपर्वतानां स्पष्टमुल्लेखो वर्तते, किन्तु तत्र हिमवतः स्थाने हिरण्यवानु-क्तोऽस्ति —

> नीलस्तस्योत्तरे मेरोः श्वेतस्तस्योत्तरे पुन. ।
> शृङ्गी तस्योत्तरे विप्रास्त्रयस्ते वर्षपर्वताः ॥
> निषधो दक्षिणे मेरो स्तस्य दक्षिणतो गिरिः ।
> हेमकूट इति ख्यातो हिरण्यांस्तस्य दक्षिणे ॥ = लि०पु० ४६।२४

किन्तु मार्कण्डेयपुराणे सप्त वर्षपर्वताः प्रोक्ता सन्ति, यतो मेरुरपि वर्षपर्वतेषु सम्मिलितोऽस्ति । अपिचात्र निषधस्य स्थाने वृषभनामा पर्वत उक्तोऽस्ति—

हिमवान् हेमकूटश्च वृषभो मेरुरेव च।
नील: श्वेतस्तथा शृङ्गी सप्तास्मिन् वर्षपर्वता ॥ = ५४।६

तत्र पूर्वे वर्तमानौ जाठर-देवकूटौ पर्वतौ दक्षिणोत्तरलम्बायमानौ स्तः। नीलनिषधमध्यवर्तिनौ दक्षिणस्या स्थितौ गन्धमादनकैलासौ पूर्व-पश्चिमलम्बायमानौ विद्येते। पश्चिमे निषधपारियात्रौ दक्षिणोत्तर-लम्बायमानौ स्तः। उत्तरे च वर्तमानौ त्रिशृंगजारुधी पूर्वपश्चिम-लम्बायमानौ समुद्रगर्भे स्थितौ। एषा मर्यादापर्वताना बहिर्भागे स्थितानि चत्वारि हिमवर्ष (भारतवर्ष) केतुमालवर्ष-भद्राश्ववर्ष कुरुवर्षाणि जम्बू-द्वीपरूपस्य कमलस्य चतुःपत्रवद् दृष्टिगोचरी भवन्ति।

(३) कुलपर्वतास्ते सन्ति ये, एकस्मात् प्रान्तान्तात् प्रान्तान्तरमन्त-रयन्ति। ते च सप्तसंख्याका सन्ति—महेन्द्रः, मलय, सह्जाद्रिः, शुक्तिमान्, ऋक्ष., विन्ध्यः, पारियात्रश्च—

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वत ।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वता ॥

वायुपुराणे ४५।८२, मत्स्यपुराणे १०३। ७
विष्णुपुराणे २।३।३, गरुडपुराणे च ५५।६

पौराणिके भूगोले कुत्रापि कुलपर्वतशब्दस्यार्थो न प्रतिपादितोऽस्त अथापि आप्टेमहोदयेन कुलशब्दो देश-राष्ट्र जातीना पर्यायवाचक उक्तोऽस्ति। तदनुसार कुलशब्दस्याभिप्रायो राष्ट्रविभाजकपर्वते सहा-स्ति। प्रत्येककुलपर्वतो विशिष्टरूपेण देशेन सम्बद्धोऽस्ति। महेन्द्रपर्वतः कलिङ्गदेशस्याश्रितोऽस्ति, मलयपर्वतः पाण्ड्यदेशस्य, सह्यपर्वतोऽपरान्त-देशस्य, शुक्तिमान् भल्लाटस्य, ऋक्षो माहीमत्मतीप्रजानाम्, विन्ध्य आट-व्यप्रजानामधिकारेऽस्ति तथा पारियात्रो निषधदेशाश्रितोऽस्ति। महेन्द्र-स्य शृङ्खला पूर्वीघाट-गोदावरी महानदीमध्ये वर्तते। मलयस्य स्थिति र्दक्षिणदेशे वर्तते। सह्यपर्वतस्य विवरण शातकर्णीनासिकप्रशस्तौ उत्कीर्णमस्ति। अस्य स्थितिः कावेरीत उत्तरभागे मताऽस्ति। शुक्ति-मान् विन्ध्यस्यैको भागोऽस्ति। ऋक्ष पर्वतो विन्ध्यस्य पूर्वभागे वर्तते नर्मदा-शोणभद्र स्रोत. स्थान यावत् प्रसृतो वर्तते। विन्ध्यो दक्षिणापथ-मुत्तरपथतो भिनत्ति। पारियात्रो विन्ध्यमालाया पश्चिमीयभागेऽस्ति।

(४) मेरोश्चतुर्दिक्षु चत्वारो विष्टम्भका. पर्वताः सन्ति, ये मेरुमव-ष्टम्य तिष्ठन्ति। तत्र पूर्व दक्षिण पश्चिमोत्तरेषु क्रमशो मन्दर-गन्धमादन-विपुल सुपार्श्वाः पर्वता सन्ति।

तेषु चत्वारः कदम्ब-जम्बू-पीप्पल-वटवृक्षाः केतुरूपेण विद्यमानाः सन्ति। तत्र मन्दरे कदम्बः, गन्धमादने जम्बूः, विपुले पीप्पलः, सुपार्श्वे च वटवृक्षो विद्यते—

कदम्बो मन्दरे केतु जम्बु र्वै गन्धमादने।

विपुले च तथाश्वत्थः सुपार्श्वे च वटो महान्॥ = मा० पु० ५४।२०

(५) एव मेरोः परितः कणिकाकाराणां केशराचलानामपि स्थिति-र्वणिता, येषु कुमुद शीताम्भादय पूर्वे, त्रिकूट-शिशिरप्रभृतयो दक्षिणे कपिलवैडूर्यादयः पश्चिमे शङ्खकूट कालञ्जरादयश्चोत्तरे वर्तन्ते।

## गिरिद्रोणयः

अतिरम्यासु पर्वतद्रोणिषु लक्ष्मी-विष्णु-अग्नि-सूर्यादीनां देवानां सुरम्याणि मन्दिराणि, मनोहराणि उपवनानि च सन्ति, यत्र-किन्नर-गन्धर्वाप्सरसोऽहर्निशं नृत्यन्ति गायन्ति, क्रीडन्ति, विहरन्ति च। तत्रत्यः प्रदेशः पार्थिवः स्वर्गः प्रोच्यते। तत्र धार्मिका एवोपतिष्ठन्ते, न पाप-कर्माणः। तथाचोक्त विष्णुपुराणे—

लक्ष्मीविष्ण्वग्निसूर्यादिदेवानां मुनिसत्तमाः!

तास्वायतनवर्याणि जुष्टानि वरकिन्नरैः॥

भौमा ह्येते स्मृताः स्वर्गा धर्मिणामालया मुने!

नैतेषु पापकर्माणो यान्ति जन्मशतैरपि॥ = वि०पु० २।२।४७-४८

## नदा नद्यश्च

भारतस्य प्राकृतिके विभाजने पर्वतवदेव नदानां नदीनाञ्चोपयो-गिता वर्तते। भारतीयसंस्कृतौ नद नदीनां स्थानं धार्मिक-राजनीतिक-व्यापारिक दृष्टिभिर्महत्त्वपूर्णमस्ति। आभिरेव नदनदीभि र्भारतभूमिरादि-कालतः शस्यश्यामला, सुषमासम्पन्ना, समृद्धिशालिनी च वर्तते। पुराणा-नुसार भारतीयनदीषु गङ्गाया स्थानं मुख्यतमं विद्यते। इयं हि हिमाल-यशिखरान्निःसृत्य सप्तसु गङ्गा-यमुना सरस्वती-रथस्था-सरयू-गोमती-गण्डकी धारासु विभक्ता भारतमाप्लावयन्ती पूर्वे समुद्रे मिलति। आसां सप्तानां धाराणां जलपायिनां स्नानशीलानां पुंसां पापानि तत्काले एव नश्यन्ति। इयं गङ्गा देवलोके अलकनन्दा, पितृलोके वैतरणी, मर्त्यलोके च गङ्गेति नाम्ना प्रख्याताऽस्ति, पतितपावनी च गीयते। भौगोलिक-धार्मिक-राजनीतिक-आर्थिक-सांस्कृतिक-व्यापारिकजीवनस्य प्रसिद्धानि केन्द्राणिहरिद्वार-कानपुर-प्रयाग-विन्ध्याचल-वाराणसी-पाटलिपुत्र-भागल-पुर कलकत्तादीनि प्रसिद्धनगराणि गङ्गाया तीरे एवावस्थितानि सन्ति।

पुराणेषु सोनभद्र-ब्रह्मपुत्रादीनां नदानां शतद्रू-चन्द्रभागा-वेत्रवती-नर्मदा-सुरसा-तापी-पयोष्णी-निर्विन्ध्या-गोदावरी कावेरी-भीमरथी कृष्णा-वेणी-कृतमाला-ताम्रपर्णी-त्रिसामा-आर्यकुल्या-ऋषिकुल्या-कुमारीप्रभृतीनां भारतीय नदीनामुपनदीनां शाखानदीनां च वर्णनं विद्यते।

## देशाः

उपरिवर्णितनदीतटस्थातिरिक्तानां कतिपयानां जनपदानामपि नामोल्लेखः पुराणेषूपलभ्यते। तद्यथा-कुरु पञ्चाल-मध्य-कामरूप पुण्ड्र अङ्ग-वङ्ग कलिङ्ग-मगध-दक्षिणापथ-अपरान्त-सौराष्ट्र- शूर - आभीर - अर्बुद-कारुप-परियात्र-सौवीर-सैन्धव-हूण शाल्व-कोशल-मद्र पारसीकाः। मनुस्मृति-महाभारत-शक्तिसङ्गमतन्त्रेष्वपि एषां विशेषः परिचयो वर्तते। एवं भौगोलिकस्य ज्ञानस्यातिशयोपयोगिनां द्वीप-समुद्र-वन-पर्वत-नद-नदी जनपदादीनां विशिष्टं वर्णनं तत्तत्पुराणेषु प्राप्यते।

देवीभागवते तु भारतवर्षवर्णनप्रसङ्गे मलय-मैनाक-ऋषभ सह्य देवगिरि ऋष्यमूक-श्रीशैल-व्यकट महेन्द्र-विन्ध्यगिरि शुक्तिमत्-ऋक्ष-परियात्र-द्रोण-त्रिकूट चित्रकूट-गोवर्द्धन-रैवतक-नील-इन्द्रकील-कामगिरि प्रभृतीनां प्रमुखानां पर्वतानामुल्लेखं कृत्वा प्रोक्तमस्ति यत् एतदतिरिक्ता पुण्यप्रदा असंख्याताः पर्वताः सन्ति, येभ्योऽनेका नद्यो निःसृताः सन्ति, यासु स्नान-जलपान-दर्शन-कीर्तनादिभिः मनुष्याणां त्रिविधानि पापानि नश्यन्ति —

> एते चान्येऽप्यसंख्याता गिरयो बहुपुण्यदाः।
> एतदुत्पन्नसरितः शतशोऽथ सहस्रशः॥
> पानावगाहन-स्नान-दर्शनोत्कीर्तनैरपि ।
> नश्यन्तीह पापानि त्रिविधानि शरीरिणाम् = दे०भा० ११।१२।१३

एवं पुराणेषु भूगोल-खगोलप्रसङ्गे चतुर्दशलोकानां सप्तानां द्वीपानां समुद्राणां च विवरणमुपलभ्यते। जम्बूद्वीपान्तर्गतानां वर्ष-पर्वत-नद-नदी-सरित्-सरोवर-वनोपवनादीनां प्रसङ्ग प्राप्यते। तथाहि श्रीमद्भागवते—

> भू-द्वीप-वर्ष-सरिदद्रि-नभः-समुद्र पाताल-दिङ्-नरक-भागण-लोकसंस्था।
> गीता मया तव नृपाद्भुतमीश्वरस्य स्थूलं वपुः सकललोकनिकायधाम॥
> = ५।२६।४०



## पञ्चमः परिच्छेदः

### आयुर्वेदविद्या

पुराणेषु लोकोपयोगिनीनां विविधानां विद्यानां वर्णनं विद्यते। विशेषतोऽग्नि-गरुड नारदीयपुराणेषु प्रचुरमात्रायां लोकोपयोगिन्यो विद्या वर्णिताः सन्ति। तासां विद्यानां विवरणं तत्प्रतिपादकानां मौलिकग्रन्थानामाधारेण समुपस्थापित विद्यते। अश्वशास्त्रं हि भारतस्य प्राचीना विद्या विद्यते। महाभारतस्य सभापर्वणि देवर्षिनारदद्वारा युधिष्ठिरायोपदेशप्रसङ्गे अश्वसूत्र-गजसूत्रयोरुल्लेखो वर्तते—

> कच्चित् सूत्राणि सर्वाणि गृह्णासि भरतर्षभ !
> हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो !

पूर्वकालेऽश्वानां चिकित्सार्थे एकः स्वतन्त्र आयुर्वेदविभाग आसीद् यः शालिहोत्रनाम्ना प्रख्यात आसीत्। पुराणद्वारा अश्वानां सामान्य-परिचयः,तेषां चालनप्रकारः,तद्रोगाः तदुपचाराश्च सम्यगवगन्तु शक्यन्ते। अग्निपुराणस्य २८८ अध्यायेऽश्वानां चालनप्रकारोपयोगि वर्णन विद्यते, २८९ अध्यायेऽश्वचिकित्सा वर्णितास्ति, २९० अध्यायेऽश्वशान्तिः संक्षेपतो विवृता वर्तते। एवं ह्यायुर्वेदस्य संक्षिप्तं विवरणं गरुडपुराणे २०१ अध्याये धन्वन्तरिणा सुश्रुताय श्रावितमस्ति। तत्राश्वानां गुणदोषौ प्रदर्श्य तदौषधवर्णनपुरसरं शान्तिविधिश्च प्रतिपादितोऽस्ति।

ताराग‍र्भसमुद्भूत. सोमस्य पुत्रो बुधो गजवैद्यकप्रवर्तक आसीदिति पौराणिकी अनुश्रुतिः मत्स्यपुराणे (२४।२१) निर्दिष्टाऽस्ति। ततोऽग्नि-पुराणस्य २९१ अध्याये हस्तिशान्ते. विवरणमुपस्थापितमस्ति। गरुड-पुराणे च २०१ अध्याये ११-३६ श्लोकपर्यन्तं गजायुर्वेदस्य गजहित-कारका कल्पा अप्युक्ताः सन्ति।

अग्निपुराणन्तु २९२ अध्याये गो-महत्त्ववर्णनपूर्वकं गवां चिकित्सायाः पृथगेव विवरणमुपस्थापयति। एवं पुराणेषु त्रिविधा पशुचिकित्सा प्रतिपादिता वर्तते। इतोऽन्या नितान्तमावश्यकी स्वाभाविकी अनिवार्या च

मानवचिकित्साऽग्रे प्रस्तुता वर्तते । आयुर्वेदशास्त्रं हि लोकोपयोगि नित्य-सम्बद्धं शास्त्रमस्ति, यस्य चर्चा पुराणेषु बहुशः कृता विद्यते ।

अग्नि-गरुड-ब्रह्मवैवर्तपुराणेषु आयुर्वेदस्य विषयो वैशद्येन चर्चितोऽस्ति । आयुर्वेदे निदान-चिकित्साभागौ मुख्यौ स्त. । एतन्निमित्तमौषधीनां स्वरूपस्य गुणस्य च परिचयोऽत्यावश्यको विद्यते । एषु पुराणेषु अयं विषयो विस्तारेण विवृतो वर्तते । प्राक् धन्वन्तरिर्दिवोदासनामा काशिराजो विश्वामित्रस्य पुत्राय सुश्रुतायायुर्वेदशास्त्रमुपदिदेश, यस्य साङ्गोपाङ्ग विवेचनं गरुडपुराणं षट्पञ्चाशदध्यायेषु (१४६–२०२) प्रस्तौति । तत्र पूर्वं (१४६-१६७) अध्यायेषु ग्रहणी ज्वर-रक्त-पित्त-कास-श्वास-हिक्काप्रमेह पाण्डु-शोथ यक्ष्मार्शोऽतिसारोदरकुष्ठादीनां व्याधीनां निदानं वर्णित विद्यते । ततः चिकित्सानुपानौषधीना विशेषगुणविधानम् (१६८-१७२) ततः (१७३-१६३) पर्यन्त द्रव्यगुणादीना विवेचन विद्यते । तत. (१७३-१६६) यावद् विविधौषधिप्रयोगः । १६७ अध्याये सर्पदंशनदोषदूरी कर्तुं गारुडी विद्या विवृताऽस्ति । १६८-२०१ पर्यन्त त्रैपुरमन्त्र प्रश्नाङ्काश्वगजायुर्वेदवर्णनमस्ति । २०२ आध्याये औषधीना विस्तृता सूची प्रदत्ताऽस्ति । एवं गरुडपुराणे गजायुर्वेद अश्वायुर्वेद-वृक्षायुर्वेद-मनुष्यायुर्वेदानामुल्लेखो विद्यते । गरुडपुराणस्य निदानभागदर्शनेनानुमीयते यद् माधवेन एतदाधारेणैव माधवनिदानं निर्मितम् । माधवनिदाने गरुडपुराणस्य बहव श्लोका अविकला उपलभ्यन्ते ।

एवमग्निपुराणे २७६-२६८ अध्यायेषु आयुर्वेदविषयस्योपयोगी उपन्यासो विद्यते । तत्र २७६-२८१ अध्यायेषु विविधाना रोगाणा २८३ अध्याये तत्तद्रोगशामकौषधीना २८५ अध्याये मृतसजीवनीनामकसिद्धयोगाना २८६ अध्याये विविधकल्पानां २८७-२६८ अध्यायेषु गजाश्वचिकित्सा-सर्पदंशनचिकित्सा-गोनसादिचिकित्साना विवरणमुपस्थाय पुराणेनानेनायुर्वेदशास्त्रस्य महानुपकारः कृतोऽस्ति ।

वृक्षायुर्वेदो हि भारतसदृशस्य कृषिप्रधानस्य देशस्य कृते सर्वोपयोगी उपादेयो विषयोऽस्ति । अत्र वृक्ष गुल्म-लतादिषु जायमानाना रोगाणां चिकित्सा विवृता विद्यते । अग्निपुराणे २८८ अध्यायेऽस्य विषयस्य प्रामाणिकं संक्षिप्त विवरण प्रस्तुतमस्ति । इयमेका भारतवर्षस्यातिप्राचीना विद्या विद्यते । बृहत्सहिताया ५४ अध्याये उत्पलटीकायां कश्यप-

पराशर-सारस्वतादयोऽस्या विद्याया आचार्या उक्ताः सन्ति तथा तत्रैषां वचनान्यपि समुद्धृतानि विद्यन्ते।

ब्रह्मवैवर्तपुराणस्य ब्रह्मखण्डे १४-१८ अध्यायेषु मालावत्युपाख्यान-प्रसङ्गे आयुर्वेदस्योत्पत्तिप्रकारं प्रदर्श्य चतुःषष्ठिरोगाणामुत्पत्तिप्रशम-नादि विवेचितं विद्यते। यथा स्वपतौ उपबर्हणनामके गन्धर्वे मृते तदर्थं विलपन्ती चित्ररथस्य पुत्री मालावली-पतिव्रते! कथय, केन रोगेण तव पतिर्मृत? अहं वैद्योऽस्मि सर्वेषां रोगाणां चिकित्सां जानामि। अहं तत्कारणमपि जानामि येन प्राणिनां शरीरेषु न रोगा उत्पद्येरन्—

केन रोगेण हि मृतोऽधुना साध्वी! तव प्रियः।
सर्वरोगचिकित्सां च जानामि च चिकित्सकः॥
यतो न सञ्चरेद् व्याधिर्देहेषु देहधारिणाम्।
व्याधीनां कारणं यद् यत् सर्वं जानामि दुःखिते! १५।१.४

इत्येवमात्मनः परिचयं प्रदाय सकरुण पृष्टा सा तं विप्ररूपधारिणं जनार्दनं रोगोत्पत्तिकारणं तत्प्रशमनोपायश्च यदा पप्रच्छ तदा तेन विप्रेण परम्परानुगतमायुर्वेदस्य प्रादुर्भावं वर्णयित्वा वेदाङ्गरूपेण चिकित्सामप्येकमङ्गमुक्त्वा आयुर्वेदं प्रशंसता प्रोक्तं यत् प्रजापतिना ऋग्यजुःसामाथर्ववेदानामनुभवं तदर्थानाञ्चानुसन्धाय विधायायुर्वेद-संहितां निर्माय भास्कराय सा प्रदत्ता, तेनापि स्वतन्त्राया एकस्या आयु-र्वेदसंहिताया रचनां कृत्वा धन्वन्तर्यादयः षोडश शिष्याः पाठिताः। तद-नन्तरं तैरपि एकैकां संहितां विरच्यायुर्वेदस्य प्रचारः प्रसारश्च कृतः। तदनु तेन—

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः॥
आयुर्वेदस्य विज्ञाता चिकित्सासु यथार्थवित्।
धर्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्तितः॥ = १६।३५.३६

इत्येवं वैद्यस्य वैशिष्ट्यं बोधयित्वा ज्वरादीन् ६४ रोगान् नामग्राहं गणयित्वा पापे रोगाणां वृद्धिः, मृत्योरागमनं तथेश्वरभक्त्या तेषां प्रश-मनमिति निर्दिष्टम्। यथा गरुडं दृष्ट्वा सर्पाः पलायन्ते तथैव रोगो-पायपरिज्ञातुः समीपे रोगा स्थातुं न शक्नुवन्तीत्युक्त्वा रोगाणां चिकित्सा प्रतिपादिता, आयुर्वेदानुसारं सर्वरोगनाशकप्रक्रिया प्रदर्शिता, शरीर-वर्द्धकोपायाश्च निर्दिष्टा विद्यन्ते।

## पुराणेषु राजनीतिविद्या

पुराणेषु राजधर्मस्य विवरणं बहुषु स्थलेषूपलभ्यते। मत्स्यपुराणे हि चतुर्दशसु (२१४-२२७) अध्यायेषु अभिषिक्तस्य राज्ञः कर्तव्यवर्णनस्य प्रसङ्गे राज्ञ उत्पत्तिः कथं जायते, तस्य कियन्तो भवन्ति सहायकाः, कियन्ति चाङ्गोपाङ्गानि अपेक्षितानि, राजरक्षायाः कानि सन्ति साधनानि, सामदण्डभेदनीतेः कदोपयोगः कर्तव्यः, राजकुमारस्य शिक्षा दीक्षा च कीदृशी भवितुमर्हति ? इत्यादीनां विषयाणां विस्तृतं विवेचनं जातमस्ति। एवं स्वाम्यमात्य जनपद-दुर्ग-दण्ड-कोश-मित्राणां निर्देशानन्तरं राज्ञो विभिन्नैर्देवैः सह साम्यस्य सम्यग्विवेचनं विधाय भौमदिव्यान्तरीक्षाणामुत्पातानां शान्तिविधानं राज्ञः कर्तव्यमादिष्टम्। किञ्च कृपणानाथवृद्धविधवास्त्रीणां योगक्षेमार्थं वृत्तेः विधानं परिपालनं च राज्ञोऽनिवार्यं कार्यं निर्णीतमास्ते, यदद्यत्वे समुन्नतस्य राष्ट्रस्य समुज्ज्वलमादर्शमयं रूपं विद्यते—

> कृपणानाथवृद्धानां विधवानाञ्च योषिताम्।
> योगक्षेमं च वृत्तिं च तथैव परिकल्पयेत् ॥ = म०पु० २१५।६२

महाभारतेऽपि देवर्षिणा नारदेन महाराजाय युधिष्ठिराय मूकान्धपङ्गुव्यङ्गहीन-बान्धवविहीनानाथसन्यासिनां पितृवत् पालनमादर्शराजधर्म उपदिष्टोऽस्ति—

> कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान्।
> पितेव पासि धर्मज्ञ ! तथा प्रव्रजितानपि ॥ स०प० ५।१२५

अग्निपुराणे दशसु (२१८-२२७) अध्यायेषु राजधर्मस्य विस्तृतं विवेचनं प्रस्तुतं विद्यते, यत्र राज्याभिषेकप्रसङ्गेऽभिषेकनिमित्तमनेकेषां पौराणिकानां मन्त्राणामुपयोगःकृतोऽस्ति तथा सहायसम्पत्ति-अनुजीविवृत्त-राजधर्म दण्डप्रणयनादीनां सम्यग् विवेचनं विद्यते। अपिच पञ्चदशसु (२३८-२५२) अध्यायेषु श्रीरामद्वारा लक्ष्मणाय राजधर्मस्यातिसुन्दर उपदेशो दत्तो वर्तते। अनया राजनीतिः कौटिलीयार्थशास्त्रस्य बहुशोऽनुकरणं करोति। तत्रत्यः प्रस्तुतः कामन्दकीयनीतिसारोऽग्निपुराणस्य सङ्ग्राहकनीत्या सह सामञ्जस्यं भजते।

गरुडपुराणे अष्टसु ( १०८—११५ ) अध्यायेषु राजतन्त्रसम्बद्धानां धर्मार्थकामसम्बन्धिनां विषयाणामत्युत्तमो विचारः प्रस्तुतो विद्यते। अस्य नीतिसारप्रकरणं नैतिकशिक्षायै महदुपयोगि उपादेयं संग्रहणीयञ्च वर्तते।

मार्कण्डेयपुराणस्य द्वयोः ( १६—१७ ) अध्याययोः मदालसाद्वारा स्वपुत्रायालर्कायातिमनोहरोमहत्त्वपूर्णश्च राजधर्मस्योपदेशः कस्य राजनीतिनिपुणस्य नरस्य हर्षाय न स्यात् । वायुपुराणे च ९६ अध्याये राजवंशवर्णनप्रसङ्गे राजनीतेर्वर्णनं समीचीनतरं विद्यते । एवं मत्स्याग्निगरुडमार्कण्डेयपुराणातिरिक्ते विष्णुधर्मोत्तरोपपुराणेऽपि (२।१) वरुणपुत्रेण पुष्करेण परशुरामं प्रति वर्णिता पुष्करनीतिः राजव्यवस्थायामादर्शमयं महत्त्वमुपस्थापयति ।

महाभारतस्य शान्तिपर्वणि एक राजधर्मपर्वैवास्ति, यत्र भगवतः श्रीकृष्णस्य प्रेरणया युधिष्ठिरेण पृष्टो भीष्मपितामहः शरशय्यायां शयानः स्वानुभवप्राकृतनकथानकपूर्वकं विशदतया अत्युत्तमाया राजनीतेरुपदेशं प्रदत्तवान्, यस्य प्रचार-प्रसाराभ्यामद्यत्वेऽपि भारतस्य सर्वविध कल्याणं नून स्यात् । एषां विचाराणां परिशीलनेन पौराणिकराजधर्मस्य स्वरूप सम्यगभिव्यक्तं भवति । पुराणे हि राष्ट्रस्य समुज्वल आदर्शः प्रस्तुतो वर्तते, यत्र न कदाचिदपि कोऽपि पुरुषः स्वाधिकाराद्वञ्चितो भवितुमर्हति सर्वकल्याणकारकस्य समुन्नतराष्ट्रस्य विकसितं रूपमिदमेवास्ति यत् ।

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥

दीप्त्यर्थकाद् राज् धातोः कनिन् प्रत्यये कृते राजन् शब्दो निष्पद्यते, यस्य शाब्दिकोऽर्थो भवति दीप्यमानः प्रकाशमान प्रतापवान् वा । वेनपुत्रस्यपृथोः प्रसङ्गे पौराणिक प्रतिपादनं वर्तते यत् प्रजानामनुरञ्जनात्तस्य नाम राजा जातं । अतएव कलिङ्गसम्राजा खारवेलेन स्वकीये शिलालेखे ( ई० पू० १६५ ) प्रोक्तमस्ति यदहं प्रजानां रञ्जनं करोमि । प्रजाया अनुरञ्जनं राज्ञो विधेयकार्येषु एकतममस्ति । वेनेन याः प्रजा विरक्ता कृता आसन् ता एव पृथुना अनुरक्ताः कृताः—

पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
अनुरागात्ततस्तस्य नाम राजेत्यजायत ॥ = वि० पु० ११३।४८

पुराणेषु प्रोक्तमस्ति, यदा भगवतो निन्दया मुनिगणेन पापी राजा वेनो निहतः तदा सर्वत्रोत्थितं धूलिमालोक्य जनप्रश्नानन्तरं तैः कथित यद् राष्ट्रस्याराजकत्वाद् दीनाश्चौरा भूत्वा परेषां धनानि लुण्ठन्ति तेषां परधनापहारिणां चौराणामुत्पातेनायं धूलि उड्डीयमानो दृश्यते ।

ततोऽराजकतां निवारयितुं यथा काष्ठे मथ्यमाने धूमरूपेण तस्य मले निष्क्रान्तेऽग्निरुत्पद्यते तथैव महर्षिभि र्वेनशरीरे मथ्यमाने ततो निषादरूपेण तत्कल्मषे निर्गते पश्चादग्निरिव देदीप्यमानः पृथुरुत्पन्नः। तस्य हस्ते विष्णोश्चक्रचिन्हमालोक्य तं विष्णोरंशं मत्वा विधेराज्ञया राज्येऽभ्यषिञ्चन् महर्षयः :—

समागम्य ततो वैण्यमभ्यषिञ्चन् नराधिपम् ।।=वि०पु० १।१३।४४

राज्ञां प्रयोजनीयतासम्बन्धे जिज्ञासया वसुमनसा पृष्टो बृहस्पतिरुक्तवान् यत् लोके यो हि धर्मो दृश्यते तन्मूलकारणमस्ति राजैव। राज्ञो भयेन प्रजा नान्यं पीडयति। यदा प्रजा मर्यादां त्यजति लोभाक्रुष्टा च जायते तदा राजैव धर्मद्वारा तत्र शान्ति स्थापयति, स्वयं प्रसन्नतापूर्वकं स्वतेजसा च प्रकाशते—

राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते।
प्रजा राजभयादेव न खादन्ति परस्परम् ।। ६८।८
राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः।
जले मत्स्यानिवाभक्ष्यन् दुर्बलं बलवत्तराः ।। = ६८।१६

राजा हि प्रजानां प्रधानं शरीरं प्रजाऽपि राज्ञोऽतुपमं शरीरमस्ति। राजानं विना देशो देशवासिनो वा न स्यातुं न शक्नुन्ति तथा देशं देशनिवासिनो विना राजापि न वर्द्धते। अत उभयोः सौमनस्यमावश्यकम्-

राजा प्रजानां प्रथमं शरीरं प्रजाश्च राज्ञोऽप्रतिमं शरीरम्।
राज्ञा विहीना न भवन्ति देशा देशैर्विहीना न नृपा भवन्ति ।।६८।५८

एवं वाल्मीकिरामायणेऽपि विशदतया राज्यस्य विवेचनं कृतमस्ति। राष्ट्रस्य समाजस्य च प्रत्येकशाखायां मर्यादारक्षायै एकस्य शासकस्य नेतुरावश्यकता भवति, यतोहि शासननेतृत्वाभावे सामाजिकमर्यादाभङ्गस्य स्वाभाविकी सम्भावना भवति। शासकनेतृत्वं विना कश्चिदपि समाजः सुचारुरूपेण न सञ्चलितुमर्हति, शासनभयादेव समाजस्य नियमबद्धता स्थिरा तिष्ठति, अन्यथा उच्छृङ्खलतया मर्यादाभ्रष्टस्याशङ्का वर्तते। अत एव राष्ट्रहिताय शासकरूपेणैकस्य धार्मिकस्य शक्तिशालिनो राज्ञ उपादेयता प्रतिपादिताऽस्ति पुराणेषु महाभारते च।

## राज्ञि देवत्वभावना।

पौराणिकैरुदाहरणैः सङ्केतो मिलति यद् राजा प्रायो विष्णोरंशेन उत्पद्यते। महाराजस्य पृथोः सम्बन्धे प्रोक्तमस्ति यत् तस्य दक्षिणे हस्ते

चक्रचिन्हं विलोक्य तं विष्णोरशं मत्वा ब्रह्मणः परमानन्दो जातः। त्रेतायुगे दैत्यैः पराजिता भूत्वा शरणमापन्ना देवा विष्णुना प्रोक्ता यद् राजर्षेः शशादपुत्रस्य पुरञ्जयस्य शरीरेऽहमंशमात्रेण स्वयमवतीर्णो भूत्वा सकलान् दैत्यान् हनिष्यामि। राज्ञि देवत्वभावना वेदेष्वप्युपलभ्यते। स्मृतौ तु–अष्टानां लोकपालानां मात्राभि जयिते नृप इत्युक्तम्। शतपथब्राह्मणे राजा प्रजापतेः प्रत्यक्षप्रतिनिधिरूपेण वर्णितोऽस्ति। मनुस्मृतौ राज्ञो देवत्वनिर्धारणसिद्धान्तस्य स्पष्टीकरणं प्राप्यते। राजा बाल्यावस्थायाः किन्न स्यात्, तं साधारणं मनुष्यं मत्वा तस्य सम्माने कथञ्चिन्न्यूनता न कर्तव्या, यतोहि राजा मनुष्यरूपेण साक्षाद्देवता एव भवति। एतेन देवतावज्ञायामधर्मादियोऽदृष्टदोषाः प्रादुर्भवन्ति—

> बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
> महती देवता ह्येषा नररूपेण तिष्ठति॥=म०स्मृ०७।८

## राज्योत्पत्तिः

राज्यस्योत्पत्तिः ब्रह्मपुत्रस्य स्वायम्भुवमनोः समयादेवाभवत्, यतः पित्रा स्वायम्भुव एव प्रथमो मनुर्मतः। स्वायम्भुवमनोः द्वौ पुत्रौ बभूवतुः प्रियव्रत उत्तानपादश्च। द्वावपि बलवन्तौ धर्मरहस्यज्ञौ। प्रियव्रतस्य साम्राज्यसीम्नो विषये उक्तमस्ति यत् स सप्तद्वीपाया वसुन्धराया राजाऽऽसीत्। यतोहि तेनैव समस्तां पृथिवीं सप्तसु द्वीपेषु विभज्य तेषु आग्नीध्रादयः सप्त पुत्रा क्रमशोऽभिषिक्ताः। ज्येष्ठ आग्नीध्रो जम्बूद्वीपस्य राजाऽऽसीत्। तेनापि जम्बूद्वीपं नव भागेषु विभज्य तत्र नाभिप्रभृतीन् नव पुत्रानभिषिच्य तपसे शालग्रामक्षेत्रे गतम्। ततः शतजित्सेनप्रभृतिभिः पुत्रैः भारतवर्षं नवभागेषु विभज्य तत्र शासनं कृतम्। वेनपुत्रो हि राजा पृथुः स्वधनुष्कोट्या निम्नोन्नतामिमां भूमिं समतलां कृत्वा तत्र पुर-ग्रामादीन् निर्माय पृथिवीपालनपूर्वकं प्रचुरदक्षिणासम्पन्नानामनेकेषां महायज्ञानामनुष्ठानं कृतवान्। विष्णुपुराणे प्रोक्तमस्ति यत् महर्षिभिः यदा राजा पृथू राज्यपदेऽभिषिक्तस्तदा लोकपितामहेन ब्रह्मणा नृपेभ्यः क्रमशो राज्यानां वितरणं कृतम्, तैरद्यापि धर्मतः समस्ता पृथिवी परिपाल्यते—

> यदाभिषिक्तः स पृथुः पूर्वं राज्ये महर्षिभिः।
> ततः क्रमेण राज्यानि ददौ लोकपितामहः॥
> तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना।
> यथाप्रदेशमद्यापि धर्मतः परिपाल्यते॥=१।२२।१,११

एकदा पृथिवी राजानं पृथुमुवाच, नरनाथ ! मया ये ओषधयः परिभक्षिताः, यदि भवदिच्छा स्यात्तर्हि तान् दुग्धरूपेण दातुं प्रभवामि, पर प्रजाहिताय कश्चनैवविधो वत्सः प्रस्तोतव्यो यद्वात्सल्यादह तान् दुग्धरूपेण नि.सारयेयम्, तथा निम्नोन्नतां मां सर्वत्र समतलां कुरुष्व, येनाहमुक्तमोत्तमौषधीनां बीजरूप दुग्ध सर्वत्र समुत्पादयेयम् । तत. स स्वायम्भुवं मनु वत्स विधाय स्वहस्ते एव पृथिवीतः प्रजानां हिताय समस्त धान्यं दुदोह । तदन्नाधारेणाद्यापि प्रजा जीवन्ति। तदनु प्रजाजनाः स्वकीय विकाससाधनरूपे कृषिकर्मणि प्रवृत्ताः—,

> स कल्पयित्वा वत्सं तु मनुं स्वायम्भुवं प्रभुः ।
> स्वे पाणौ पृथिवीनाथो दुदोह पृथिवी पृथुः ॥ = वि०पु०१।१३।८७

विहितकर्मभिः समाजस्य संचालने विघ्नकर्तॄणां दुर्जनानां शस्त्रास्त्रद्वारादमनं राज्ञ आवश्यक कर्तव्यं विद्यते। दुष्टेभ्यो दण्डदाने साधूनां संरक्षणे एव राज-प्रजयोरुभयोः कल्याणं निश्चप्रचम् । दुष्टेभ्यो दण्डदानात् सज्जनानां सरक्षणाच्च राजा स्वाभिमत लोक प्राप्नोति—

> दुष्टानां शासनाद्राजा शिष्टानां परिपालनात् ।
> प्राप्नोत्यमिताल्लोकान् वर्णसंस्थां करोति यः ॥ = वि०पु० ३।७।२७

चातुर्वर्ण्यधर्मवर्णनप्रसङ्गे राजान सगरं प्रति महर्षेरौर्वस्य कथनमस्ति यत् शस्त्रास्त्रधारणं पृथिवीसंरक्षण च क्षत्रियजातेराजीविकारूपमनिवार्यं कर्म विद्यते—

> शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका ।
> तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम् ॥ = वि०पु० ३।८।२७

अस्यामभिप्रायोऽस्ति यत् समाजव्यवस्थायाः सुचारुतया सञ्चालनं शक्तिशालिनां क्षत्रियाणामेव प्रधानो विधेयोऽधिकारो वर्तते। अतः क्षत्रियाणां राज्ञां धर्मतः प्रजापालनपूर्वक समाजव्यवस्थासचालनमनिवार्यं कर्तव्यमस्ति ।

## राष्ट्रियभावना

राष्ट्रियताया या निर्मलधारा पुराणेषु प्रवाहितास्ति, सा अतुलनीयाऽस्ति, भारतवर्षीयप्रजाजनानां धर्माचरण-कर्मयोग, निष्कामसद्व्यापारै याँ ऐहलौकिक-पारलौकिकौ च अभ्युदयनिःश्रेयसौ उपलभ्यौ स्तः, ताभ्यां स्वर्गीयदेवगणा अपि आत्मनो भारतीयजनतापेक्षया हीनौ अनुभवन्ति।

पुराणेषु भारतभूमिगौरववर्णनप्रसङ्गे देवानां कथनमस्ति यद् जीवै: सहस्र-जन्मानन्तरं महत्पुण्योदये सति भारतवर्षे जन्मग्रहणस्यावसरो लभ्यते। देवा निरन्तरमिदमेव चिन्तयन्ति यद् यैः स्वर्गापवर्गयोर्मार्गभूते भारतवर्षे जन्म गृहीतमस्ति, तथा ये फलाकांक्षारहिताः कर्माणि परमात्मनि समर्प्य निर्मलाः सन्त तस्मिन्ननन्ते लीयन्तेऽते देवतापेक्षया धन्यतमाः सन्ति।

स्मृतिषु राष्ट्रियचरित्रस्यादर्शभूतानामेतद्देशप्रसूतानां ब्राह्मणानां चरितम्यो विश्वस्य सर्वैःप्राणिभि: शिक्षाग्रहणस्य परामर्शो दत्तोऽस्ति। राष्ट्रियचरित्रस्यादर्शताभिमानिनां स्मृतिकाराणां दृष्टौ भारतवर्षं विश्वस्य गुरुरस्ति। एवं संस्कृतकविभिः राष्ट्रनिहिता गौरवभावना महत्या ओजस्विन्या वाण्या व्यक्ता कृताऽस्ति। कविकुलकलाधरेण कालिदासेन हिमालयं प्रति यो राष्ट्रियभावनाया आदर्श उपस्थापितोऽस्ति, तेन तस्य हृदयमहत्त्व लक्ष्यते। कविना देवतात्म नगराधिराज-पृथिवीमानदण्ड इत्येभिस्त्रिभि विशेषणैर्विशिष्टं कृत्वा अत्युत्कृष्टं गौरवं राष्ट्रियस्वाभिमानं च व्यक्तीकृतमस्ति।

## निष्कर्षः

उपरिवर्णितराजनीतिविवरणैः ज्ञायते यत् पौराणिकयुगे एकमात्र प्रजातन्त्रं शासनस्यैवाधिपत्यमासीत्। प्रजाजनानां सुखसुविधायाः सर्वत्रा-दर्शमयी व्यवस्थाऽऽसीत्। राजसु स्वार्थभावनायाः सर्वथा अभाव आसीत्। धर्माचरणस्य पालनं राज्ञामनिवार्यं व्रतमासीत्। राज्ञां धर्माचरणेन पुण्यप्रतापेन च भारतवर्षं स्वर्गात् श्रेष्ठतममासीत्। राज्ञां धर्माचरणेन प्रभावितो जनसमुदायोऽपि धर्मिष्ठ आसीत्, यतो राज्ञां व्यापारानुसार-मेव प्रजानां प्रवृत्तिर्भवति—

> राज्ञि धर्मिणि धर्मिष्ठा पापे पापाः समे समाः।
> राजानमनुवर्तन्ते यथा राजा तथा प्रजाः॥ — भोजप्र० ४४

प्रजाभ्यः करग्रहण स्वल्पमात्रमासीत्। धर्महीनस्य स्वार्थिनो नास्तिकस्य च राज्ञो वधोऽविधेयो नासीत्। आततायिनो राज्ञो वेनस्य प्रसंगे उक्तं वर्तते यद् ऋषिभिर्वारितोऽपि राजावेनो यदा स्वदुराचरण न तत्याज तदा मुनिगणैरीश्वरनिन्दकः स राजा मन्त्रद्वारा पवित्रीकृतकुशैर्निहतः।

एतेन निष्कर्षः निःसरति यद् राजधर्माचरणेन सह राजानो निरन्तरं प्रजापालने दत्तावधाना आसन्। राष्ट्रेऽधार्मिकस्य स्वार्थिनो राज्ञः प्रयो-

जनोयता नासीत्। दुराचारिणो नास्तिकस्य मदान्धस्य वा राज्ञो राज्यच्युतौ हत्यायां च प्रजा एकमता भवतिस्म। पौराणिकं राजतन्त्रं राज्यं गणतन्त्र-राज्यापेक्षया कस्यामपि मात्रायां न्यूनतरं नासीत्, प्रजाजनानां सुखशान्तये राजानः स्वार्थं विहाय सदा चेष्टन्तेस्म, प्रजाभिश्च राजा देववत् मन्यन्तेस्म, समाद्रियतेस्म, तदनुकूलमेव च व्यवह्रियतेस्म। चन्द्रगुप्तमौर्यस्यैकाधिपत्यं साम्राज्यमनियन्त्रितं नासीदिति स्पष्टयता कौटिल्येनापि प्रोक्तमस्ति यत् प्रजानां हिते सुखे च राज्ञोऽपि हितं सुखं वा वर्तते, नात्मनः, परं प्रजानां प्रियकार्यसम्पादनमेव राज्ञो हितकरं प्रियं च भवति—

> प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
> नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥ अ०शा० १।१९

## वर्णाश्रमव्यवस्था—

पुराणेषु समाजव्यवस्थाया निरूपणं महता कौशलेन कृतमस्ति। भारतीया वर्णाश्रमव्यवस्था कियती वैज्ञानिकी उपादेया च वर्तते, इत्यस्य सोपपत्तिकं विवेचनं सर्वेषु पुराणेषु कृतं विद्यते। अतो विचारशीला व्यक्तयोऽस्य तथ्यस्य संरक्षणाय निरन्तरं प्रयतन्ते। वर्णाश्रमधर्मो हि श्रुतिस्मृतिविहितत्वात्, शिष्टाचारपरिगृहीतत्वात्, साधुसम्मतत्वाच्च सर्वश्रेष्ठो धर्मो वर्तते। तथा चोक्तं मत्स्यपुराणे महर्षिणा व्यासेन—

> श्रुति-स्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः।
> शिष्टाचारप्रवृद्धश्च धर्मोऽयं साधुसम्मतः॥ = १४०।५२

पुराणानां प्रभावेण यावत्कालपर्यन्तं पवित्रतमेऽत्र भारतवर्षे वर्णाश्रमव्यवस्था सुरक्षिता स्थास्यति, तावत्कालमाध्यात्मिकलक्ष्योपेता धर्मप्राणा हिन्दूजातिर्न विनाशमेष्यति, तद्द्वारा देवानां मानवानाञ्च कल्याणं सततं संपत्स्यते एव। यदा वर्णसाङ्कर्येण पवित्रतमेयं वर्णाश्रमशृङ्खला प्रणक्ष्यति; तदा हिन्दुजातेः पतनमवश्यं भविष्यति। वर्णाश्रमशृङ्खलायां नारीणां पातिव्रत्यधर्मस्य महत्त्वं सर्वमतिशेते। पातिव्रत्यधर्मो हि वर्णाश्रमव्यवस्थाया मूलमस्ति। वर्णाश्रमधर्मह्रासेनैव पातिव्रत्यधर्मस्य ह्रासः संभवति। राजैव प्रजा धर्ममार्गे प्रचालयितुं शक्नोति। यश्च नरेन्द्रो वर्णाश्रमशृङ्खलां सम्यक् प्रचालयति, स त्रिलोके वन्दितः स्वर्गसुखभाक् च भवति। तथाचोक्तं मार्कण्डेयपुराणे—

वर्णधर्मा न सीदन्ति यस्य राज्ये तथाऽऽश्रमाः।
वत्स ! तस्य सुखं प्रेत्य परत्रेह च शाश्वतम् ॥
उत्पथग्राहिणो मूढान् स्वधर्माच्चलितान् नरान्।
यः करोति निजे धर्मे स राजा स्वर्गमृच्छति ॥
वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः।
कर्मणा मनसा वाचा निरयेषु पतन्ति हि ॥
एवमाचरते राजा चातुर्वर्ण्यस्य रक्षणे।
स सुखी विहरत्येव शक्रस्यैव सलोकताम् ॥ = २७।३०-३३

वस्तुतो लोकव्यवस्थापालकानां सनातनधर्मिणां सकलं कर्मकदम्बं चिरस्थायित्वाय वर्णाश्रमधर्ममूलकमेवास्ति। वर्णाश्रमपरम्परायां रजोवीर्यशुद्धिः प्रधानाऽस्ति। अतएव सवर्णविवाहः प्रशस्यो धर्मसंगतश्चेति स्वीक्रियते, असवर्णविवाहः कामजः पापमयश्च आख्यायते। वर्णाश्रमव्यवस्थोपेक्षणात् क्षत्रियोऽपि राजकुमारो नाभागो बलाद्वैश्यापाणिग्रहणाद् वैश्यत्वमापन्न इति मार्कण्डेयपुराणतोऽवगम्यते—

उपयेमे च तां वैश्यतनयां सोऽथ तत्सुतः।
ततः स वैश्यतां प्राप्तः समुत्पत्याह पार्थिवम् ॥ = ११४।१

वर्णाश्रमधर्मस्य मौलिकं दार्शनिकं च रहस्यमवलम्ब्य हिन्दुजातिरस्मिन् विकरालेऽपि काले स्थिरा वर्तते। अतएव हिन्दूजातेः पवित्रतायाः संरक्षणाय वर्णाश्रमव्यवस्थायाः संरक्षणमत्यावश्यकमस्तीति पुराणानां सिद्धान्तः। समाजव्यवस्थाया आधारो विद्यते वर्णाश्रमधर्मः। प्रत्येकवर्णस्य तथा प्रत्येकाश्रमस्य कृते पृथक् पृथक् विधानं विद्यते। वर्णाश्रमधर्मस्य पालनेनैव भगवदाराधना सम्यक् सम्भवति, नान्यथा। पौराणिके युगे। ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चत्वारो वर्णाः स्व-स्वकर्तव्यपालनेन सन्तुष्टा आसन्। केनापि सह कस्यापि कर्तव्यपालनाय प्रतिस्पर्धाया भावना नासीत्। अतः समाजः सर्वतोभावेन सुखसम्पन्नः समुन्नतिशीलश्चासीत्।

विष्णुपुराणे पराशरमुनेः कथनमस्ति यद् यज्ञानुष्ठानाय प्रजापतिना यज्ञस्योत्तमसाधनरूपचातुर्वर्ण्यस्य रचना कृता। ब्रह्मणो मुखात् प्रथमं सत्त्वप्रधाना प्रजा उदपद्यत, तदनन्तरं वक्षःस्थलाद् रजःप्रधाना, तदनु उरुद्वयतः उभयप्रधाना तथा पश्चाद् द्वाभ्यां पद्भ्यां तमःप्रधाना सृष्टि-

जाता। एवमेते क्रमशो ब्राह्मण-क्षत्रिय-वैश्य-शूद्रनामकाश्चत्वारो वर्णा अभवन्। एवं ब्राह्मण क्षत्रिय-वैश्य-शूद्राश्चत्वारो वर्णाः क्रमशो ब्रह्मणो मुख-वक्ष स्थल जानु-पद्भ्य समुदपद्यन्त—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम।

पादोरुवक्षःस्थलतो मुखतश्च समुद्गताः ॥ = वि० पु० १।६।६

यज्ञानुष्ठानाय समुत्पादितैरप्येतैं वर्णैः कृतेन यज्ञेन सन्तुष्टा देवा जल-वर्षणद्वारा प्रजा स्तर्पयन्ति। अतो यज्ञ सर्वथा मानवानां कल्याणहेतुः।

नारायणस्तुतिप्रसङ्गे ध्रुवेणाप्युक्तम्-हे पुरुषोत्तम! भवतो मुखाद् ब्राह्मणा बाहुभ्यां क्षत्रियाः उरुभ्या वैश्याः चरणयुगलाच्च शूद्राः-समुत्पन्नाः (१।१२।६३) भारतीयवाङ्मयस्य प्राचीनतमसाहित्येन ऋग्वेदेनापि पौराणिकस्यास्य मतस्य वैव समर्थनं भवति-.

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्य कृतः।

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥ = १०।९०।१२

तथाच चातुर्वर्ण्यस्य सृष्टेरनन्तरं तदर्थं विहितकर्मणा विधान जातम्। ब्राह्मणानां मुख्यानि कर्माणि दान-यजन-स्वाध्यायाः वृत्यर्थञ्चा-न्यद्वारा यज्ञसम्पादनमध्यापनं न्यायानुसारं प्रतिग्रहश्चेति षट् कर्माणि निर्धारितानि। क्षत्रियाणां यथेच्छ दान विविधयज्ञानुष्ठानं स्वाध्याय-प्रजारक्षार्थ शस्त्रधारण दण्ड पृथिवीपालनञ्चोत्तमाऽऽजीविका उक्ता। लोकपितामहेन ब्राह्मणा वैश्येभ्य पशुपालनम् वाणिज्यम् कृषिकर्म चेति त्रीणि कर्माणि जीविकारूपेण दत्तानि। शूद्राणां कर्तव्यमस्ति यदेतेषां त्रयाणां वर्णानां प्रयोजनसिद्धये समुचितं कार्यविधानं तेनैव स्वजीविकानिर्वाहश्च। तथाचोक्तं कूर्मपुराणस्य पूर्वार्द्धे—

यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः।

अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमा॥

दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः।

दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते।

शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम्॥ = २।२।८४०

तथा चाध्ययनम्, अध्यापनम्, यजनम्, याजनम्, दानम्, प्रतिग्रहश्चेति षट् कर्माणि ब्राह्मणस्य, दण्डयुद्धाभ्यां सहितमध्ययनादित्रयमिति पञ्च कर्माणि क्षत्रियस्य, कृषि-वाणिज्योपेतं पूर्वोक्तत्रयमिति पञ्चैव कर्माणि वैश्यस्य तथा शिल्पकर्मादिसहिता ब्राह्मणादिवर्णत्रयस्य सहयोग-

दानात्मिका शुश्रूषैवैकं शूद्रस्य धर्मसाधनं प्रोक्तम्, श्रीमद्भगवद्गीतायामपि चतुर्णां वर्णानां धर्मनिर्देश इत्थोऽस्ति भगवता श्री कृष्णेन । = १८।४१-४४

वर्णाश्रमविधानप्रसङ्गे लोकपितामहेन ब्राह्मणा वैश्याय अध्ययन-यज्ञदानातिरिक्तं पशुपालनं वाणिज्यं कृषिकर्म च जीविका रूपेण निर्दिष्टमस्ति —

पशुपाल्यं च वाणिज्यं कृषिं च मनुजेश्वर ।
वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः ॥ = वि०पु०३।८।३०

मनुनापि वैश्याय षट् कर्मातिरिक्तम् कुसीदसहितमृणव्यापार-कर्मणोऽपि विधानम् कृतमस्ति । तदनुसारं वैशस्य सप्त कर्माणि विहितानि —

पशूनां रक्षणं दानमिज्याऽध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥

एवं पुराणकाले प्रत्येकवर्णस्य मानवाः सुखसम्पन्नाः स्वाधिकारे सन्तुष्टा आसन् । वर्णधर्मस्योपादेयतायाः सर्वोत्कृष्टतायाश्च प्रोक्तमस्ति यदस्य स्मरणमात्रेण मानवः पापपुञ्जैः मुक्तो भवति । = ६।८।१७

चातुर्वर्ण्यसृष्टेरनन्तरं स्रष्ट्रा ब्रह्मचर्य-गृहस्थ-वानप्रस्थ संन्याससंज्ञकानां चतुर्णामाश्रमाणां निर्माणं कृत्वा वर्णधर्मवदाश्रमधर्मानपि । विहितवान् तत्र-स्वाध्यायः, सन्ध्याकर्म, अग्निहोत्रम्, भिक्षाचरणम्, गुरुसेवा, ब्रह्मचारिणो नित्यो धर्मः[1] । अग्न्युपासना अतिथिसत्कारः, यज्ञः दानम्, देवपूजनम्, गृहस्थस्यास्ति धर्मः[2] । होमः, मूलफलाशनम्, स्वाध्याय, तपः न्यायत संविभागो वानप्रस्थस्यास्ति धर्मः[3] । भिक्षाशनम्, मौनम्, तपः, ध्यानम्, सम्यग्ज्ञानम्, वैराग्यं चास्ति संन्यासिनो धर्म[4] तथा चोक्तं कूर्मपुराणस्य पूर्वार्द्धे ।

---

१. भिक्षाचर्या च शुश्रूषा गुरोः स्वाध्याय एव च ।
सन्ध्याकर्माग्नि कार्यं च धर्मोऽयं ब्रह्मचारिणः ॥ = २।४१

२. अग्न्योऽतिथिः शुश्रूषा यज्ञो दानं सुरार्चनम् ।
गृहस्थस्य समासेन धर्मोऽयं मुनिपुङ्गवाः ॥ = २।४२

३. होमो मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्मोऽयं वनवासिनाम् ॥ = २।४३

४. भैक्षासनं च मौनित्वं तवोध्यानं विशेषत. ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मत. ॥ = २।४४

वर्णाश्रमधर्मस्य महत्त्वप्रतिपादने पुराणेषु प्रोक्तमस्ति यद् यः पुरुषो वर्णाश्रमधर्मस्य पालनं करोति, स एव परमपुरुषस्य विष्णोराराधको भवितुमर्हति, तत्तुष्टये नान्य उपायो विद्यते। तथाहि वि०पु० ३।८।६

धर्मभेदः

श्रौत-स्मार्त भेदाद्धर्मो द्विविधो निर्दिष्टोऽस्ति। श्रौतधर्मो मूलरूपेण शास्त्रविधिना वेदेन च सम्बद्धोऽस्ति तथा स्मार्तधर्मो वर्णाश्रमस्य विविधासु नियमितासु व्यवस्थासु सामाजिकपरम्परासु चाधारितोऽस्ति। यज्ञसम्पादन वेदाध्ययनादिकर्मकलापः श्रौतधर्मान्तर्गतो विद्यते। ब्राह्मणादिचतुर्वर्णं ब्रह्मचर्यादिचतुराश्रमानुकूलंक्रियमाणं कर्म स्मार्तधर्मान्तर्गतमस्ति। एषा द्विविधानामपि कर्मणा पुराणेषु साङ्गोपाङ्ग निरूपणं विद्यते। अतः पुराणेषु पूर्णतया एषां विवरणमुपलभ्यते। विष्णुपुराणे वर्णाश्रमधर्मस्य विधेयतायां प्रोक्तमस्ति यद् यो मानवः स्ववर्णाश्रमधर्मविरुद्ध मनसा वाचा कर्मणा चाचरणं करोति स नून नरकेषु पतति—

> वर्णाश्रमविरुद्धं च धर्म कुर्वन्ति ये नराः।
> कर्मणा मनसा वाचा निरयेषु पतन्ति ते॥ = २।६।३०

धर्मो हि विश्वस्य जगतः प्रतिष्ठा, स द्विविधो विश्वधर्मो देशधर्मश्च। तत्र विश्वधर्मः समस्तस्य विश्वस्य प्राणिभिरनुष्ठेयो भवति। यथा— अहिंसा दया-क्षमा-सत्य-त्याग-सन्तोष दान-श्राद्धादि साधरणो धर्मः। एषामाचरणेन विभिन्नेषु राष्ट्रेषु विश्वबन्धुत्वभावनाया उद्बोधने सौहार्दपूर्णसम्पर्कस्थापने च सरलतया साहाय्यमासादयितु शक्यते।

देशधर्मश्च तत्तद्देशस्स्कृत्यनुसारं तत्तद्देशमाश्रस्य मानवैरनुष्ठीयमानो भवति। यथा भारतवर्षस्य देशधर्मो वर्णाश्रमधर्मो विद्यते। एतस्य परिपालन सर्वविधाया देशोन्नतेर्मूलम्। तदुपेक्षया वृत्तिसाङ्कर्यात् सघर्षस्य प्रादुर्भावेन देशो विविधाभिर्दुरवस्थाभिर्ग्रस्तो भूत्वाऽवनतिशिखरे समारोहति। अतोऽस्य देशस्य समुन्नतये वर्णाश्रमधर्मावलम्बनमेव श्रेयस्करम्। वर्णाश्रमधर्मस्य सम्यक् पालन हि पुरुषार्थचतुष्टये प्रमुखस्य मोक्षस्य प्रासादे समारोढुमस्ति प्रथमं सोपानम्। एतदतिक्रम्य कोऽपि मानवो मनोऽभिलषितां सिद्धि समासादयितुं न शक्नोति। तथाचोक्तं कूर्मपुराणे—

यदीच्छेदचिरात् स्थानं यतन्मोक्षाख्यमव्ययम्।
वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः॥
पूजयेद् भावयुक्तेन यावज्जीवं प्रतिज्ञया।
चतुर्णामाश्रमाणां तु प्रोक्तोऽयं विधिवद् द्विजाः॥
एतद्वः कथितं सर्वं चातुराश्रम्यमुत्तमम्।
नह्येतद् समतिक्रम्य सिद्धिं विन्दति मानवः॥ =२।९९-१०१

चतुर्षु आश्रमेषु गृहस्थाश्रम एवान्येषामाश्रमणामुत्पत्ति-स्थिति कारणमस्ति। अतो गृहस्थाश्रमश्चतुर्णामाश्रमाणां मूलं विद्यते। स्त्री-परिग्रहोऽग्निहोत्रानुष्ठानमतिथिसत्कारो यज्ञश्राद्धादि कर्म सन्तानोत्पादनञ्च गृहस्थानां परम कर्त्तव्यो धर्मो मतोऽस्ति। दण्ड-मेखलाजटादिधारणं भूतलशयनं श्रद्धया गुरुशुश्रूषापूर्वकं विद्याध्ययनं भिक्षाचरणं व्यसनवर्जनादिकञ्च ब्रह्मचारिणामस्ति मुख्यतः पालनीयो धर्मः। चीर पत्राजिनधारणम्, धान्यकन्दमूलफलभक्षणम्, सायं प्रातःस्नानसन्ध्योपासनपूर्वकं होमानुष्ठानम्, सततं भगवदाराधनञ्च वानप्रस्थिनां करणीयो धर्मोऽस्ति। सत्य शौचं क्षमाऽस्तेयमक्रोधोभिक्षाचर्या सावधानतया विषयभोगपराङ्मुखता प्राणिमात्रे दया च स्वयंभुवा सन्यासिनां धर्मो निरूपितोऽस्ति। एतदतिरिक्तं सदाचारो विनयः शुद्धता विलासहीनता, सर्वेन्द्रियनिग्रहः, सम्यग् विवेचनञ्च सर्वेभ्योऽस्त्युपव्रतम्। सत्य-दान-दया-क्षमा-व्रत-योग-यम - नियम-यजन-सरलतादिकर्म सद्भावनारहितेभ्यः श्रद्धाहीनेभ्यो जनेभ्यः फलप्रदं न भवति। श्रद्धाहीनोऽन्तःशुद्धिविहीनश्च मानवः पराक्रमं कृत्वापि सफलो न भवितुमर्हति। कलुषितेन हृदयेन सर्वस्वदानेऽपि कश्चन धर्मभाजनं भवितुं नार्हति। निर्मलेनान्तःकरणेन वर्णाश्रमधर्मपालका गृहस्थाः प्रजापतिलोके वासं कुर्वन्ति, ब्रह्मचारिणो ब्रह्मलोकं लभन्ते, वानप्रस्थाः स्वर्गं निवसन्ति, सन्यासिनो ब्रह्मसायुज्यमवाप्नुवन्ति। योगिनां कृते कैवल्योपलब्धिर्ध्रुवा, वर्तते, किन्तु नानाबुद्धीनां वर्णाश्रमधर्मपराङ्मुखानां जनानां कृते किमपि स्थानं नास्ति। अतो वर्णाश्रमधर्मपालनतत्पराणां स्वधर्मनिष्ठानामेव मानवानां सर्वत्र प्रशंसा बोभवीति। स्वेप्सितं च स्थानं ते नूनं लभन्ते इति निश्चप्रपचं ज्ञेयम्।

पुराणेषु कतिपयानामीदृशीनां जातीनामप्युल्लेखो विद्यते, यासां गणना चातुर्वर्ण्यान्तर्गता नास्ति। यथा—निषाद-चाण्डाल, कैवर्त-

पुलिन्दाभीरादयः। तत्राभीरा लुण्ठकरूपेण वर्णिताः सन्ति। एते भगवतः श्रीकृष्णस्य प्रयाणानन्तरमर्जुनेन द्वारकातो हस्तिनापुरे नीयमाना द्वारकावासिनां वृष्णीनामन्धकानाञ्च पत्नीर्बलाद् गृहीतवन्तः, येन हतप्रभो नि श्रीको गाण्डीवधन्वा पार्थो रुदन् धर्मराज युधिष्ठरं प्रत्युक्तवान्–

> सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः।
> अध्वन्युरुक्रमपरिग्रहमङ्गरक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि॥
>
> =श्री० भा० १।१५।२०

## विवाहप्रथा—

धर्मशास्त्रानुसारमेव पुराणेष्वपि प्रथमे वयसि ब्रह्मचर्यपालनपूर्वकं विधिवद् विद्याध्ययन विधाय गृहस्थाश्रमे प्रवेष्टुकामनया यथाशक्ति गुरवे दक्षिणां दत्वा तदनुमत्या ब्रह्मचर्यव्रत समाप्य सत्कुलोत्पन्नया सवर्णया भ्रातृमत्या कन्यया सह विधिवत् पाणिग्रहणं कृत्वा सांसारिक-व्यावहारिकानुष्ठानपूर्वक सुखेन समयं यापनायादेशो दत्तोऽस्ति।

यथा स्मृतिषु विवाहोऽष्टविधः प्रोक्तो वर्तते तथैव पुराणेष्वपि विवाहोऽष्टविधोनिर्दिष्टोऽस्ति—(१) ब्राह्मविवाहः, (२) दैवविवाहः, (३) आर्षविवाहः, (४) प्राजापत्यविवाहः, (५) आसुरविवाह, (६) गान्धर्व-विवाहः, (७) राक्षसविवाहः, (८) पैशाच विवाहश्च—

> ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसुरः।
> गान्धर्व-राक्षसौ चान्यौ पैशाचश्चाष्टमो मतः॥ = वि०पु० ३।१ ।२४

पौराणिकयुगे श्रीरामादीनामेकपत्नीव्रतस्य श्लाघ्यतमे आदर्शे सत्यपि बहुविवाहस्यापि प्रथायाः प्रचलनमासीत्। सृष्टेरादिपुरुषस्य स्वायम्भुवमनो द्वितीयपुत्रस्य उत्तानपादस्य द्वे भार्ये अस्तां सुनीति सुरुचिश्च। दक्षदुहितृषु कश्यपस्य १३ धर्मस्य १४ सोमस्य २७ अरिष्टनेमे. ४ बहुपुत्रस्य २ अङ्गिरस २ कृशाश्वस्य च २ पत्न्य आसन्। महर्षिणा सौभरिणा सह महाराजस्य मान्धातुः ५० कन्यकानां विवाहस्योल्लेखो वर्तते। राज्ञश्चित्रकेतोरनेकाः स्त्रिय आसन्। राज्ञः सगरस्य सुमति-सुकेश्यौ द्वे भार्ये द्वे तथा शर्मिष्ठा देवयान्यौ ययातेः पत्न्यौ बभूवतुः। राज्ञो दशरथस्य कौशल्या-सुमित्रा-कैकेय्यस्तिस्रः स्त्रियोऽभूवन्। वसुदेवस्य देवकी-रोहिण्यादयोऽष्टौ भार्या बभूवुः। पौराणिक विवरणानुसारं

भगवतः श्रीकृष्णस्य रुक्मिणीसत्यभामादीनां १६१०८ पत्नीनां चर्चा विद्यते। विचित्रवीर्यस्य द्वे अम्बाम्बिके, पाण्डो द्वे कुन्तीमाद्र्यौ, अर्जुनस्य द्रौपदी-उलूपी-चित्राङ्गदा-सुभद्राश्चेति चतस्त्रः पत्न्य आसन्। एव पुराणकाले एकविवाहस्यानेकविवाहस्य च प्रथा प्रचलितासीत्। परमिदानीन्तन इव तदा विवाहसम्बन्ध कठोरो नासीत्। क्वचिद् ब्राह्मणानां क्षत्रियकन्याभिः सह तथा क्षत्रिणां ब्राह्मणकन्याभिश्च सह विवाहो भवतिस्म। धर्मानुकूलं वैवाहिकं बन्धनं पवित्रतमं मन्यतेस्म। विष्णुपुराणे प्रोक्तमस्ति यद् धर्मानुकूलविधिना दारपरिग्रहं कृत्वा सहधर्मिण्या सार्द्धं गार्हस्थ्यधर्मस्य पालनं परमं श्रेयस्करं सिद्धयति—

सहधर्मचारिणी प्राप्य गार्हस्थ्यं सहितस्तया।
समुद्वहेद्दारश्वत्त साम्यगूढं महाफलम् ॥ = ।१०।२६

विवाहानन्तर स्वसौन्दर्य सुशीलतादिभिरनेकैराकर्षकैर्गुणैः पत्नी पतिमनुकूलयतिस्म, यतोहि पत्नीसाहचार्यं धार्मिकेण भावेन प्रतिष्ठितमनिवार्यञ्चासीत्। अतएव पतिरपि लोकपरलोकयोः सर्वत्र स्वां विशिष्टा पत्नीमेवाभिकामयतेस्म। तदनुरूपा पत्नी अपि धार्मिकभावनाभि प्रेरिता सती पत्यु सार्वत्रिकं कल्याणं सर्वथा चेष्टतेस्म। जन्मान्तरेऽपि तमेव पतिं कामयतेस्म।

## क्षत्रियब्राह्मणविवाहसम्बन्ध :

कतिपयैः प्रसङ्गैरवगम्यते यत् पौराणिके युगे क्वाचित्को ब्राह्मणक्षत्रिययोः परस्पर विवाहसम्बन्धो भवतिस्म। यथा (क) स्वायम्भुवमनुपुत्रेण प्रियव्रतेन कर्दमर्षेः पुत्र्याः कर्दम्या सह विवाहः कृत आसीत्। (ख) प्रियव्रतपुत्र्या ऊर्जस्वत्या साक शुक्राचार्यस्य विवाहो जाता यस्यां देवयानी समुत्पन्ना। (ग) राज्ञ शर्यातिः कन्यया सुकन्यया सह महर्षेश्च्यवनस्य विवाहो जातः। (घ) महर्षिणा सौभरिणा चक्रवर्तिनो राज्ञो मान्धातु कन्याभि. सह पाणिग्रहः कृतः। (ङ गाधितनयया सत्यवत्या भृगुपुत्रस्य ऋचीकस्य विवाहोऽभवत्। (च) जमदग्ने मुनेरिक्ष्वाकु कुलोत्पन्नस्य रेणो कन्यया, रेणुकया सह विवाहो जात आसीद्यतः क्षत्रियहन्ता परशुराम. समुत्पन्नः। (छ) नहुषपुत्रस्य राज्ञो ययातेः शुक्राचार्यपुत्र्या देवयान्या सह विवाहो जातः। (ज) राज्ञो वृहदश्वस्य सुतया अहल्यया सह गोतममुनेर्विवाहो जातो यस्यां शतानन्द उत्पन्नः।

यद्यपि प्राग् राजन्यकन्यकानां ब्राह्मणैः सह वैवाहिकसम्बन्धस्य विवरणमुपलभ्यते तथापि एवम्विधं विवाहस्योदाहरणं न्यूनमात्रया-मवाप्यते। अनन्तरं तु प्रायः सवर्णमध्ये एव विवाहप्रथा सीमिता।

पौराणिके काले प्रत्येकप्राणी आश्रमधर्मस्य यथार्थपालने तत्पर आसीत्। पद्मपुराणे एका कथा विद्यते—यत् पञ्चभिर्गन्धर्वकुमारीभि-र्ब्रह्मचर्याश्रमस्य नियमपालने संलग्न एको मुनिकुमारको गान्धर्वविवाहार्थं विवशीकृतः, किन्तु स ब्रह्मचर्याश्रमस्य नियमानामुल्लघनं कर्तुं न स्वीचकार। तथापि ता गन्धर्वकुमार्यः कामातुरा भूत्वा तं मुनिकुमारं भ्रशयितु महान्तं प्रयत्नमकापुः। यदा तास्तत्र सफलमनोरथा न वभूवुः तदा ताभिस्तस्मै पिशाचत्वाय शापो दत्तः मुनिकुमारश्च तं शापं सहर्षं स्वीकृतवान्, किन्तु ब्रह्मचर्याश्रममतिक्रमितुं नाङ्गीचकार।

पौराणिकयुगे सामाजिकक्षेत्रे नारीणा महत्त्वपूर्णं स्थानमस्ति। अतश्चतुर्षु आश्रमेषु गृहस्थाश्रमः प्रमुखः कथितो यतः स सर्वेषामाधारो-ऽस्ति।[१] तत्र गृहस्थाश्रमे नारी गृहस्वामिनी गृहलक्ष्मीश्च स्वीकृतास्ति।[२]

तया विना गृहस्थाश्रमस्य पालनं सर्वथाऽसम्भवोविद्यते नारीं। विना गृहमरण्यसममुक्तमस्ति, यज्ञ-दान-पूजा-तपश्चर्यादिषु पतिभिः सह तासा-मुपस्थितिरत्यावश्यिका कथिताऽस्ति तथाहि पद्मपुराणे।[३]

यः पति. स्वां भार्यां विना एकाकी तीर्थयात्रां कुरुते स न तीर्थयात्रा-फल लभते तस्य केवल श्रम एव भवति। अतः पत्नीं विना पत्युः सर्वं-कर्मविफल भवतीतिपद्मपुराणस्य सिद्धान्तः।[४]

---

१. पुण्यभार्याप्रयोगेण गार्हस्थ्य सम्प्रजायते।
गार्हस्थ्यात् परमो धर्मो द्वितीयो नास्ति भूतले ॥ = भू०ख० ५९।१६
गार्हस्थ्यात् समाश्रित्य सर्वे जीवन्तिः जन्तव.।
तादृशं नैव पश्यामि ह्यन्यमाश्रमपुत्तमम् ॥ = भू०ख ५९।१८

२. गार्हस्थ्यस्य धर्मस्य भार्या भवते स्वामिनी। = ५९।३०
एव यो भार्यया हीनस्तस्य गेह वनायते।

३. यज्ञाश्चैव न सिद्धयन्ति दानानि विविधानिच ॥ = भू०ख० ५९।२०
भार्या विना हि यो धर्म. स एव विकलो भवेत् ॥ = ३४

४. पूतां पुण्यतमा स्वीया भार्या त्यक्त्वा प्रयाति यः।
तस्य पुण्य फलं सर्वं वृथा भवति नान्यथा ॥ = भू०ख० ५९।८

भार्यायां सत्यमेव यज्ञादीनि धर्मकार्याणि सिद्धयन्ति नान्यथा। यो गृही भार्यहस्तदत्तेन पिण्डेन पितॄणां श्राद्धं कुरुते तस्यानन्त फलं प्रजायते। यथाऽमृतपानेन नृणां तृप्तिर्भवति तथैव पितॄणां तेन तृप्तिः प्रजायते। प्रसन्नाः पितरः तदन्नं भुङ्क्त्वा परमं प्रमोदमावहन्ति सन्तुष्टाश्च जायन्ते। अतो भार्यां विना पुरुषस्य किञ्चिदपि धर्मकार्यं न तादृश सफलं भवति। न केवलं धर्मकार्येषु एव पत्न्या सहायता अपेक्षिताऽस्ति, किन्तु अर्थसंग्रहेऽपि तस्याः सहयोगस्यास्त्यपेक्षा मार्कण्डेयपुराणानुसारं धर्मार्थकार्यस्य साहाय्यं दाम्पत्यप्रेम्ण्येवाधारितं विद्यते। पतिः पत्नीं विना असहायो भवति, नवा तया विना सफलो भवति। अतः सुखमयं जीवनयापनाय पतिपत्न्योरनुकूलताऽत्यावश्यिकास्ति।[1]

अतः पतिद्वारा प्रसन्नतापूर्वक पत्न्या भरणपोषणादिकमत्यावश्य विद्यते, यतो हि धर्मार्थकामाना संसिद्धयै भार्या सदा सहायिका भवति।[2]

नारीधर्मे पातिव्रत्यधर्मस्य सर्वप्रथम स्थान विद्यते। पत्युः सेवया नारीषु विशिष्टशक्तेः सञ्चारो जायते। निस्वार्थसेवाधर्मपालनेन नारीषु दिव्यसामर्थ्यस्य प्रादुर्भावो भवति, येन महतामपि शक्तिशालिनां शक्ति तासु कुण्ठिता भवति। या नारी पातिव्रत्यधर्मानुसारं स्वपत्युः सेवामकृत्वा परपत्यु सेवादिकं कुरुते सा लोके निन्दिता भवति तथा परलोके तस्या दुर्गतिर्भवति। नारीणां पतिसेवापराङ्मुखत्व न केवलमपराध एवास्ति, किन्तु महत् पापमपि विद्यते, यस्य भयङ्करो परिणामो न केवलमस्मिन्नेव लोके परं परलोकेऽपि भुज्यते। अस्योदाहरणरूपेण पद्मपुराणीयमेकमाख्यानोपस्थापन पर्याप्तमस्ति। कलहा नाम्नी एका नारी आसीद्, यया स्वपतिमभोजयित्वा तत्परोक्षे स्वय मिष्ठान्नादिक भुङ्क्तेस्म। तत्कारणेन मृता सा जन्मान्तरे वकयोनिं प्राप्तावती। तत्रापि पत्या सह कलहं कृत्वाऽन्यजन्मनि शूकरी जाता। तत्रापि पतिद्वेषकारणात् मृता सा मार्जारी जाता। तत्रापि पतौ दोषारोपण कृत्वा आत्महत्या विधाय जन्मान्तरे राक्षसी बभूव। इदमस्यास्ति रहस्य यदेकस्मिन्

---

1. कथं भार्यामृते धर्ममर्थं वा पुरुषः प्रभो।
   प्राप्नोति काममथ वा तस्या त्रितयमाहितम्॥ = मा०पु० २१।७०
2. भर्तव्या रक्षितव्या च भार्या पत्या सदा मुदा।
   धर्मार्थकामसंसिद्धयै भार्या भर्तुः सहायिका॥ = २१।९८

जन्मानि भ्रष्टः संस्कारः कियत्सु जन्मसु पतनस्य कारणं जायते। अतः पत्युरनादरः पत्नीकृते सर्वथाऽनुचितोऽस्ति। यथा पत्युरनादरः पत्न्यै घातको विद्यते तथैव पत्याऽऽचरितं पत्न्या अपमानादिकं निन्दनीयं परलोकविनाशकञ्चाभिमतं विद्यते पुराणेषु।

पुराणेषु नारीणामधिकारेषु बलं न प्रदत्तं विद्यते, किन्तु तासां कर्तव्येषु बलदत्तमस्ति। नारीणां त्यागभावनायां धर्मस्य प्रेरणास्ति। सत्कुलप्रसूता नारी पापभयात् पत्युः त्याग न विधत्ते पत्न्यै पतिः देवस्वरूपो विद्यते। अतः पत्युः सेवा पत्न्या धर्मोऽस्ति। नारीणां सर्वा मनोभिलाषा पत्युः सेवाधर्मे विलीना जायते। नारीणां सद्गतिप्राप्तयेऽयमेव प्रशस्तो मार्गो मत. तथा पत्यु. प्रतिकूलाचरणं पापस्य कारणं विद्यते। पत्यु. प्रसन्नतायै स्वच्छवस्त्रालङ्कारादिधारणं शृङ्गारादिकं च नारीणां कर्तव्यकोटौ स्वीकृतमस्ति पद्मपुराणे।[1]

परपुरुषैः सह मनोविकृतिकारकमश्लील भाषणं परपुरुषस्य दर्शन स्पर्शनमर्द्धनग्नावस्थायां स्वेच्छापूर्वकं निरर्थकं पर्यटनं च नारीणां कृते त्याज्यमुक्तमस्ति। पतिप्रसन्नतायै प्रसन्नता पतिदु खे दुःखित्वं च पातिव्रत्यधर्मस्य ध्येयमस्ति। पत्युराज्ञापरिपालनं नारीणां सहिष्णुतायाः परा काष्ठा विद्यते। भारतीयमन्तव्यानुसार नारी रत्न स्वीकृतममस्ति। यथा रत्नस्य रक्षा महत्या सावधानतया क्रियते तथैव बाल्यावस्थायां पिता यौवनावस्थायां पतिः वृद्धावस्थायाञ्च पुत्रो नारीणां रक्षका अङ्गीकृताः सन्ति, अपि च तदर्थं निरर्थकस्य स्वेच्छाचारस्य निषेधः कृतोऽस्ति।

> पिता रक्षति कौमारे भर्ता रक्षति यौवने।
>
> पुत्रस्तु स्थविरेभावे न स्त्रीः स्वातन्त्र्यमर्हति ॥ = भू०ख०५४-२३

यथा पशुपक्ष्यादिभिः पक्वान्नस्य सुरक्षा अत्यावश्यिका विद्यते तथैव दुर्जनैः युवतीनां सरक्षणमत्यावश्यक विद्यते। अन्यथा नारीषु भ्रष्टासु वर्णसङ्करताद्वारा वंशस्य पतनभयमुपतिष्ठते। पुराणेषु नारीणां कृते पतिः देवस्वरूपोऽङ्गीकृतोऽस्ति, तस्य सेवयाऽभीष्टफलप्राप्तिर्भवति। पतिं केन्द्रविन्दुं मत्वा पतिसेवातिरिक्तं तदर्थमन्यदेवार्चनं यज्ञोपासना-

---

1. रूपशृङ्गारसौभाग्यं सुखं सम्पत्तिरेव च।
   नारीणां हि महाभागो भर्ता शास्त्रेषु गीयते ॥ = भू०ख०५७।१०

दिकञ्च नावश्यकमुक्तमस्ति। नारी पतिशुश्रूषयैव पत्या महता क्लेशेनार्जितस्य पुण्यस्यार्द्धभागिनी भवति।[1] अतः पतिशुश्रूषा तासां परमो धर्मः।

एवं पुराणेषु प्राचीनसंस्कृतिपरिपोषिका तात्कालिकी सामाजिकी व्यवस्थाऽभिमतास्ति। अतो वर्णाश्रमव्यवस्था नूनं पालनीया।

## क्षत्रोपेता द्विजातयः

पौराणिकराजवंशावल्यां यत्र तत्र क्षत्रोपेतद्विजातिशब्दस्योल्लेखो वर्तते। क्षत्रोपेतद्विजातिनाम्ना तासामेव सन्ततीनां ग्रहणं भवति याः क्षत्रियकुले जन्म लब्ध्वापि स्वाचरणेन द्विजत्वं लभन्तेस्म। यथा—(१) राज्ञो रथीतरस्य वंशजाः क्षत्रियकुलोत्पन्ना अपि स्वाचरणेनाङ्गिरस उक्ताः।(२) अप्रतिरथस्य पुत्रः कण्वः तस्य मेधातिथिर्जातः, यस्य सन्ततयः काण्वायनब्राह्मणा बभूवुः। (३) दुरुक्षयस्य पुत्राः त्र्यारुणि-पुष्करिण्य-कपिनामानः पश्चाद् ब्राह्मणा अभवन्। (४) मुद्गलतो मौद्गल्यनामकानां क्षत्रोपेतब्राह्मणानामुत्पत्तिरभवत्। (५) विश्वामित्रादुत्पन्ना मधुच्छन्दआदयः पुत्रा अन्यान्येषु ऋषिवंशेषु विवाहयोग्याः कौशिकगोत्रीया ब्राह्मणा जाता—४।७।३८ एवं क्षत्रियेण पित्रा उत्पन्नाः स्वाचरणेन द्विजत्वम्प्राप्ता काण्वायन-मौद्गल्य कौशिक गोत्रीया ब्राह्मणा अतिप्रसिद्धाः सन्ति।[2]

## स्त्रीवर्गः

पुराणकाले विवाहानन्तरं स्त्रियो गृहस्वामिन्य आदरणीयाश्च जायन्तेस्म। धार्मिक-सामाजिकसंस्कारेषु स्त्रीणां पुरुषवदधिकार आसीत्। पतिपत्न्योर्व्यावहारिकः सम्बन्धः श्लाघ्यो दृष्टिगोचरो भवति। दम्पत्यो प्रेमातिरेकाद् दृढतरसंस्काराच्च शिवस्य पत्नी सती, विष्णोश्च पत्नी लक्ष्मीः जन्मान्तरेऽपि तावेवावृणुताम्।

---

१. स्त्रियस्त्वेवं समस्तस्य नरर्दुःखार्जितस्य वै।
पुण्यस्यार्द्धापहारिण्य. पतिशुश्रूषयैव हि ॥=मा०पु० १६।६१
नास्ति स्त्रीणां पृथक्यज्ञो न श्राद्ध नाप्युपोषितम्।
भर्तृशुश्रूषयैतान् लोकानिष्टान् व्रजन्ति ताः ॥=मा० पु० १६।६२

२. एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसाः स्मृताः।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥=वि०पु० ४।२।१०

गृहसम्बन्धिनः सदाचारस्य वर्णने प्रोक्तमस्ति यद्वुद्धिमद्भिः स्त्रीणामपमानं न कर्तव्यं, ताम्य ईर्ष्या न कार्या, तासां तिरस्कारोऽपि न विधेयः। पतिसेवा स्त्रीणां परमो धर्मः पुराणेपु प्रोक्तो वर्तते। पौराणिकविवरणेपु स्त्रीणां सामाजिकी स्थितिः गुरु-देवता ब्राह्मणवदादरणीयासीत्। पारिवारिकक्रमे पितुरनन्तरं मातुरेव स्थानमासीत्। धार्मिकेपु कृत्येपु मातरं प्रतिसम्मानप्रदर्शनस्यविवरणं बहूपलभ्यते। मातृरूपेण स्त्रीणां सम्मानमत्यन्तमुच्चस्तरीय वर्णितमस्ति। भगवतामनुना तु मातुः स्थानं पितुरपेक्षया दशगुणमधिक प्रोक्तं विद्यते। पुराण काले स्त्रियोऽवध्याः प्रोक्ताः सन्ति। स्त्री शिक्षा-तपश्चरण-योगसाधनसम्बन्धे पुराणानामुदारा दृष्टिर्विद्यते। स्वय स्वायम्भुवो मनुः तपसा निष्पापां शतरूपां पत्नीत्वेन जग्राह। स्वधापुत्र्यौ मेनाधारिण्यौ चोत्तमज्ञानसम्पन्ने सर्वगुणयुक्ते ब्रह्मवादिन्यौ योगिन्यौ चास्ताम्। बृहस्पतेर्भगिनी वरस्त्री सिद्धयोगिनी आसीत्। विश्वकर्मणः पुत्री संज्ञा श्राद्धदेवं मनुं यमं यमुनाञ्चोत्पाद्य प्रतिसेवायां छायां नियुज्य स्वय सर्वेषां तपसे जगाम। सगरपत्न्यौ सन्तानोत्पत्त्यर्थं तपश्चरणद्वारा और्वं महर्षि प्रसादयामासतुः। उषासखी चित्रलेखा स्वयोगवलेनानिरुद्ध तत्समीपे प्रापयामास। सुलभा च जनकसभायां स्वयोगवलेन तस्य शरीर प्रविश्य तमाश्चर्यान्वितं कृतवती। वैदिकयुगे गार्गीमैत्रेय्योर्ब्रह्मवादित्वन्तु प्रसिद्ध विद्यते। एभिः विवरणैः प्रतीयते यत् तद्युगीना नार्यः तपो योग-दर्शनादिज्ञानसम्पन्ना शिक्षितायोग्यतमाश्चासन्।

**सती-प्रथा :**

पुराणकाले सती प्रथापि प्रचलितासीत्। राजनि शत्रुजिति मृते तत्पत्नी शैला जन्मान्तरे तमेव पतिं प्राप्तुकामनया चितारूढस्य तस्यानुगमनं चकार। रावणस्य पुत्रवधू सुलोचना मृतस्य पत्युर्मेघनादस्य चिताग्नौ स्वं शरीर तत्याज। द्वापरे भगवति श्रीकृष्णे दिवंगते अष्टौ प्रधानमहिष्यः तच्छरीरमालिङ्ग्याग्नौ प्रविष्टाः। रेवती बलभद्रशरीरमालिङ्ग्य प्रज्वलिते चिताग्नौ स्वं शरीर भस्मसात्कृतवती। वासुदेव पत्न्य पतिशरीरेण सह चिताग्नौ सहर्षं प्रविविशुः।

**शिक्षा :**

पुराणप्रतिपादितानां वर्णाश्रमधर्मविपयकाणां समस्तधर्मकृत्यानां चरममुद्देश्य परमात्मसान्निध्यप्राप्तिरेव विद्यते। अतः शिक्षा भग-

वतः प्राप्तये एकमनिवार्यं साधनं प्रशस्तश्च मार्गो विद्यते। शिक्षाया अभावे परमात्मप्राप्तिः सुलभा न संभवति। भक्तिकर्मादियोगोऽपि शिक्षाविकासस्यैव परिणामः। शिक्षा वने, गुरुकुले, स्यात् नगरे, ग्रामे, गुरुगृहे वा भवेत् परं शिक्षायाः समुपार्जनमत्यावश्यक विद्यते। प्राचीनभारते शिक्षा अन्तर्ज्योतिषः शारीरिकशक्तेश्च स्रोतोऽभिमतास्ति, या शारीरिक-मानसिक-बौद्धिकाध्यात्मिकशक्तीनां विकासेन सह मानवस्वभावे परिवर्तनं करोति। एवं शिक्षा योग्यं समाजसेविनं सदसद्विवेकिनं धार्मिकमुपयोगिनं नागरिकं च मानवं निर्माति। सा अप्रत्यक्षरूपेण इहलोके परलोके चाध्यात्मिकं साहाय्यं प्रददाति। राज्ञः सगरस्य जिज्ञासया आश्रमधर्मसम्बन्धे महर्षिणा और्वेण प्रोक्तं यत् उपनयनसंस्कारानन्तरं बालकेनाध्ययनार्थं तत्परतया ब्रह्मचर्यव्रतमवलम्ब्य सावधानेन मनसा गुरुगृहे निवासो विधेयः। श्रीराम उपनयनसंस्कारानन्तरं कुलगुरोर्वसिष्ठस्याश्रमे ब्रह्मचर्यपूर्वकं विद्याध्ययनं चकार। श्रीकृष्णबलरामौ यज्ञोपवीते जाते विद्योपार्जनार्थं शिप्रातटेऽवन्तीपुरवासिनः सान्दीपनिमुने समीपे गतौ। पौराणिककाले विद्यालयानामस्तित्वं वनेषु नदीतटेषु नगरेषु गुरुगृहेषु वासीत्। दत्तेन पुरुकुत्साय दार्शनिकतत्त्वज्ञानशिक्षा नर्मदानदीतटे दत्ता (१।८।६) सप्तर्षिभिः ध्रुवाय यौगिकी शिक्षा उपवने प्रदत्तासीत्। प्रह्लादस्य शिक्षा नगरवर्तिनि गुरुगृहे एव जाता। एवं प्रायः गुरुकुलानि नगराद्बहिरेकान्तवातावरणे वनेषु एव भवन्तिस्म, यतो दार्शनिकतत्त्वविवेचका मुनयो नगराद्बहिरेव तिष्ठन्तिस्म। कण्व-वाल्मीकि-सान्दीपनिप्रभृतीनामाश्रमा वनेष्वेवासन्। यत्राधीतविद्या बालका समाजोपयोगिनो जाताः।

## गुरुसेवा :

पुराणेषु गुरुसेवा अनिवार्या प्रोक्ताऽस्ति। गुरुकुले वेदाध्ययनप्रसङ्गे और्वेण मुनिना प्रोक्तमस्ति यद् गुरुकृतेऽन्तेवासिना शौचाचारव्रतपालनपूर्वकं गुरुशुश्रूषा कुर्वता स्थिरं बुद्ध्यावेदाद्यध्ययनं कर्तव्यम्। पुराणेषु गुरुं प्रति अतिशयोदात्तभावनायाः सर्वाधिकसम्मानप्रदर्शनस्य चादेशो दत्तोऽस्ति। ब्रह्मचर्यप्रसङ्गे च प्रोक्तमस्ति यत् ब्रह्मचारिणा उभयोः सन्ध्योः गुरोरभिनन्दनं विधेयं तद्विरुद्धं च किमपि नाचरणीयम्। मनुस्मृतौ गुरु-गुरुपत्नी-गुरुपुत्रान् प्रति उच्चतमादरप्रदर्शनस्य विधानं कृतमस्ति।

## शिक्षाशुल्कम् :

पौराणिककाले मासिकं वार्षिकं वा शिक्षाशुल्कं न देयमासीत् किन्तु अभिमतमध्ययनं समाप्य गुरोरनुमत्या तस्मै यथाशक्ति गुरुदक्षिणां दत्त्वा गृहस्थाश्रमे प्रवेशस्य विधिरासीत्। विद्यासमाप्त्यनन्तर श्रीकृष्णबलभद्राभ्यां गुरुदक्षिणायै प्रार्थितः सान्दीपनिर्गुरुः तयोरतीन्द्रियं कर्म जानन् पत्न्या सह विचार्य प्रभासक्षेत्रे समुद्रे निमज्य मृतं पुत्रमयाचत। ताभ्याञ्च समुद्रात्तमानीय दक्षिणार्थं समर्प्यगृहस्थाश्रमे प्रविष्टौ तथाहि श्रीमद्भागवते[1] विद्याध्ययनानन्तरं गृहस्थाश्रमे प्रविविक्षुणा गुरवे दक्षिणां दत्त्वा गृहे गत्वा दारपरिग्रहण कार्यम्[2] शिक्षाशुल्कग्राही शिक्षको धार्मिककार्यावसरे ऋत्विग्योग्यो न स्वीक्रियते स्म। तं विद्याव्यवसायिन वणिजं कथयित्वा तस्य समाजे निन्दा भवतिस्म[3]—

## पाठ्यसाहित्यम् :

पौराणिकयुगे पाठ्यसाहित्यमासीत् वेद-वेदाङ्ग-धर्मशास्त्र-धनुर्वेदादि। मैत्रेयेण विष्णुपुराणे स्वीकृतमस्ति यन्मया वेद-वेदाङ्ग-धर्म. शास्त्राणि समधीतानि आसन्। तथा च पौरणिककाले षड् वेदाङ्गानि (छन्दः, कल्पः. ज्यौतिषम्, निरुक्तम्, शिक्षा, व्याकरणम्। चत्वारो वेदाः (ऋग्यजुःसामाथर्वाणः) मीमांसा, न्यायपुराणम् धर्मशास्त्रम्, आयुर्वेदः धनुर्वेदः, गान्धर्ववेदः, अर्थशास्त्रम्, एता अष्टादश विद्याः प्रख्याता आसन्। तथाहि विष्णुपुराणे।[4]

---

१. द्विजस्तयोस्त महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषी मतिम्।
संमन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयाबभूव ह = १०।४५।३७
साऽप्यतीन्द्रियमालोक्य तयो. कर्म समाहित।
अयाचत मृतं पुत्रं प्रभासे लवणार्णवे ॥=वि०पु० ३।१०

२. गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम्।
गार्हस्थ्यमिच्छन् भूपाल. कुर्याद्दारपरिग्रहम् ॥=३।१०।१३

३. यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वन्दति। मा०मि० १।१७

४ अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्याश्चैताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ॥=३।६।२८,२९

पुराणकाले देशस्यार्थिकी दशा सर्वतोभावेन समुन्नता सन्तोषजनिका चासीत्। पुराणेषु अर्थोपार्जनं धर्माचरणस्यैकं प्रधानमुपकरणमासीत्। अत एवार्थोपार्जनाय विष्णोराराधना परमविधेया निर्दिष्टाऽस्ति। चतुर्विधपुरुषार्थेषु अर्थोपार्जनमन्यतमं पुरुषार्थं मत्वा स्व-स्ववर्णधर्मानुसारं जीविकार्थमर्थोपार्जनं परमप्रयोजनीयं स्वीकृतम्[1]—

## पुराणेषु कलाविमर्शः

पुराणानि हि सन्ति भारतीयसंस्कृतेः प्रतीकानि। अतिप्राचीनकालतः प्रचलन्तीषु पौराणिकसंहितासु तत्कालीनसंस्कृतेर्दर्शनं भवति। अतः पुराणानां समस्तानिवृत्तान्तानि भारतीयसंस्कृतेः प्रतिनिधित्वं कुर्वन्ति। भारतीयसंस्कृतेः सर्वातिशायी आध्यात्मिकपक्ष इव भौतिकपक्षविलासोऽपि दृष्टिगोचरतामायाति। यस्यां संस्कृतौ वेदाः प्रादुरभूवन्, उपवेदा उपनिबद्धाः, वेदाङ्गानि शिक्षा-कल्प-व्याकरण-निरुक्त ज्योतिष-छन्दोऽभिधानि निर्मितानि, वैज्ञानिकः कलाप्रबन्धो लिखितः, चतुः प्रकारं स्थापत्यम्। अष्टधा चिकित्सितम् समाङ्गो धनुर्वेदः, स्वरपदलयावधानात्मक सङ्गीतम्, विततसुषिरात्मक वाद्यम्, लास्यताण्डव नृत्तनृत्यादिक नाट्यम्, चतुःषष्टी कलादिकं च सर्वं विद्याविज्ञानकला पारम्पर्यं प्रादुर्भूतम्। यत्र वा ब्राह्मणारण्यकोपनिषदादिसम्वलितः सर्वज्ञानमयो वेदराशिः प्रायेणोपासनापरो यस्मिन् देवताविज्ञान यज्ञविधान ब्रह्मज्ञानञ्चविशेषेण श्रूयते। उपवेदेभ्यश्च गन्धर्वायुर्वेदस्थापत्येभ्यो भौतिकानां विज्ञानानां कलाकौशलं प्रवर्तितं स्मृतिपुराणोपपुराणराजनीतिदर्शनादीनां प्रणयनञ्च जातम्। किमितो वैशिष्ट्यमन्यस्यामपि कस्यञ्चित् संस्कृतौ संभवति ? नहि। अतो भारतीया संस्कृतिर्या समस्ताभ्यो लोक संस्कृतिभ्यो ज्येष्ठा श्रेष्ठा गरिष्ठा सर्वोत्कृष्टा च विराजतेतरामजस्रम्। एवं धर्मप्राणायां भारतीयसंस्कृतौ द्वयोरपि भौतिकाध्यात्मिकयोः पक्षयोः महिमा समान एवास्ति। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति धर्मलक्षणेऽभ्युदयपदेन लौकिकानां विज्ञानाधीनानां सुखानां निःश्रेयसशब्देन च मानवजीवनचरमोत्कर्षस्य पारलौकिकस्य ब्रह्मज्ञानाधीनस्य मोक्षस्य च परामर्शात्तत्र पक्षद्वयस्यापि समान प्रावल्यं वर्तते एव। शाश्वतिकसुखदृष्ट्यैव भारतीयसंस्कृतौ आध्यात्मिकपक्षस्य महत्वं कीर्त्यते।

---

1. धर्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः।
   ततः स्ववर्णधर्मेण वृत्त्यर्थं च धनागमम्॥ = वि० पु० ११९८।३१

वस्तुतः आध्यात्मिकदृष्ट्या लौकिककलायाः तावन्महत्त्वन्नास्ति यावदस्ति महत्त्वमाध्यात्मिककलायाः। भारतीयशास्त्रानुसार यस्याः संभोगेन विश्रान्तिर्जायते न सा कला भवितुमर्हति, प्रत्युतात्मनः परमात्मनि लय एव कला प्रोच्यते। अतएवोक्तमभियुक्तैः :

> विश्रान्ति र्यस्य सम्भोगे सा कला न कला स्मृता।
> लीयते परमानन्दे ऽयमात्मा सा परा कला॥

विश्वस्मिन् सूक्ष्मात् सूक्ष्मेषु विशालतमेषु च तत्त्वेषु कलात्मकताया अनुभूतिर्भवति। वटस्यातिसूक्ष्म बीजमङ्कुरितं भूत्वा महाविशालवृक्ष-रूपेण परिणमते। पुष्पस्य लघु बीजं लतादिरूपेण परिणतं सत् सुन्दरमा-कर्षकं विविधप्रकारकं सुमनमुपजायते। रत्नगर्भाया वसुन्धरायाः श्याम-लतादिविभिन्नरूपेषु सागरस्य चञ्चलेषु तरङ्गेषु, वर्षाकालीनमेघ-मालायाम् विद्दुल्लतायाम् सूर्योदयास्तसमये निःसीम्नो नभो-मण्डलस्य रङ्गविरङ्गाकृतौ, मानवादिशरीररचनायाञ्च वैचित्र्यपूर्णकला त्मकताया दर्शनं जायते निरन्तरम्। एवं समस्त विश्वमिदं कला-मयमालोक्य केषां सचेतसां चेतांसि न चमत्कृतानि भवन्ति।

पौराणिकनिर्णयानुसारमेकमात्रं भगवान्नारायण एव सर्वोत्कृष्टः कलाकारः सिद्ध्यति यतो, हि स्थावरजङ्गमात्क निखिल जगत् तदिच्छा-मात्रेणैवोत्पद्यते, प्रलयकाले च। तत्रैव निलीयते स एवास्ति जगत. स्थिति-लय पालनकर्ता तथा जगदिदमपि तदात्मकमेव। तथाचोक्तम्—

> विष्णो सकाशादुद्भूतं जगत्तत्रैव च स्थितम्।
> स्थिति-संयमकर्ताऽसौ जगतोऽस्य जगच्च सः॥ = वि० पु० १।१।३५॥

वैदिकवाङ्मयस्योद्घोषोऽस्ति यत् पर ब्रह्म परिपूर्णमस्ति तथा प्रलयकाले कार्यब्रह्मणः पूर्णत्वमादाय स्वस्मिन् लीनं कृत्वा केवलं परब्रह्मैवावशिष्यते। तथाचाह श्रुति.—

> पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्युते।
> पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

गीतायामर्जुनाय श्रीकृष्णद्वारा विश्वरूपदर्शनप्रसङ्गे कलायाश्चरमा परिणतिर्दृश्यते, यथा पार्थो भगवतः श्रीकृष्णस्य विश्वव्यापिनि विक-

राले मुखे नग-नगर नदी-निर्झर-तृण-तरु-लता-गुल्मादिप्राणिनश्च प्रविष्टान् विलोक्य आश्चर्यचकितः साञ्जलिस्तं प्रणमन् कलाया औत्कृष्ट्यवैभवमन्वभूत। तस्य विश्वात्मनः प्रत्येकक्रियाव्यापारोऽलौकिकक्रियाकारितायाः परिचायकोऽस्ति। धराया उद्धारसमये महावाराहस्य घर्घरध्वनिना गर्जनापूर्वकं दंष्ट्रायां कमलदलवत् पृथ्वीं धृत्वा रसातलान्निःसरणवेलायां तन्मुखनिश्वासोच्छ्वजलं जनलोकनिवासिनः सनकादीन् सिद्धेश्वरानार्द्रीश्चकार। तत्खुरैर्विदीर्णं जलराशि पुनः रसातले प्रविष्टमालोक्य तैर्मुनीद्रैर्विक्षिप्तहृदयैरितस्ततः पलायितम्। धरणीधरस्य तल्लोकोत्तरं कलात्मक दृश्यं सर्वान् व्यस्माययत्। अपि च मृद्भक्षणावसरे बालकृष्णस्यानने विस्मितया यशोदया 'दृष्टं समस्त ब्रह्माण्डं मार्कण्डेयेन मुनिना विलोकितं च प्रलयदृश्यं कलाया उत्कृष्ट रूपमेवासीत्।

भवननिर्माणस्य शिल्पविज्ञानस्य वा नाम वास्तुकला कथ्यते। वस्तुतो वास्तुकलाया विकाशो मानवसभ्यतया सहैव जातः। प्राणिमात्रे आत्मरक्षाया सुखसाधनस्य च भावः स्वाभाविको विद्यते। पक्षिणो नीडं रचयन्ति, भूषकाद्यो बीलं खनन्ति, मनुष्या गृहं निर्मान्ति, आरण्यका गुहामाश्रयन्ते। एवं जीव-जन्तु-पशु-पक्षिप्रभृतिषु आत्मरक्षायै सुन्दरातिसुन्दरकलापूर्णनिवासनिर्माणस्य भावना समुद्भवति। एवं हि मनुष्याः शीतोष्णवातवर्षणादिभिरात्मरक्षाया अनुभव कृत्वा वास्तुकलाया जन्म प्रदत्तवन्तः। पुराणानुसारं प्रजा द्वन्द्वादिभिरातुरा भूत्वा स्वरक्षणाय कृत्रिम-दुर्ग-पुर-नगर-खर्वटादीनां निर्माणाय प्रायतन्त। एवं शीतातपादिबाधां दूरीकर्तुं प्राथमिकी कला प्रथा प्रचलिता। राज्ञः पृथोः प्रसङ्गे पुराणेषूक्तमस्ति यत् पूर्वं पुरग्रामादीनां नियमितो विभागो नासीत्। राज्याभिषेकानन्तरं पृथुना स्वधनुष्कोट्या पर्वतानुत्पाट्यैकत्र ते स्थापिताः, पृथ्वी च समतला कृता। तदनन्तरं कृषेः पुर-ग्रामादीनां निर्माणमारब्धम्।

देवशिल्पिनो विश्वकर्मणो वास्तुकलाविज्ञानं पौराणिके जगति प्रसिद्धमस्ति। अयं शिल्पकलाया विशिष्ट आचार्य शिल्पिषु श्रेष्ठतमः सर्वविधभूषणनिर्माणकुशलो देवविमानादिरचयिता चासीत्। अस्यैव शिल्पकलाया आश्रयेण आधुनिका अपि कर्मकरा यत्नेन स्वजीविकानिर्वाहं कुर्वन्तः समयं यापयन्ति। देवगुरो बृहस्पतेः भगिनी प्रभासस्य

त्वसो भार्या वरस्त्री विश्वकर्माणं जनयामास। वैदिकसाहित्ये वास्तुरूपेण यज्ञवेदी-यज्ञशाला-कुण्ड-मण्डपादिनिर्माणस्योल्लेखो विद्यते। तैत्तिरीय-संहितायां पक्षि-रथ-मानवाकारवेदिकानां कलात्मकं रूपं प्रदत्तमस्ति। गौतमबुद्धनिर्वाणानन्तरं स्तूपभवनविहारदीनां विकासो जातः। वास्तु-प्रकारैः सह कलात्मकस्य मन्दिरादिनिर्माणस्य प्रकारः प्रचलितः, योऽद्य-त्वेऽपि भारते सर्वत्र प्राप्यते। तथाचोक्तं विष्णुपुराणे—

विश्वकर्मा महाभागस्तस्यां यज्ञे प्रजापतिः।
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्द्धकिः॥

भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः।
यः सर्वेषां विमानानि देवतानां चकार ह,
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः॥ १।१५।२०,२१

व्यावहारिकजीवनेन साकं सम्बद्धासु ललितकलासु संस्कृतेः स्वरूपं तत्तद्विशेषताभिः सह पुराणेषूपलभ्यते। पुराणेषु भारतीयकलायै प्राचीनकालत एव संरक्षणं प्राप्तमस्ति, तेषु विभिन्नविषयवल्ललितकला-नामपि समावेशो दृष्टिगोचरी भवति। पुराणवर्णितगृहनिर्माणकलायां तत्कालीनसमाजस्य समृद्धेर्वैभवस्य च परिचयोऽवाप्यते। प्रायः सर्वाणि पुराणानि विशालानां महाट्टालिकानां सुरम्याणां हर्म्याणां समुन्नतानां प्रासादानांचोच्चकलात्मकस्य ज्ञानस्यौत्कृष्ट्यं सूचयन्ति। स्थापत्योपवेदे निर्दिष्ट यन्नगरनिर्माणं, ग्रामनिर्माणं, भवननिर्माण, राजप्रासादनिर्माण देवमन्दिरनिर्माणं, शय्यासनभूषणायुधविकल्पा, विभिन्ना प्रतिमाप्रकल्पा चित्रचित्रणं यन्त्ररचनाचातुरीत्यादि बहुविध लोकोपयोगि कौशलं विजृम्भते, तत्सर्वं पुराणेषु प्रदर्शित वर्तते। गृहनिर्माणकलया सम्बद्धा अनेका विशेषताः तत्तत्पुराणेषु समानरूपाः एवोपलभ्यन्ते। यथा गोपुर वास्तुकलायामियत् प्रसिद्धं जातं यद् राजप्रासादवर्णनप्रसंगे सर्वत्र गोपुरस्योल्लेखो विद्यते। हरिवंशादिपुराणान्तर्गतद्वारवतीनिर्माणप्रयासो भारतीयकलाया महदुत्कृष्टस्वरूपस्य सूचकोऽस्ति। भविष्यपुराणे वास्तु-सम्बन्धिनी सामग्री मत्स्यपुराणवद् विस्तृतरूपेणोपलभ्यते। नारदीय-पुराणे स्थापत्यकलाया विवरणमग्नि-गरुड-मार्कण्डेयपुराणवत् परम्परा-गता प्राप्यते। स्कन्दपुराणे वास्तुशास्त्रस्य विषयः त्रिषु अध्यायेषु वर्तते।

माहेश्वरखण्डे (२।७५) वैष्णवखण्डे (१।२४) वायुपुराणे (११३६) च वास्तुशास्त्रस्य विवेचनं वर्तते। लिङ्गपुराणे (३।४६) तु वास्तुशास्त्रस्य संक्षिप्त विवरणमुपस्थापित विद्यते।

पुराणातिरिक्तेषु आगमग्रन्थेषु बृहत्संहितायाञ्च वास्तुकलाया पर्याप्तः संग्रह उपलभ्यते। कौटिलीयार्थशास्त्रे सहाध्यायद्वारा वास्तुशास्त्र-विवेचन कृतमस्ति। शुक्रनीतिर्वास्तुकलायां प्रचुरा सामग्री प्रस्तौति। ज्यौतिषशास्त्रीयसूर्यसिद्धान्त-सिद्धान्तशिरोमणि लीलावतीषु च वास्तु-शास्त्रस्य महत्त्वपूर्ण सम्यग् विवेचन कृतमस्ति। पुराणेषु द्वारवत्याः निर्माणे स्थापत्यकलाया पराकाष्ठाऽक्षिलक्ष्यी क्रियते। मत्स्यपुराण हरि-वंशादिषु च भगवतः श्रीकृष्णस्य तत्पत्नीना च यानि प्रासादनामानि निर्दिष्टानि तानि स्थापत्यकलादृष्ट्या महत्त्वपूर्णानि सन्ति। यत्र रुक्मिण्याः प्रासादस्य नाम प्रवरो विद्यते, तत्र सत्यभामायाः प्रासादो भोगवतः प्रोक्तः। लक्ष्मणायाः प्रासादस्य नाम सूर्यप्रभः, मित्रवृन्दायाः प्रासाद. परनाम्ना विख्यातो वर्तते। एव द्विजेन्द्रैश्च सह भगवतः श्रीकृष्णस्योपासनानिमित्त निर्मितस्य प्रासादस्य नाम विरजा विद्यते। एवंविधाना विविधाना प्रासादाना मार्गनिर्देशार्थं स्थाने स्थाने सुवेत-सूचक रजतदण्डयुक्ताना पताकाना पङ्क्त्य पथि निर्मिता वर्तन्ते।

संस्कृतवाङ्मये कलाविषयकानि प्रधानानि त्रीणि शास्त्राणि प्रथि-तानि सन्ति—(१) वास्तुशास्त्रम्, (२) शिल्पशास्त्रम् (३) चित्रशास्त्रञ्च तदेव वास्तुशास्त्रं स्थापत्यशास्त्रमिति वा व्यवह्रियते। वात्स्यायनीयकाम-शास्त्रे चतुष्षष्टीकलात्मकानि शिल्पानि कीर्तितानि सन्ति। अग्नि-पुराण-विष्णुपुराणयोः, बौद्धानां ललितविस्तरे, जैनानामुत्तराध्यायसूत्रे, कल्पसूत्रे, लौकिकसंस्कृतग्रन्थेषु, काव्यनाटकादिषु च शिल्पकलायाः प्रचुर प्रसारो दृश्यते। वास्तुशास्त्रस्य प्रसिद्धाना विद्याना मध्ये विद्याद्वये-नास्ति घनिष्ठ सम्बन्धः। ज्योतिषशास्त्रे प्रगाढ वास्तुज्ञान दृश्यते। वदे च ततोऽपि प्रवृद्धतर रूप दृश्यते। शुल्वसूत्रेषु यद् वेदीरचना-विज्ञान पल्लवितं तदेव प्रासादस्थापत्यकलाया जनक निगद्यते।

वास्तुशास्त्रोपदेशानामनुशीलनेन भवनरचनायाम्, नगरनिर्माणे, प्रासादनिर्माणे, प्रतिमास्थापने, आलेख्यकर्माणि, यन्त्ररचनायां वा यद्

वास्तुशास्त्रीयं वैचक्षण्यं कलानैपुण्यञ्च निरूप्यते तद्भारतीयवास्तुकलाया गभीरं ज्ञानं प्रकटयति। पुराणेषु ये वास्तुशास्त्राचार्या वास्तुशास्त्र-प्रवर्तकाः प्रोक्ताः तेषु बहवो वैदिका ऋषयः प्राक्तनाः शास्त्रप्रणेतारः सन्ति। अतोऽस्य शास्त्रस्य प्राचीनत्वे आर्षत्वे च नास्ति सन्देहावसरः। पुराणप्रसिद्धा वास्तुशास्त्रोपदेशका इमेऽष्टादशाचार्या विद्यन्ते—(१) भृगुः (२) अत्रिः (३) वसिष्ठः (४) विश्वकर्मा (५) मयः (६) नारदः (७) नग्नजित् (८) विशालाक्षः (९) पुरन्दरः (१०) ब्रह्मा (११) सनकादि-कुमाराः (१२) नन्दीशः (१३) शौनकः (१४) गर्गः (१५) वासुदेवः (१६) अनिरुद्धः (१७) शुक्रः (१८) बृहस्पतिश्च। तथाहि मत्स्यपुराणे—

भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः॥

ब्रह्मकुमारो नन्दीशः शौनको गर्ग एव च।
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती॥
अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः। २८।१०.५१

प्राकार-गोपुर-तोरण-अट्टालिका-हर्म्य-प्रासाद-गवाक्षादिवास्तु-कलायाः सामान्यं रूपं महाभारतेऽपि प्राप्यते। वनपर्वणि मिथिलाया हर्म्याणि प्राकारविमानयुक्तानि प्रोक्तानि। महाभारतस्य सभापर्वं मयद्वारा राज्ञो युधिष्ठिरस्य सभाभवननिर्माणप्रसंगे वास्तुकलाया विक-सितं रूपं संकेतयति, यत्र दुर्योधनस्य जलमयभूमौ स्थलस्य स्थाने च जलस्य भ्रमः तथा स्फटिकमणिमयभित्तौ द्वारस्य तथा द्वारे च पिहि-तत्वभ्रमः तदानीन्तनायाः उत्कृष्टस्थापत्यकलाया समुन्नतिं सूचयति—

स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया।
स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः॥ =४७।४

ततः स्फाटिकतोयां वै स्फटिकाम्बुजशोभिताम्।
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले॥ =४७।६

द्वारञ्च विवृताकारं स्फाटिकं प्रेक्ष्य भूमिपः।
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः॥ =६१।११

तादृशं च परं द्वारं स्फाटिकोरुकपाटकम्।
विघट्टयन् कराभ्यां तु विनिष्क्रम्याग्रे पपात ह॥ =४७।१२

रामायणस्य वास्तुकला महाभारतादधिका विकसिता दृश्यते। तत्र वास्तुचित्रकलयोः समन्वयो विद्यते। भित्तिचित्रकला रामायणकालीनाया वास्तुकलाया महत्त्वपूर्णो भागोऽस्ति। रामायणे प्रासादानां निर्माणसामग्रीरूपेण काष्ठानामुल्लेखो विद्यते, ज्ञायते तेन यद्रामायणकाले उत्कृष्टभवनानां निर्माणसाधने काष्ठस्यात्यन्तं प्रसार आसीत्। एवं पौराणिकी वास्तुकला भारतीयवास्तुकलाया विशुद्धं रूपं प्रस्तौति। बौद्धजैनयोः स्थापत्यकलातो भिन्ना तथा पाश्चात्यकलानां प्रभावाद् दूरस्था पौराणिकवास्तुकला नितान्तं महत्त्वपूर्णाऽस्ति। वास्तुकलाया अनेकेषु तत्त्वेषु प्रकाशदानात् पुराणानि तत्कालीनवास्तुकलायाः प्रकृष्टं चित्रं प्रस्तुवन्ति, येन चमत्कृतो भवति सकलो लोकः।

राजप्रासादविषयकपौराणिकविवरणेन ज्ञायते यत्तदानीं प्रसादनिर्माणकला अतिशयविकशितसमुन्नतावस्थायामासीत्। बहुमूल्यस्फटिकमणिभिरभ्रशिलाभिश्च निर्मिता प्रासादा अत्यन्त मनोहराः भवन्तिस्म।

> तत्र प्रवृत्ताप्सरसि, स्फाटिकाभ्रमयेऽसुर; ।
> पपौ पानं मुदायुक्तः प्रासादे सुमनोहरे ॥ = १।१७।१६

नागरिकवास्तुकलाऽपि अत्यन्तसमुन्नतावस्थायामासीत्। भगवतः श्रीकृष्णस्याज्ञया विश्वकर्मणा अमरावतीवद् द्वादशयोजनायता उद्यानपरिखा-वापी-सरोवर-प्रासादादिभिः सुशोभिता द्वारकापुरी निर्मिता, यस्या निर्माणमेवविधया कलात्मकपद्धत्या जातमासीद् यत् तद्दुर्गं उपविष्टा. स्त्रियोऽपि सुरक्षितरूपेण युद्धं कर्तुं शक्नुवन्ति।

भारतीयभवननिर्माणे, राजप्रासादविन्यासे च काऽपि विलक्षणा परम्पराऽसीत्, या न केवल शिल्पशास्त्रेष्वेव निबद्धा प्रत्युत रामायण-महाभारत-पुराण-काव्य-नाटकादिषु लौकिकग्रन्थेष्वपि तथैव परिपुष्टा प्रत्यक्षीक्रियते। विशिष्टा राजभवनरचना यत्र साहित्य-सङ्गीतकलानामाश्रयत्वाद् बहूनामुपभवनानां संगीत-नाट्य-वाद्यप्रभृतीनां शालानामपि निवेशः अत्यावश्यको भवति। तत्र सभाभवन-न्यायालयायुधशाला-कोषागार-गजाश्वशालादीनां बहु विजृम्भणं विलोक्यते। राजभवननिवेशे विविधानां यन्त्राणां निर्माणमप्यापतति। राजभवन-

मधिकृत्य भवनोपयोगिनां शयनासने मञ्जूषापञ्जरप्रभृतीनां भवन-सज्जानामपि वर्णनं विद्यते। देवालयनिर्माणं पौराणिकस्य पूर्तधर्मस्य प्रबलः प्रोल्लासः। गृह देवालय-राजप्रासादादीनां निर्माणोपकरणेषु सुधा-मृत्तिका-पाषाण-प्रभृतीनां द्रव्याणां वैज्ञानिक विवेचन पुराणेषु वास्तुशास्त्रीय ग्रन्थेषु च प्राप्यते। गर्भगृहरचनायां प्रतोली-गोपुर-प्राकार-मण्डपादीना निवेशनप्रकारः समीचीनो विद्यते।

मूर्तिविज्ञानप्रतिमाविज्ञानं च शिल्पशास्त्रस्य प्रकृष्ट श्रेय इति कृत्वा नानावर्गीयाणां देवतानामायुधभूषण-वस्त्र-मुद्रादीनां महद्विजृम्भण-मस्ति। ब्राह्म-शैव-शाक्त-सौर-वैष्णव-गाणपत्यादिमूर्तीनां कीदृशी मृण्मयी, कीदृशी च काष्ठजा, कतिधा पाषाणोत्था, कांस्य-लौह-ताम्र रजत-सुवर्णादिधातुजा, मुक्ता-प्रवाल-मणि-माणिक्य पुष्पराजप्रभृति-रत्नजा वा प्रतिमा कीदृशी निर्मेयेति सर्वं शिल्पशास्त्रस्य प्रवृद्धकला विज्ञानवैभवं भारतीयस्थापत्यनैपुण्यं वा सूचयति। प्रतिमानिर्माणे मानं तालमानं विम्बमानमङ्गोपाङ्गमधिकृत्य तेषां निर्द्धारिण तथैव मानधाराः तुलाधाराश्चातीवपारिमाणिकतया प्रतिपादिताःसन्ति। यद्यपि शिल्पशास्त्र-दृष्ट्या मानमेव प्रतिमाविज्ञानेमौलिकं विद्यते तथापि प्रतिमायां रसो-न्मेषोऽपि तावतीमेव महत्तां धारयति। यतो हि प्रतिमाकला काव्य-कलेव रसानुप्राणिता हृदयाकर्षिणी प्रभावोत्पादिका च भवति।

ब्रह्म पद्म-विष्णु-भागवत-मार्कण्डेय-अग्नि-ब्रह्मवैवर्त - गरुड़पुराणानि द्वारकावर्णने तत्कालीनवास्तुकलाया अत्यन्तमौत्कृष्ट्य स्पष्टतया प्रस्तु-वन्ति। ब्रह्मवैवर्ते गोलोकनिवासिनो भगवतः श्रीकृष्णस्य भवनं रत्न-जटितलघुकलश-चित्र-पुत्तलिका-पुष्पकाननैर्युक्तमुक्तमस्ति। मत्स्य-पुराण भारतीयवस्तुकलाया विभिन्नानि अङ्गानि विस्तरतः प्रस्तौति। यत्र विविधप्रकाराणां भवनानां भित्तिषु प्रतिमानिर्माणविधि तथा तदाकारपरिमाणकथनमस्ति। प्रतिमायाः तथा तद्वाह्यभागस्य वर्णन भारतीयवास्तुकलाया अभिनवां सामग्री संयोजयति। विष्णुधर्मोत्तर पुराणे तृतीयखण्डस्य चित्रसूत्रप्रकरणे ३५-४० अध्यायेषु प्रतिमानिर्माण-स्यालौकिकं कौशल व्यनक्ति। हरिवंशेऽपि मूर्तिकलायाः महदौत्कृ-ष्ट्यमालोक्यते। शृगालस्य राज्ञः पराजयानन्तर विजयिनो भगवतः

श्रीकृष्णस्य मथुरागमनप्रसङ्गे देवमूर्तीनां प्रसन्नतायाश्चारु वर्णनं विद्यते। प्रसन्नास्ता मूर्तयो भारतीयतक्षणकलोत्कृष्टतायाः परिचयं ददति।

प्रतिमाया मूर्तेर्वा चित्रं चित्रार्द्धं चित्राभासञ्चेति सन्ति त्रिधाः प्रधाना विकल्पाः। तत्र मृत्काष्ठपाषाणधातुरत्नजासु प्रतिमासु याः सर्वाङ्गपूर्णा प्रतिमास्ताश्चित्रम्, अर्द्धाङ्गाश्चित्रार्द्धम्, पट-पट्ट-कुड्याद्याधारमाश्रित्यविन्यस्ताः प्रतिमाश्चित्राभासमिति जेगीयते। त्रिष्वेतेष्वपि चित्रस्य प्राशस्त्यं तत्तद्ग्रन्थेषु स्पष्टमुद्घोषितं वर्तते— चित्रं हि सर्वशिल्पानां मुखं लोकस्य च प्रियमिति समराङ्गणसूत्रस्योद्घोषः। विष्णुधर्मोत्तरे च –कलानां प्रवरं चित्रं धर्मकर्मार्थमोक्षदम्। अपराजित पृच्छायामपि—चित्रमूलोद्भवं सर्वं त्रैलोक्यं सचराचरम्। वास्तुशास्त्रीय ग्रन्थेषु चित्रशास्त्रप्रतिपादकानामतीव वैरल्यम्। उपपुराणेषु प्रख्याततमस्य विष्णुधर्मोत्तरपुराणस्य चित्रसूत्रं तु सर्वप्रसिद्धमस्ति। वास्तुशास्त्रीयग्रन्थेषु त्रय एव ग्रन्थाश्चित्रशास्त्रं प्रतिपादयन्ति (१) समराङ्गणसूत्रवास्तुशास्त्रम् (२) अपराजितपृच्छा (३) शिल्परत्नञ्च। यत्रहि, चित्रप्रशंसा - चित्रोत्पत्ति - चित्रप्रकार - चित्रोद्देश्य-चित्रविषय-चित्राङ्ग - चित्रकर्म चित्रसाधना-चित्रलेखनविधि-चित्रदोषगुणादीनां निदर्शनं वैज्ञानिकबन्धनिबन्धनेन प्रस्तुतमस्ति।

तत्र पौराणिके युगे हि चित्रकलाऽतीवोन्नतावस्थायामासीत्। बाणासुरस्य मन्त्रिणः कुम्भाण्डस्य पुत्री चित्रलेखा तु अतीव-चित्रकलायां निपुणाऽसीत्, या बाणासुरपुत्र्या उषायाः प्रियकरी सहचरी आसीत्। एकदा उषा स्वप्ने सम्भोगकर्तुः कस्यचिदज्ञातस्य प्रियतमस्य चिन्तया व्याकुला बभूव चित्रलेखया तद्रहस्यं ज्ञात्वा तच्चिन्तां दूरीकर्तुं चित्र फलके अनेकेषां देव-दैत्य-सिद्ध चारण-यक्ष-विद्याधर-किन्नर-गन्धर्व-दानव-मानवानां चित्राणि लिखित्वा तामदर्शयत्, किन्तु तत्र न कश्चित् स्वप्ने सम्भोगकर्ता प्रियतमस्तया दृष्टः। अन्ते चित्रलेखया श्रीकृष्ण-प्रद्युम्नयोश्चित्रलेखनानन्तरं प्रद्युम्नतनयस्यानिरुद्धस्य यदा चित्रमङ्कितं तदासीदुषा तं वीक्ष्य आनन्दनिमग्ना सती स्मयमाना लज्जयाऽवाङ्मुखी भूत्वाऽयमेव, एष एवास्तीत्युवाच, यतः स एव स्वप्ने सम्भोगकर्ता उषाया. प्रियतमः प्रद्युम्नपुत्रो भगवतः श्रीकृष्णस्य च पौत्रोऽनिरुद्ध आसीत्। तथाहि श्रीमद्भागवते—

इत्युक्त्वा देव-गन्धर्व-सिद्ध-चारण-पन्नगान् ।
दैत्य-विद्याधरान् यक्षान् मनुजांश्च तथाऽलिखत् ॥ = १०।६२।१६
अनिरुद्धं विलिखितं वीक्ष्योपाऽवाङ्मुखी ह्रिया ॥
सोऽसावसाविति प्राह स्मयमाना महीपते ॥ १०।६२।२१

## संगीतकला

सगीतकलाया महिम्नो वर्णने योगिराजस्य राज्ञो भर्तृहरेः कथनमस्ति यद् यो संगीतकलानभिज्ञोऽस्ति स निःसन्देहं पशुरस्ति । तत्रान्तरं केवलमिदमेव वर्तते यत् स पुच्छ-शृंग विहीनोऽस्ति—सङ्गीतसाहित्यकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः ।

संगीतविज्ञानस्य (गान्धर्वविद्यायाः) अष्टादशविद्यासु मान्यता वर्तते संगीतविद्याया आद्यावाचार्यौ सूतमागधौ स्तः, तौ च महाराजस्य पृथोः पैतामहयज्ञानुष्ठानसमये सोमाभिषवदिने यज्ञवेदीत उत्पन्नौ । मुनीश्वराणामादेशेन पृथो. कर्मणा सुस्वर स्तवन चक्रतुः । पुराणेषु द्वादश गन्धर्वा उल्लिखिताः सन्ति-हाहा--हूहू–तुम्बुरु नारद-विश्वावसु-उग्रसेन वसुरुचि-चित्रसेन-उर्णायु-धृतराष्ट्र-सूर्यवर्चस ।

गन्धर्वाणां सगीतेन सह घनिष्ठतमः सम्बन्धोऽस्ति । संगीतविद्या ऋग्वेदकाले उन्नातावस्थायामासीत् । पूर्वं यज्ञानुष्ठानसमये संगीतस्य प्रयोगो भवतिस्म । सोमलताप्रयोगे मन्त्रगानस्य प्रथा प्रचलितासीत् । पुराणेषु ब्रह्मलोके व्यवह्रियमाणायाः संगीतकलाया उत्कृष्टताप्रतिपादने संगीतनिष्णातयोः हाहा-हूहूनामकयोर्गन्धर्वयोरुल्लेखो विद्यते । एकदा ब्रह्मलोके तयोर्द्वयो विलक्षणं गानं गायतोः गानमुग्धेन राज्ञा रैवतेनात्मविस्मृत्या युगान्तर मुहूर्तमात्र प्रतीतम् ।

जातक ग्रन्थेषु सगीतकला गान्धर्ववेदनाम्ना अभिहिताऽस्ति । संगीते वाद्यानामपि प्रयोगो भवतिस्म । पौराणिकेषु वाद्येषु वीणा-वेणु-मृदङ्ग-तूर्य-भेरी-पटह शख-काहल-गोमुखानां नामोल्लेखोऽस्ति ।

## नृत्यकला

पौरिणकसाहित्ये नृत्यकलाऽपि सगीतस्यैक प्रमुखमङ्ग मन्यते । नृत्येन सह संगीतस्य, सगीतेन वा साकं नृत्यस्य सहयोगोमहानुपकारी मतोऽस्ति ।

स्वर्गेऽप्सरसां नृत्यमतिशयं प्रशस्तमभिमतं विद्यते। देवैः सहापि अप्सरसां नृत्यस्य प्रसंगः प्राप्यते। लीलापुरुषोत्तमो हि भगवान् श्रीकृष्णो नृत्यंकलायाः सफल आचार्य आसीत्। तेन कालीयनागस्य फणास्वत्यद्भुतं नृत्यं कृतम् नर्तनसमये कृष्णचरणाघातेन नागस्य प्राणा मुखे समागच्छन्तिस्म। स य मस्तकमुन्नमयतिस्म तत्रैव कूर्दयित्वा श्रीकृष्णो नमयतिस्म। भगवतः श्री कृष्णस्य नृत्यसम्बन्धीभि गतिभिः ताडितः स महासर्पो मूर्च्छितो जातः। व्रजस्य गोपीभि. सह रासक्रीडायां सम्पन्नं श्रीकृष्णस्य संगीतमय नृत्यमत्यन्तं भावोत्पादकमासीत्। तदा शरच्चन्द्रधवलिमा धरामधवलयत्। गोपीनां चञ्चलकणत्कारेण कङ्कणमुखरमञ्जीरध्वनिना च साकं शरत्सम्बन्धिगीतमारब्धम्। रासेश्वरो भगवान् श्रीकृष्ण चन्द्रचन्द्रिका-कुमुदविषयकगानमगायत्, गोपिकाश्च श्रीकृष्णगीत प्रशंसन्त्यः केवल श्रीकृष्णनामैव गायन्तिस्म। श्रीकृष्णो यावतोच्चस्वरेण मधुरं गीतं गायतिस्म ततो द्विगुणितैः शब्दैः गोपिका अपि धन्य, कृष्ण, धन्य कृष्ण इति ध्वनिं समुच्चारन्त्यो गीत गायन्ति स्म।

> रासगेयं जगौ कृष्णो यावत्तारस्वरध्वनि।
> साधु कृष्णेति कृष्णेति तावता द्विगुणं जगुः॥ = वि० पु० ५।१३।१५

एवं तस्मिन् रासरङ्गे गोपिकाभिः सहाद्भुतेन नृत्यगानेन कालस्य चन्द्रमसश्च गीतरवरुद्धा, विमानस्थाः सिद्ध-देव-गन्धर्व-किन्नराप्सरसश्चकिता अभूवन्। हिरण्यकशिपोः स्फटिकनिर्मिते प्रासादेऽप्सरसां नृत्यस्य प्रसगोऽप्युलभ्यते। ऋग्वेदेऽपि कुमारी-युवती-कन्यानां नृत्यस्य प्रसगो वर्तते। स्त्रीणामतिरिक्ताः पुरुषा अपि समये समये नृत्यन्तिस्म। शतपथब्राह्मणे नृत्य सगीतक्रियासु व्यस्तानामप्सरसामुल्लेख उपलभ्यते। बौद्धकाले नृत्यकला तिरस्कारदृष्ट्या दृश्यतेस्म। पाणिनि सूत्रे शिलालिन-कृशाश्व-नामकयोः नर्तकयोरुल्लेखो विद्यते। अर्थशास्त्रे च नर्तकीकन्यानां जीवनकर्तव्यानां वर्णनमस्ति। एव वेदकालत प्रारब्धा नृत्यकला काल क्रमेणैकस्य विशिष्टवर्गस्य व्यवसायरूपेण परिणता।

पुराणानुसारं पाताललोके यस्य शिल्पकलाप्रवीणस्य मयनामकस्यासुरस्य स्थितिनिर्दिष्टाऽस्ति। स महदद्भुतानामट्टालिकाना प्रासादानाञ्च निर्मातासीत्। एतेनैव धर्मराजस्य युधिष्ठिरस्य राजसभाया निर्माण

कृतमासीद् यत्र दुर्योधनस्य जले स्थलस्य स्थले च जलस्य द्वारे भित्तेः भित्तौ च द्वारस्य भ्रमोऽजायत। अद्यापि मध्यामेरिकाया मैक्सिकोनामधेयस्य मुख्यप्रदेशस्य प्राचीनासंस्कृतिः मयसंस्कृतिनाम्ना प्रसिद्धाऽस्ति। तत्रत्यानां समृद्धशिल्पकलासम्पन्नानामट्टालिकानां दर्शनेनाधुनिकाः कलाकाराः आश्चर्यचकिता भवन्ति। तत्रत्याया विस्मयकारिण्या कलायाः तथाऽसंख्यधनराशेश्चावलोकनेन बहवो विचारपरायणा विद्वांसः अमेरिका प्रदेशं पाताललोकं वक्तुमुद्यताः सन्ति।

## निष्कर्ष :

एवं पुराणेषु सर्वासां कलानां न्यूनाधिकमात्रायां प्रतिपादनं जातमस्ति, किन्तु मुख्यतया वास्तुकला-संगीतकला-वाद्यकला-नृत्यकलानां बाहुल्येन निदर्शनं विद्यते। चित्रकलायां विवेचनं यद्यपि संक्षिप्तं वर्तते तथापि तत्रैकान्तसूक्ष्मताया अनुभूतिर्भवति। एवं कलासम्बन्धिषु विषयेषु वास्तुकला, सङ्गीतकला, नृत्यकला च पौराणिके युगे उन्नतेश्चरमं शिखरमारूढा आसन्नित्यत्र न काचिदस्ति केषाञ्चिदपि विप्रतिपत्तिः। अतः कलाध्ययनदृष्ट्यापि पुराणानामनुशीलनं नितान्तमवश्यकर्मास्ति।

## पौराणिकदर्शनसमीक्षा

आध्यात्मिके जगति दर्शनशास्त्रस्योपयोगिता सर्वतोऽधिकाऽभिमता वर्तते। निखिललोककल्याणकारिण्या भारतीयसंस्कृतेर्विकासस्य मूलं कारणं भारतीयं दर्शनमेवास्ति। प्रथमं वेदानां प्रणववादो भारतीयजीवनस्याधार आसीत्। कालान्तरे उपनिषदां ब्रह्मवादो विचारधारायाः केन्द्रबिन्दुःसञ्जातो येनाध्यात्मिक विचारेण साकं दर्शनं सम्बद्धम्। पश्चात् पुराणानां परमेश्वरवादः प्राणिनां परमाधारो जातो यत्रावताराणामास्तिकानां भक्तेश्च विजृम्भणं जातम्।

भारतीयं दर्शनं हि यमनियमादिभिर्निर्मलमानसैः तपःपूतैर्भारतीयमनीषिभिरनुभूतस्य सत्यस्य परिचायकं साहित्यमस्ति। अतः परमसत्यस्य प्रमात्मकानुभवविचारो दर्शनं प्रोच्यते। तीव्रेण तपसा विशुद्धान्तःकरणैः महर्षिभिः सततं स्वाध्यायबलेन प्राप्तया ऋतम्भर-

प्रज्ञया अध्यात्मतत्त्वस्यानुशीलनं विधाय न केवलं प्रकृते रहस्योद्घाटनं कृतं प्रत्युत स्वकीयं जीवनं निरन्तरं तत्त्वचिन्तया पूर्णताकोटावानीतम् ।

पाश्चात्यदर्शनस्य कश्चन निश्चितो मार्गो नास्ति, लक्ष्यहीनपर्यटकनाविका इव ते कस्मिंश्चित्तत्त्वचिन्तने प्रवर्तन्ते, परं भारतीयदर्शनकारा दुःखत्रयादुद्विग्नाः सन्तः तदुच्छेदभावनया किञ्चित् साध्यं निश्चित्यैव तदासादयितुं स्वीयसूक्ष्मया विवेचनपद्धत्या साधनमार्गस्य व्याख्यायां प्रवर्तन्ते ।

आत्मसाक्षात्कारः किल समेषां भारतीयदर्शनानां मुख्यं लक्ष्यं विद्यते। अतो भारतीयदर्शनस्य दृष्टिः पाश्चात्यदर्शनापेक्षया सुव्यवस्थिता व्यावहारिकी सर्वाङ्गीणा च भवति। विदेशेषु दर्शनशास्त्रं तत्रत्यानां विचारकाणां मनोविनोदस्यैकं साधनं विद्यते, किन्तु भारते दर्शनशास्त्रस्य, जीवनेनास्ति घनिष्ठतमः सम्बन्धः यतो हि क्लेशबहुलेऽस्मिन् संसारे विविधदुःखदावानलः सन्तप्तेभ्यः प्राणिभ्यः शान्तिप्रदानाय भारतीयदर्शनानि सन्ति प्रादुर्भूतानि। भारते चार्वाकदर्शनातिरिक्तानि सर्वाणि दर्शनानि मोक्षं जीवनस्यान्तिमं मुख्य लक्ष्यं मन्यन्ते, तदर्थं च प्रयतन्ते निरन्तरं साधकवर्याः। आहारे व्यवहारे भयनिद्रादौ च पशुभिः समानतायामपि विवेकप्रधानाः प्राणिनः कार्यावसरे स्वीयविचारशक्तेः सदुपयोग कुर्वन्ति ।

तत्त्वतो ब्रह्मसाक्षात्कारवतः पुंसः कर्माणि न पुनर्जन्मने प्रभवन्ति, नापि दैवात् पापकर्माणि प्रवृत्तौ पापसंश्लेषो जायते, पूर्वार्जितयोः पुण्यपापयोः ब्रह्मज्ञानेन संक्षयात्, किन्तु ब्रह्मसाक्षात्कारशून्यो नरो निरन्तरं जन्ममरणचक्रे च इक्रामन्त्येव। तथाचाह भगवान् मनुः—

> सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबद्ध्यते ।
> दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥—म० स्मृ० ६।७४

अर्थात् सम्यग्दर्शने जाते कर्माणि न मनुष्यान् बध्नन्ति। येन सम्यग्दृष्टिर्नासादिता त एव संसारजालेन निगडिता भूयो भूयो दुःखान्यनुभवन्ति। अतएव दर्शनस्य परिभाषा कृताऽस्ति यत्—

> यदाम्युदयिकं चैव नैश्रेयसिकमेव च ।
> सुखं साधयितुं मार्गं दर्शयेत्तद्धि दर्शनम् ॥

एवञ्च यत् शास्त्रमैहिक-पारलौकिकसुखानां साधनमार्गं प्रदर्शयति तद्दर्शनं प्रोच्यते। अतएव च दृश्यते, ज्ञायते वस्तु याथात्म्यं येन तद्दर्शन-मितिव्युत्पत्तिः संगच्छते। अतो दर्शनशास्त्रं मानवीयजीवनस्य कृतेऽत्यन्तमुपादेयमुपकारि सर्वाभ्यर्हितं च शास्त्रमस्ति।

प्रेक्षणार्थकदृशधातोः करणे ल्युट्प्रत्ययप्रयोगेन दर्शनशब्दस्य भवति निष्पत्तिः। अतो दर्शनस्य शाब्दिकोऽर्थो भवति यद् यद्द्वारा दृश्यते। ततः प्रश्नः उपतिष्ठते यत् किं दर्शनीयं तत्त्वं विद्यते? यस्मिन् दृष्टे सति मानवः कृतकृत्यो भवितुमर्हेत्? अस्यां परिस्थितौ उपनिषदः सङ्केतो वर्तते यदात्मा एव दर्शनीयः श्रवणीयो मननीयो ध्येयश्चास्ति। आत्मतत्त्वस्य दर्शनेन श्रवणेन मननेन विज्ञानेन सर्वं विदितं भवति। एवमात्म जीव-जगतां रहस्यमयसमस्यासमाधानाय दर्शनशास्त्रस्यास्ति परमोपयोगिता। अतो युक्तिपूर्वकं यथार्थज्ञानप्राप्तिव्यापार एव दर्शनं सिद्ध्यति। एवञ्च दृश्यते यथार्थतया ज्ञायते बोध्यतेऽनेनात्मा अनधिगतविषयः पदार्थो वेति करणल्युटा आत्मसाक्षात्कारकं शास्त्रं दर्शनपदाभिधेयतामर्हति।

हितं परमं प्रयोजनं मोक्षं शास्ति-उपदिशतीति व्युत्पत्त्या हितानुशासनादेतस्य शास्त्रत्वं प्रसिद्धम्। हितत्वञ्च परमपुरुषार्थो मोक्ष एव, अन्येषामनित्यत्वात्, क्षयित्वाच्च। तत्र मोक्षसाधनमात्मतत्त्वसाक्षात्कार इतिवेदान्तिनो ब्रुवते, प्रमाण-प्रमेयादिपदार्थविज्ञानान्निःश्रेयसाधिगम इति नैयायिकाः, व्यक्ताव्यक्तज्ञविवेकज्ञानं मुक्तिसाधनमिति सांख्याः ईश्वरप्रणिधानपुरःसरं च अष्टाङ्गयोगसाधनं कैवल्य जनकमिति योगिकाः, यज्ञादिकर्मद्वारा मन्त्रस्वरूपात्मकदेवतोपासनमपवर्गसाधकमिति मीमांसकाः प्रणिगदन्ति यथा-तस्मादेतस्माद्वा आत्मन. आकाशः सम्भूतइति श्रुत्या वेदान्तिनो मायासंवलितस्य ब्रह्मणः प्रथममाकाशस्योत्पत्तिमङ्गीकृत्य तस्मात् सर्वः प्रपञ्चो जायते इति स्वीकुर्वन्ति तथैव पौराणिका अपि मायाया माध्यमेन जगत ईश्वरकर्तृत्वं मन्यन्ते।

भारतीयेषु विचारकेषु एका आध्यात्मिकी प्रवृत्तिरेवैतादृशी वर्तते यया ते न भवन्ति कदापि निराशा, प्रत्युत तेषु दर्शनानां सम्यगनुशील-

नेनोत्तरोत्तरमाशायाः सञ्चारो बोभूयते एव। दार्शनिकविचारधारायां वेदवाङ्मयस्य सर्वाधिक प्रभावो लक्ष्यते। वेदप्रामाण्याभ्युपगन्तृपु षट्सु आस्तिकदर्शनेपु वेदान्तदर्शनं मीमांसादर्शनं च वैदिकविचारधारातः साक्षात् सम्बद्धे स्तः, पर सांख्य योग न्याय वैशेपिकदर्शनाना मुख्यतया लौकिकविचारकाणामनुभवेनास्ति सम्बन्ध। एवं सत्यपि एपा सिद्धान्तैर्न वैदिकसिद्धान्ताना कश्चन पारस्परिको विरोधोऽस्ति। विरोधस्तु केवलं चार्वाक्-बौद्ध-जैनदर्शनै सह वर्तते, यतो हि एतानि त्रीण्यपि दर्शनानि न वेदप्रामाण्यमभ्युपगच्छन्ति, न वा तानि ईश्वरं स्वीकुर्वन्ति, न च परलोके विश्वसन्ति। अतस्तेजस्तिमिरयोरिवास्तिकदर्शनें साक तेषां वैमत्यमस्ति स्वाभाविकम्।

## विभिन्नदर्शननिर्माणप्रवृत्तिः

वेदेपु लोककल्याणाय बहवो विषया वर्णिता विद्यन्ते। तेपु यस्य यो विषयोऽभिप्रेतः स तमेवाभिप्रेतं विषयमुद्दिश्य तत्र प्रवर्तते तत्सिद्धौ च स्वबुद्धेः सम्यगुपयोग च प्रकुरुते। यथा—

महर्षिर्व्यासो ब्रह्मज्ञानम्, जैमिनिमुनिर्यागम्, भगवान् पतञ्जलि-र्योगम्, महामुनि कपिलः तत्त्वज्ञानम्, कणाद-गौतमौ पदार्थवादम्, देव-र्षिर्नारदो भक्तिम्, महाराजो मनुश्च धर्ममादाय प्रववृते, यतो हीमे सर्वे विषयाः सन्ति साक्षात् परम्परया वा मोक्षस्य साधकाः। अत एभिर्विभि-न्नैराचार्यै भिन्न भिन्न विषयमादाय तत्तद्दर्शनानि निर्मितानि। एवं मुनिपुङ्गवाना गौतम-कणाद-कपिल-पतञ्जलि-व्यास जैमिनीना क्रमशः न्याय-वैशेपिक-सांख्य-योग-वेदान्त-मीमांसा नामधेयानि आस्तिकदर्शनानि-परमप्रसिद्धानि सन्ति सुधिया समाजे—

> गौतमस्य कणादस्य कपिलस्य पतञ्जलेः।
> व्यासस्य जैमिनेश्चापि षडेव दर्शनानि च॥

एपु दर्शनशास्त्रेपु, मुख्यतया मोक्षस्वरूपम्, मोक्षोपायः, आत्म-स्वरूपनिरूपणम्, आत्मातिरिक्तस्य समस्तस्य विश्वस्य स्वरूपं तत्साध-कानि प्रमाणानि चेत्याद्याध्यात्मविषय तत्प्रसङ्गे लौकिक विषयोऽपि युक्ति-प्रमाणाभ्यां सह विस्तरतश्चर्चितो विद्यते।

आत्ममननविषये त्रिधा अधिकारिणोऽभिमताः सन्ति-उत्तमो मध्यमः साधारणश्च। तत्र साधारणेभ्योऽधिकारिभ्यो न्याय-वैशेषिकदर्शने उपयोगिनी स्तः, मध्यमेभ्योऽधिकारिभ्यः सांख्ययोगौ उपादेयौ विद्येते, उत्तमेभ्यश्चाधिकारिभ्यो वेदान्तदर्शनं मीमांसादर्शनञ्चाभ्यर्हिते वर्त्तेते। भक्तिदर्शनं तु सर्वेषांप्राणिनामुपयोगि प्रियकरञ्च दर्शनं विद्यते।

## दर्शनसंसारे वेदान्तदर्शनस्य स्थानम्—

भारतीयदर्शनेषु वेदान्तदर्शनस्यास्ति प्रमुख स्थानम्। तत्त्वजिज्ञासवो मनीषिणो वेदान्तदर्शनविचारपद्धत्यैव प्रायः आत्मतत्त्व निश्चिन्वन्ति। पुराणेषु दार्शनिकविचारणां याः पृष्टभूमय उपलभ्यन्ते, तत्र वेदान्त-दर्शनस्यास्ति महत्त्वपूर्णं स्थानम्। श्रीमद्भागवतस्यैकादशस्कन्धे श्रीकृष्णोद्धवसम्वादे, अवधूतगीतायाम्, देवस्तुति-अक्रूरस्तुति-ब्रह्मस्तुति-वेदस्तुतिप्रभृतिषु स्तुतिषु च वेदान्तदर्शनस्य विचाराणां प्राञ्जलया भाषया मनोरमया सरण्या चोल्लेखो विद्यते। देवीभागवते खलु अज्ञान-निवृत्तिपूर्वकं ज्ञान सम्पादयितु जीवब्रह्मणोरैक्यबोधकस्य तत्त्वमस्यादि-वाक्यस्य चिन्तनार्थं नित्यं वेदान्तश्रवणस्यानिवार्यतया विधानं कृतमस्ति—

> वेदान्तश्रवणं कुर्यान्नित्यमेवमतन्द्रित.।
> तत्त्वमस्यादिवाक्यस्य नित्यमर्थं विचिन्तयेत्। =७।३४।१८

गरुडपुराणस्य पूर्वार्द्धे च योगाङ्गनिरूपणप्रसङ्गे समाधिनिर्वचन-पूर्वक महावाक्येभ्यो ब्रह्मज्ञानान्मोक्षप्राप्तिः प्रोक्ताऽस्ति—

> अहं ब्रह्मेत्यवस्थानं समाधिरभिधीयते।
> अहं ब्रह्मास्मिवाक्याच्च ज्ञानान्मोक्षो भवेन्नृणाम्॥ = २२६।२८

श्रीमद्भागवतस्य पुराणदशलक्षणेऽन्तिममाश्रयतत्त्व शरणागत-वत्सलो भगवान् श्रीकृष्ण एवाभिमतो वर्तते, यस्य प्राप्तये प्रमन्तत्त्व-भान्येषां तत्त्वानामपि वैशद्येन वर्णनमस्ति। अपि च श्रीमद्भागवतस्य प्रवचनं समापयता भगवाता श्रीशुकदेवेन यदा ब्रह्मस्वरूपे स्थातु राजा

परीक्षिदाज्ञतस्तदा स आत्मनि आत्मानं समाधाय परं ब्रह्म ध्यायन् छिन्नसंशयः सन् ब्रह्मीभूतोऽभवत्—

> अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्।
> एवं समीक्षन्नात्मनमात्मन्याधाय निष्कले॥
>
> दशन्तं तक्षकं पादे लेलिहानं विषाननैः।
> न द्रक्ष्यसि शरीरं स्वं विश्वं च पृथगात्मनः॥ = १२।५।१२.१२
>
> परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना।
> समाधाय परं दध्यावस्पन्दासु यथा तरु.॥ = १२।६।६

महर्षिणा व्यासेन तु स्पष्टैः शब्दैरभिहितं यत् सकलवेदान्तानां साररूपस्य श्रीमद्भागवतस्य कथारसामृतपानेनाप्यायितानां प्राणिनां क्वचनान्यत्रानुराग एव न सम्भवति—

> सर्ववेदान्तसारं हि श्रीमद्भागवतमिष्यते।
> तद्रसामृततृप्तस्य नान्यत्र स्यात् क्वचिद्रतिः॥ = १२।१३।१५

एवं प्रत्येकस्य जीवस्याध्यात्मिकसमुन्नतिसाधने पुराणानामस्ति विशिष्टं वैशिष्ट्यम्। नित्यप्रवासी ज्ञानपिपासुश्च जीवोऽयं परमानन्दं गवेषमाणो भवाटव्यामस्यां तद्विपरीते तदाभासे विषयसुखे एव सलग्नो निरन्तर मायामुग्धो भूत्वाऽज्ञानमृगमरीचिकायां बम्भ्रम्यमाणो जीवनं यापयति। तस्य ज्ञानभ्रान्तस्य प्रेमपथिकस्य च जीवस्य कृते पुराणं साधु पथप्रदर्शनं कुरुते। पुराणं हि संसारसागरस्य विपत्तरङ्गेषु प्रवहन्त्यै जीवननौकायै ध्रुवताराऽस्ति। पुराणाश्रयेण बहवो हि जीवा संसारसागरं समुत्तीर्य ब्रह्मपदं प्राप्य मुक्ता अभूवन्।

यदि सुगमानि पुराणानि न स्युस्तर्हि कठिनकण्टकाकीर्णस्य वेदस्य दुर्गमे मार्गे चलितुं कः प्रभवेत्? वेदस्य गूढतमा भाषा वास्तविको भावो रहस्य च यदि पुराणेषु भावग्राह्यया सरलभाषया न स्फुटीभवेयुस्तर्हि जीवो वेदस्य परमेण पवित्रेण ज्योतिषा वञ्चितः सन् संसारान्धकूपे निमग्नो भवेत्। दर्शनशास्त्रं हि समस्तानां तत्त्वानां साक्षात्काराय दिव्यं नेत्रं विद्यते। किन्त्वेतादृशं दिव्यं नेत्रं न सर्वैरवाप्तुं शक्यते, यतो हि दर्शनाधिकारिणोऽल्पीयांस एव भवन्ति। अयं केवलं पुराणानामेव

महिमा वर्तते। यत्र कठिनात् कठिनतरं तत्त्व सरलायां भाषायां सुव्यक्त सत् सामान्याधिकारिणां कृतेऽपि आध्यात्मिक्याः समुन्नतेः कारण जायते। पुराणानि हि ज्ञानकर्मोपासनातत्त्वानां निर्णयपूर्वकं कर्मभोगस्य त्यागं ज्ञानस्य गभीरतां भक्तेश्च मधुरिमानं व्यञ्जयन्ति। विश्वस्मिन् त्रिधा भवन्ति अधिकारिणः-सात्त्विका राजसा तामसाश्च। तत्र रजस्तमःप्रकृतिका जीवा भवन्ति कर्मणोऽधिकारिणः, रज सत्त्वप्रकृतिका उपासनाधिकारिण., सात्त्विकप्रकृतेर्जीवा सन्ति ज्ञानस्याधिकारिणः। एषां त्रिविधानामधिकारिणां कल्याणाय पुराणैः स्वं विशालं कलेवरं त्रिपु भागेपु विभक्तम्-कर्मिणां कृते कर्मप्रधानभागः, उपासकानां कृते उपासनाप्रधानभागः, ज्ञानिनाञ्च कृते ज्ञानप्रधानभाग.। प्रत्येकपुराणे सर्वप्रकाराणामधिकारिणां कृते कल्याणप्रदस्य विषयस्य विद्यमानत्वेऽपि पुराणानि मुख्यतया त्रिपु भागेपु विभक्तानि सन्ति। कर्मप्रधान पुराण महाभारतादि, उपासनाप्रधानं पुराणं श्रीमद्भागवतादि, तथा ज्ञानप्रधान पुराणं योगवासिष्ठमात्मपुराणञ्च।

तत्र महाभारतस्य कर्मक्षेत्रमतिविशालमस्ति। यस्मिन् महाभारतकर्मयज्ञे देवता, साक्षाद् यज्ञेश्वरो नारायणः, होता देवर्षिगणः पितृगणश्च, आहुतिः वीरपुरुषाणा १८ अक्षौहिणी सेना, फलं भूभारहरणपूर्वकमधर्मस्य समूलोन्मूलनं धर्मस्य च संस्थापनं। यत्र वीरतोदारता-धर्मप्रियता-स्वार्थतत्परता-लोकशिक्षाज्ञानादीनां पूर्णताऽस्ति। तत्र चान्धेन दिव्यदृष्टिरवाप्ता, पङ्गुना हिमगिरिर्लङ्घितः, स्वयं भगवान् श्रीकृष्णो भक्तरक्षायै स्वां प्रतिज्ञा परित्यज्य तत्प्रतिज्ञां पूरितवान्। एव कर्मप्रधानमहाभारतद्वारा पुराणैःविश्वस्य महत्तम कल्याणं कृतम्।

एवमुपासनाप्रधाने श्रीमद्भागवतादौ भक्तेरपूर्वलीलादर्शन भगवतः श्रीकृष्णस्य गुणगाथानुकीर्तन च प्रत्येक जीव पवित्रयति। अजो निर्गुणो निराकारोऽपीश्वरो, यस्य श्रीमद्भागवतस्य महिमान वर्द्धयितु सगुणं रूपं धृत्वा ससारे भक्तेः स्रोतः प्रवाहितवान्। यत् सेवित्वा भावुका भक्ता भावसमुद्रेऽवगाहन कुर्वन्ति। तस्योपासनाप्रधानस्य श्रीमद्भागवतादेः सम्बन्धे यावद् वक्तव्यं तावदल्पीय एवास्ति।

ज्ञानप्रधानयोगवासिष्ठद्वाराऽतिगहनो ज्ञानविषयो मधुरया गाथया चित्ते प्रवेश्य विशुद्धज्ञानज्योतिषा अज्ञानान्धकारं दूरीकृत्य ज्ञानालोक

विस्तारयति। यस्य योगवासिष्ठस्य वक्ता ज्ञानप्रधानो ब्रह्मपुत्रो महर्षिर्वसिष्ठो विद्यते, श्रोता च नररूपेण साक्षान्नारायणः श्रीरामोऽस्ति। श्रवण-मनन-निदिध्यासन-फलस्वरूपेण भगवता रामेण परमा शान्तिरवाप्ता। तस्य ज्ञानप्रधानपुराणस्य योगवासिष्ठस्यात्मपुराणस्य च विषये किमस्ति वक्तव्यम्। एवं च त्रिविधानामधिकारिणां कृते त्रिविधानि पुराणानि सन्ति, सततं जागरूकानि। तेषु स्थले स्थले प्रसङ्गवशाद् दर्शनशास्त्रीयाः सिद्धान्ता दृष्टान्तोदाहरणद्वारा प्रदर्शिताः सन्ति। यद्यपि पुराणेषु दर्शनतत्त्वानि दर्शनग्रन्थेषु च भक्तिमहिमोपलभ्यते प्रसङ्गात् किञ्चित् तथापि पुराणेषु दर्शनतत्त्वानि न दर्शनग्रन्थवद्विशदानि वर्णितानि, नवा दर्शनग्रन्थेषु भक्तेर्भूयस्यमुक्तमस्ति, किन्तूभयत्र प्रसङ्गवशादेवोभयोश्चर्चा समागता वर्तते।

अद्वैतवेदान्ते भक्तिवशान्मायावृत्यवच्छिन्नस्य चैतन्यस्यानुकूल्यं दयापरत्वं वापेक्षितमस्ति। सांख्यतत्त्वकौमुद्यां श्रीवाचस्पतिमिश्रः कपिलावतारत्वं स्वीकरोत्येव। सांख्यदर्शनं तु केवलं प्रकृतेरीश्वरपारतन्त्र्यं वारयति, निरीश्वरसांख्यमते ईश्वराभावात्तदुपासनारूपा भक्तिरेव न सम्भवति। मीमांसका अपि पुराणप्रतिपादितानवतारान् मन्यन्ते भजन्ते च, केवलं सृष्टिसंहारकार्यं प्रति परमेश्वरकारणत्वमेव द्विषन्ति ते।

वैष्णवपुराणेषु भगवतो विष्णोर्व्यक्तित्वं सांख्य योग-वेदान्तानां दार्शनिकविचारधाराया आवरणेऽतिव्यापकं जातमस्ति। गीताया भगवतः श्रीकृष्णस्य ज्ञानयोगो वेदान्तमयस्य वैष्णवधर्मस्य विकसितं रूपं सूचयति। तत्र ज्ञानयोगद्वारा सांख्यनिष्ठायाः कर्मयोगद्वारा च योगनिष्ठायाः वर्णनं विद्यते। ब्रह्म च धर्मस्योत्पत्तिस्थलं यज्ञप्रतिष्ठितं सदसद्योनेश्च कारणमुक्तमस्ति। गीताया आधारेण सांख्ययोगाभ्यां मिश्रितस्य वैष्णवधर्मस्य प्राचीनता सिद्ध्यति। विष्णुपुराणे सांख्य-योग-वेदान्तानां दार्शनिकैर्विचारैर्मिश्रितं भगवतो विष्णोर्व्यक्तित्वं हरिवंशीयाद्विष्णोरधिकं व्यापकं वर्तते। हरिवंशवदत्रापि विष्णुः सांख्यपुरुषोऽभिमतोऽस्ति तथा तत एव चतुर्विंशतितत्त्वानि समुद्गतानि भगवान् विष्णुः समस्तासु पराशक्तिषु प्रधानः क्षराक्षरमयश्च प्रोक्तोऽस्ति विष्णुपुराणं भगवद्भक्तिविकासमार्गं हरिवंशादग्रे वर्तते। विष्णुभक्त्या साकं सांख्ययोगयोः विकसितं रूपं

श्रीमद्भागवतस्य कपिलदेवहूतिसंवादेऽप्युपलभ्यते। श्रीमद्भागवतस्यान्तिमस्कन्धद्वयं वैष्णवधर्मान्तर्गतयोः सांख्ययोगयोः विवेचनं कुरुते।

गीतायां ज्ञानयोग-कर्मयोगाख्ये द्वे एव निष्ठे उक्ते स्तः तथा ज्ञानयज्ञो द्रव्ययज्ञात् श्रेष्ठतरः प्रोक्तोऽस्ति। एवं गीतायां यत्र-तत्र विभिन्नादर्शानां च चर्चा विद्यते। तत्र तत्रानन्यभक्तियोगद्वारा परमेश्वराराधको गुणातीतो भूत्वा ब्रह्मणा सहैकाकारो भवतीत्युक्तम्। एवं विष्णुभक्त्या सह सांख्ययोगयोः समन्वयो गीतायामपि दृष्टिगोचरो भवति। तथा महाभारतस्य मोक्षधर्मपर्वणि अनुगीतायां, हंसगीतायां, पराशरगीतायां वसिष्ठकरालजनकसम्वादे याज्ञवल्क्यस्य जनकोपदेशे च ज्ञानस्य सेश्वरसांख्यस्य योगस्य च साङ्गोपाङ्गं विवेचनं विद्यते।

## पुराणेषु प्रमाणानां मान्यता

येन साधनेन प्रमेयस्य ज्ञानं जायते तत् प्रमाणमुच्यते। तदुक्तं न्यायकोशे—प्रमाता येनार्थं प्रमिणोति तत् प्रमाणम्। प्रमाणसंख्यासम्बन्धे दार्शनिकानां विभिन्नं मतमालोक्यते यथाप्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः। प्रत्यक्षानुमाने द्वे प्रमाणे इति बौद्धा वैशेषिकाश्च, त्रीणि प्रमाणानि सांख्ययोगाश्च, चत्वारि नैयायिकाः, पञ्च प्रभाकरानुयायिनो मीमांसकाः, षट् कुमारिलभट्टपक्षपातिनो मीमांसका वेदान्तिनश्च। अष्टौ प्रमाणानि पौराणिकाः, नवालङ्कारिकाश्च मन्यन्ते। एवमेकतो नवपर्यन्तं प्रमाणसंख्या तत्तच्छास्त्रेष्वभिमताऽस्ति। तथाहि भारतीयदर्शने—

> प्रत्यक्षमेकं चार्वाकाः कणाद-सुगतौ तथा।
> अनुमानं च तच्चापि सांख्याः शब्दं च ते अपि॥
> न्यायैकदेशिनोऽप्येवमुपमानं च केचन।
> अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः॥
> अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
> सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥
> चेष्टाऽष्टकारिकं ह्येषु प्रमाणेषु निगद्यते। ५-८

देवीभागवते तु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्यैतिह्यानि सप्तैव प्रमाणान्युक्तानि—किन्तु विष्णुपुराणानुसारं प्र.यस्तुतावशेषान्तः·

एवं जीवो यावदनन्तं सुखं न लभते, तावत् प्रयतमान एव तिष्ठति। तथाचाह-भगवती छान्दोग्यश्रुति यों वै भूमा तत्सुखम्, नाल्पे सुखमस्ति, भूमैव सुखम्, भूमा त्वेव विजिज्ञासितव्यः (७।२३।१)

तथा च भगवत्स्वरूपसाक्षात्कार एवाऽत्यन्तिकमनन्तं च सुखं जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्य मानवशरीरलाभस्य च फलमस्ति। आत्यन्तिकं निरतिशयं सुखमेव मोक्षः, मुक्तिः, अपवर्गः, कैवल्यम्, निर्वाणम्, निःश्रेयसम्, परमपुरुषार्थश्चोच्यते। एतदेव सुखस्य चरमा सीमा परमा च गतिरस्ति। एतदेव लब्ध्वा मानवो मृत्युमुखात् प्रमुच्यते। इतोऽन्यत् किञ्चित् साधनं नास्ति मोक्षलाभाय। तथाचोक्तम्-

'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।—श्वे० उ०

अत एवोपदिशति बृहदारण्यके मैत्रेयी प्रति योगीयाज्ञवल्क्यः—

आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च (२।४।५)

श्रीमद्भागवद्गीताऽपि यल्लाभादपरः कश्चन लाभः श्रेष्ठो नास्ति, तं लब्ध्वेपदपि दुःखेन नाभिभूयते जीव इति स्पष्टमुद्घोषयति—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥—६,२२।

सत्स्वपि मोक्षप्राप्तेरनेकेषु साधनेषु दार्शनिकं ज्ञानं सर्वोत्कृष्टं परमोपयोगि चेत्यत्र नास्ति काचित् संशीतिः यतो हि दर्शनशास्त्राश्रयणमन्तरेण न खलु विचित्रकर्मरहस्य हृदयङ्गमं विधातुं शक्यते। दर्शनविज्ञानसम्पन्नो मानवः दार्शनिकनेत्रसाहाय्येन गन्तव्यस्थानमधिगन्तुमर्हति। आत्मेत्येवोपासीत (बृ० उ० १।४।७) तमेतत्मानमेत (कौ०उ० ४।२) तमेव ज्ञात्वा मृत्युपाशांश्छिनत्ति (श्वे० उ० ४।१५) तरति शोकमात्मवित् (छा० उ० ७।१।३) इत्यादिश्रौतवचःसमूहवारिताप्यं-हेलवे दर्शनानि मुमुक्षूणां दिव्यनेत्राणि स्वीकृतानि सन्ति इति षड्दर्शनसमुच्चये, महाभारतस्य शान्तिपर्वण्यपि।

एवं प्राणिमात्रस्य सततं भवति सुखेच्छा स्वाभाविकी, परं लौकिकैरुपायैर्न सम्भवति निरतिशयस्य सुखस्यावाप्तिः। अतस्तदुपलब्धयेऽपौरुषेयवेदबोधितेतिकर्तव्यताप्रयणमेव श्रेयस्करं मन्यन्ते वेदविदो

विद्वांसः। वेदाः सन्ति भारतीयस्य धर्मस्य दर्शनस्य च प्राणाः। भारतीयधर्मे या जीवनशक्तिर्दृष्टिगोचरीभवति, तस्या मूलकारणं वेदा एव विद्यन्ते। वेदेभ्यः प्रसृता विविधा विचारधारा भारतभूमेर्विचारकाणां बुद्धीराप्लावयन्ती समस्तं विश्वमुपकरोति। अतो भारतीयधर्मदर्शनयोराकृतेः प्रकृतेरुद्गमस्य विकासस्य च समुचितानुसन्धानार्थं वेदानामनुशीलनं नितान्तमावश्यकमस्ति।

ऐतिहासिकदृष्ट्या विचारे क्रियमाणे समेषां दर्शनानां मूलं वेदेषूपलभ्यते। तत एव शनैः शनैर्ब्राह्मणारण्यकोपनिषद्द्वारा विकासमुपगच्छन्ति दर्शनानि किञ्चिदभिनवरूपेण दृष्टिगोचरीभवन्ति। अत एव सर्वधर्मानुयायिन आचार्या दार्शनिकविचारधारायां संलग्नाः सन्तस्तद्बलेनैव स्वानुकूलां परिस्थितिं विधाय स्वस्वसम्प्रदायस्थापने समर्थाः कृतकार्याश्चाभूवन्, भवन्ति, भविष्यन्ति च।

यथा हिमालयवर्तिनो मानसरोवरान्नि सृत्य विभिन्नानि स्रोतांस्युर्वरां भारतभूमिं नित्यमाप्लावयन्ति, तथैव वेदब्राह्मणारण्यकोपनिषद्भ्य आविर्भूता विविधा आध्यात्मिका विचारा दार्शनिकानां विपश्चितां बुद्धीर्निरन्तरं पुष्णन्ति तर्पयन्ति च। एवं चोपनिषत्सु निहितबीजान्यादाय कालान्तरेऽनेकदार्शनिकसम्प्रदायानामुदयोऽभ्युदयश्च जातः। औपनिषदस्य तत्त्वस्य पर्यवसानं तत्त्वमसीति महावाक्ये दृश्यते। तद्द्वारा जीवब्रह्मणोरैक्यं साधितमस्ति। एतदेव तत्त्वं हृदयङ्गमं विधाय भारतीयदर्शनानां विकासोऽभवत्। भारतीयदर्शनानुसारेण साधका शनैः शनैरद्वैतवेदान्तस्योच्चतमे शिखरे समारुह्य, अनायासेनाद्वैतं ब्रह्मतत्त्वमधिगम्य न पुनर्जननीजठरेषु आवर्तन्ते। तथा चाह भगवती श्रुतिः—"न स पुनरावर्तते न स पुनरावर्तते" गीतापीदमेव तथ्यं स्पष्टमुद्घोषयति—

> आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
> मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते॥ = ८।१६
>
> यद् गत्वा न निवर्तन्ते तद्धाम परमं मम॥ = १५।६
>
> ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः॥ = १५४

तथा च दार्शनिकतत्त्वज्ञानाय वेदानां परिशीलनम्, वैदिकरहस्यानां यथार्थज्ञानाय च पुराणानां पर्यालोचनमत्यन्तमुपकारि भवति।

पुराणेषु प्रायः सूक्ष्मतया यत्र तत्र भारतीयदर्शनानां सिद्धान्तस्य विद्यमानत्वेऽपि त्रयाणां सांख्य-योग-वेदान्तदर्शनानां विशेषतो विवेचनमुपलभ्यते। तत्रापि सृष्टिप्रक्रियानिरूपणप्रसङ्गे सांख्यदर्शनस्य प्रचुरं प्रभावो दृश्यते।

सृष्टिरहस्यमनवधार्यसृष्टेः पारे गतिरसम्भवा। अतः सृष्टेर्विस्तृतं विवेचनं प्रायः प्रतिपुराणं जातमस्ति। सृष्टिविषये समन्वयभावनया सर्वान् भारतीयसम्प्रदायान् एकतासूत्रे सम्बन्धुं पुराणेषु सांख्यदर्शनभित्तौ व्यवस्था कृताऽस्ति। प्रतिपुराणं यथावसरं सांख्यदर्शनसिद्धान्तानां व्यवहारः कृतोऽस्ति। सर्वपुराणेषु सृष्टेर्वर्णनं वैशद्येन विद्यते। पुराणानां पञ्चलक्षणे आद्यं लक्षणं सर्गं एवास्ति। पौराणिकसृष्टौ सांख्यदर्शननिर्दिष्टायाः सृष्टेर्विशेषाश्रयणमस्ति। सांख्यदर्शनस्य प्रभावः पुराणेषु प्रचुरः प्रदृश्यते। पुराणानां सृष्टिप्रकरणे सांख्यीयसृष्टेर्विपुले प्रभावे सत्यपि पौराणिकी सृष्टिः सांख्यीयसृष्टेरक्षरशोऽनुकरणं न करोति, परं पौराणिकसृष्टेरस्ति किञ्चिन्निजं वैशिष्ट्यं स्वातन्त्र्यं च। सांख्यदर्शनेन प्रभावितायामपि पौराणिकसृष्टौ स्वकीयं स्वतन्त्रं व्यक्तित्वमस्ति।

पौराणिकं सांख्यं निरीश्वरं दर्शनं नास्ति, किन्तु तदस्ति सेश्वरं दर्शनम्। पुराणेषु सांख्यवेदान्तयोर्न किञ्चिद् वैषम्यं विरोधो वा दृश्यते, यथा दर्शनविकासक्रमेऽवलोक्यते। अत्र तु सांख्यवेदान्तयोरस्ति मञ्जुलं सामञ्जस्यम्। प्रकृतिपुरुषयोर्द्वैतप्रतिपादकं सांख्यम् अद्वयब्रह्मप्रतिपादकेन वेदान्तेन सह पौराणिकस्य दर्शनस्य मूलभित्तिं निर्माति। पुराणानुसारेण प्रकृतिपुरुषौ न स्तः स्वतन्त्रे तत्त्वे, प्रत्युत तौ द्वावपि ब्रह्मप्रेरितावेव स्वकीयकार्यसम्पादने समर्थौ भवतः। अनयोर्द्वयोरप्यस्ति ब्रह्माध्यक्षो यत्प्रेरणयाऽनयोः कार्यकर्तृत्वं स्फुरति।

सांख्यदर्शने सृष्टेर्विकासः प्रकृतिपुरुषयोर्द्वयोः पारस्परिकसंयोगस्य परिणतं फलमस्ति। सांख्यदर्शनानुसारेणेमौ द्वावप्यनादी नित्यौ च स्वीकृतौ स्तः, पुराणेषुभावपीमौ विष्णोर्द्वे रूपे अभिमते स्तः। अनयोरुत्पत्तिर्विष्णुसत्तायामेवाधारितास्ति। विष्णुपुराणं स्पष्टं निर्दिशति यद्

विष्णोर्निरुपाधिकात् स्वरूपात् प्रधानपुरुषात्मक रूपद्वयमाविर्भवति। भगवतो विष्णो कालात्मकरूपद्वारेणेमौ द्वावपि प्रकृतिपुरुषौ सृष्टिसमये संयुक्तौ प्रलयदशायां च वियुक्तौ भवतः। भगवान् विष्णुः कालशक्तिद्वारैव सृष्टिप्रलयौ विधत्ते। तथाहि विष्णुपुराणेभगवान् व्यासः -

> विष्णोः स्वरूपात् परतो हि ते द्वे रूपे प्रधानं पुरुषं च विप्र !
> तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तर तद् द्विज कालसंज्ञम् ॥ = १।२।२४

विष्णुपुराणे हि समेषां वैदिकावैदिकानां सम्प्रदायानां सिद्धान्तस्य स्पष्टास्पष्टरूपेण प्रतिपादनमस्ति, पर प्रधानतया सांख्यदर्शनस्य सृष्टि-प्रलयसम्बन्धिनां तत्त्वविचारेणास्य पूर्णं सामञ्जस्यं विद्यते। तदनुसारं ब्रह्मणो प्रथमाभिव्यक्तिः पुरुषरूपेण भवति। व्यक्ताव्यक्ते तस्यान्यरूपे स्तः, तथा कालस्तस्य परमं रूपं विद्यते। एव यः प्रधान-पुरुष-व्यक्त-कालत. परोऽस्ति एव विष्णोः विशुद्धं परमं पदमस्ति। तदेव विशुद्धं ब्रह्म विष्णुरूपेण प्राप्यते। विष्णोः परमस्वरूपेण प्रधानपुरुषौ जातौ तस्यैवान्यरूपद्वारा तौ द्वौ सृष्टिप्रलयसमये सयुक्तौ वियुक्तौ च भवतः। तस्य रूपान्तरस्य नामास्ति काल.। कालस्य कार्यमस्ति सृष्टिसमये प्रधानपुरुषसंयोजनं प्रलयावसरे च तयोर्वियोजनम्। कालरूपो भगवा-नस्ति अनादिः। अस्यान्तो न भवति। अतः ससारस्योत्पत्तिस्थितिप्रलया न कदापि अवरुद्धा भवन्ति। प्रलयकाले प्रधाने गुणानां साम्यावस्थया स्थिते विष्णोः कालरूपः प्रवृत्तो भवति। प्रलयानन्तरं सर्गकाले समुपस्थिते; विश्वरूपः सर्वव्यापी सर्वभूतेश्वर. परमेश्वरः स्वेच्छया प्रधाने पुरुषे च प्रविश्य, यथाऽक्रियाशीलोऽपि गन्ध. स्वसन्निधिमात्रेण मनः क्षोभयति, तथैव स्वसन्निधिमात्रेण प्रधानं पुरुष च सर्गाय प्रेरयति-

> प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः।
> क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥ = १।२।२६

> यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते।
> मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः ॥ = १।२।३०

एवं शिवपुराणस्य वायवीयसंहितायां पूर्वार्द्धे प्रलयान्ते सृष्टि-समीहया प्रकृतिपुरुषयोः क्षोभात् परमेष्ठिन आज्ञया प्रधानात् सृष्टिः प्रतिपादिताऽस्ति—

प्रभातायां तु शर्वर्यां प्रधानपुरुषावुभौ ।
प्रविश्य क्षोभयामास मायायोगान्महेश्वरः ॥ = ६।२२

ततः पुनरशेषाणां भूतानां प्रभवाप्ययात् ।
अव्यक्तादभवत् सृष्टिराज्ञया परमात्मनः ॥ = ६।२३

अपि च कूर्मपुराणस्य पूर्वार्द्धे परमेश्वरः प्रकृतिपुरुषयोः क्षोभकः स्वीकृतोऽस्ति । ततः सृष्टिचक्रं प्रचलति—

प्रकृतिं पुरुषं चैव प्रविश्याशु महेश्वरः ।
क्षोभयामास योगेन परेण परमेश्वरः ॥ = ४।१३

किञ्च वायुपुराणेऽपीश्वराधिष्ठितमेव प्रधानं स्थावरजङ्गमात्मकं सकलं जगन्निर्मातीत्युक्तम्—

प्रधानं गुणवैषम्यात् सर्गकाले प्रवर्तते ।
ईश्वराधिष्ठितात् पूर्वं तस्मात् सदसदात्मकम् ॥ = ११।२२

अग्निपुराणेऽपि सर्गकाले भगवतो विष्णोः प्रेरणया प्रकृतिपुरुषद्वारा महत्तत्त्वाहङ्कारादीनामाविर्भावो जायते इत्युक्तमस्ति—

ब्रह्माव्यक्तं सदग्रेऽभून्न खं रात्रिदिनात्मकम् ।
प्रकृतिं पुरुषं विष्णुः प्रविश्याक्षोभयत् ततः ॥
सर्गकाले महत्तत्वमहङ्कारस्ततोऽभवत् । = १७।२

तथा च प्रचलितसांख्यदर्शने प्रकृतिपुरुषावुभावप्यन्तिमे तत्त्वे मन्येते, परं पौराणिकसांख्ये तयोरुपरीश्वरस्यापि सत्ता स्वीक्रियते । यथोपनिषत्सु प्रकृतिपुरुषाभ्यां परमपि ब्रह्मणः सत्तास्वीकारात् सेश्वरस्य सांख्यस्य विवेचनं कृतमस्ति, तथैव महाभारते पुराणेष्वपि सेश्वरस्यैव सांख्यस्य निरूपणं विद्यते, किन्तु सांख्यकारिकायां वर्णितं सांख्यं निरीश्वरमेवास्ति । एतन्मते सृष्टिकार्ये नेश्वरस्य कार्यावश्यकताऽस्ति । यथा मानवशरीरे स्वभावतो नखलोमादीन्युत्पद्यन्ते, तथैव प्रकृतेः समस्तं जगज्जायते । ईश्वरकृष्णस्य विचारे प्रकृतिरेव निखिलं प्रपञ्चं निर्माति । तस्याः कृते तदर्थं कस्यापि प्रेरणाया नास्त्यावश्यकता भवति ।

महामुनेः कपिलादारभ्य वार्षगण्यपर्यन्तं सांख्यदर्शनस्य सर्वे आचार्या ईश्वरवादिन आसन्, किन्तु निरीश्वरस्य सांख्यस्य परम्परा, ईश्वर-

कृष्णकृतसांख्यकारिकात एवोपलभ्यते। मन्ये वसुबन्धुप्रभृतीनां बौद्धविदुषां निरीश्वरवादेन प्रभावित ईश्वरकृष्णः प्राचीनं सेश्वरं सांख्यमभिनवरूपेण परिवर्त्य निरीश्वरवादाय प्रश्रयं दत्तवान्। अत एव तेन सांख्यकारिकायां प्रकृतिपुरुषावन्तिमे तत्त्वे मत्वा तत्त्वानां विवेचनं कृतम्, न च तयोरुपरि परमेश्वरस्य सत्ता स्वीकृता।

परमैतिहासिकं पौराणिकं सेश्वरं सांख्यं प्रकृतिपुरुषयो संयोगार्थमीश्वरस्यावश्यकतामनुभवति। तन्मते पुष्करपलाशवन्निर्लेपस्य निरीहस्य पुरुषस्याचेतनायाश्च प्रकृतेः स्वयं संयोगो न भवितुमर्हति। अतस्तयोरुपरीश्वरसत्तास्त्रीकार आवश्यकः। यथाऽयस्कान्तस्य सम्मुखे जडेऽपि लौहे गतिरुत्पद्यते, तथैव पुरुषसन्निधानमात्रेणाचेतनायामपि प्रकृतौ चैतन्यमुपजायते। येन सचेतना इव सा जगतः सृष्टौ प्रवर्तते। तथा चोक्तं स्वयमेव तया कालिकापुराणे—

> जडाहं तस्य संयोगात् प्रभवामि सचेतना।
> अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा॥
>
> यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम्।
> क्षेत्रक्षेत्रज्ञसंयोगात् तद् विद्धि भरतर्षभ॥=७१६

तथा च चित्सत्तायाः प्रभावादेव जडाऽपि प्रकृतिः सचेतना भूत्वा सृष्टि कार्यं विदधातीति निष्प्रपञ्चम्। एवं पुराणेषु सांख्यदर्शनस्य व्यापकः प्रभावो विलोक्यते। पुराणानामनुशीलनेन स्पष्टं प्रतीयते यत् तत्र सांख्यप्रक्रियाया बहुश आश्रयणं कृतमस्ति। अग्निकूर्मविष्णुवायुश्रीमद्भागवतादिपुराणानां तत्तदध्यायेषु सृष्टिप्रलययोर्वर्णनावसरे सांख्यप्रक्रियायाः प्रचुरः प्रभावः परिलक्ष्यते। सांख्येन प्रचुरं प्रभावितापि पौराणिकी सृष्टिस्तस्याक्षरशः पालनं न करोति। सांख्य हि प्रकृतिपुरुषौ मूले तत्त्वे स्वीकरोति, परन्तु पुराणदृष्ट्या सर्गादावुभावपीमौ परमात्मन एवोत्पद्येते, प्रलयदशायां च तत्रैव प्रविलीयेते। तथा चोक्तं विष्णुपुराणे—

> प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी।
> पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि॥=६।४।३६।

परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स देवेषु वेदान्तेषु च गीयते ॥ = ६।४।४०

एवं सांख्यदर्शनमाधारं मन्यमानाऽपि पौराणिकी सृष्टिर्निजं विशिष्ट्यं बिभ्राणालौकिकता- मण्डितैवास्ते इत्यत्र नास्ति कश्चन संदेहलेशः ।

## पुराणेषु सगुणब्रह्मनिरूपणम्

पुराणानि सन्ति भारतीयसंस्कृतेः समस्तानां विद्यानामाकरस्वरूपाणि । तत्र स्थाने स्थाने प्रसङ्गवशाद् दर्शनिकतत्त्वानामपि विवेचनं सरलया सरण्या प्रस्तुतमस्ति । पुराणान्यनेकैः रूपैर्भासमानस्य प्रपञ्चस्य मूले एकस्य सर्वशक्तिसम्पन्नस्य सर्वैश्वर्यसनाथस्य तत्त्वस्य सत्ता स्वीकुर्वन्ति, येन समस्तमिदं विश्वं व्याप्तमस्ति । तदेव तत्त्वं विष्णुनारदीयादिपुराणेषु भगवान् विष्णुः, श्रीमद्भागवतब्रह्मवैवर्तादिपुराणेषु भगवान् श्रीकृष्णः, वायुकूर्मशिवस्कन्दादिपुराणेषु शिवः, देवीभागवतमार्कण्डेयादिषु च शक्तिरस्ति । आत्मज्ञानिना कृते स्यान्नाम भगवतो निर्गुणं स्वरूप मान्यतमम्, परन्तु साधारणमानवानां कृते तूपास्यदेवस्य सगुणं रूपमेवं पुराणानुसारमुपादेयं ग्रहणीयं स्पृहणीयं मान्यतमं चाभिमतमस्ति । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः स श्रृणोत्यकर्णः । इत्यादिना वेदेष्वग्राह्यरूपेण वर्णित निराकार ब्रह्म भागवते सगुणरूपेणाविर्भूय प्रत्यक्षगोचरो भवति—

> तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदायुधम् ।
> श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसुन्दरम् ॥ = १०।३।६ ।
>
> महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् ।
> उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ = १०। ।१० ।

यत्र वेदेषु ब्रह्म एकमद्वितीयं निर्गुणं निर्विकल्पं चोपदिष्टमस्ति, तत्र पुराणानि विविधानां देवीनां च सगुणोपासना स्वीकृत्य सर्वथा गौरवं गायन्ति । विभिन्नदर्शनेषु जगत्कर्तृस्वरूप विभिन्नमभिमतमस्ति । यथा न्यायदर्शनं वैशेषिकदर्शनं चेश्वरं जगत्कर्तारमङ्गीकुरुत । योगदर्शनं सेश्वरसांख्यं च पुरुषविशेषमेव संसारोत्पादकं स्वीकुरुतः । निरीश्वर-सांख्यमते प्रकृतिरेव कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेपः । वेदान्तदर्शनं

तु ब्रह्मण एव विवर्तं जगदिति मनुते। पुराणानुसारेण मूलतत्त्वनाम्नो भिन्नत्वेऽपि तस्य मौलिकस्वरूपे भेदो नास्ति, तत्त्वविदो वेदान्तदर्शनस्याद्वयं ब्रह्म, श्रीमद्भगवद्गीतायाः पुरुषोत्तमः, श्रीमद्भागवतस्य श्रीकृष्णश्चैकमेव परमं तत्त्वमस्ति। तथा चोक्तं श्रीमद्भागवते—

> वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
> ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ = १।२।११।

## आत्मसाक्षात्कारोपायाः

भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यस्ति वास्तविकं सुखकरं तत्त्वम्। तदुपलब्धये श्रीमद्भागवते भगवता श्रीकृष्णेनोद्धवाय प्रधानतया त्रीणि साधनानि निर्दिष्टानि-ज्ञानं भक्तिः निष्कामकर्म च। तथाहि—

> योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
> ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ = ११।२०।६।

अत्र ज्ञानपदेन निःश्रेयसाधिगमाय साधनभूताः सर्वेऽपि ज्ञानप्रकारा गृह्यन्ते। कर्मपदेन कैवल्योपलब्धेः कर्मकाण्डान्तर्गताः सकलाः प्रकाराः स्वीक्रियन्ते। भक्तिपदेन च श्रवणकीर्तनप्रभृतयो निखिलाः प्रकारा अभिप्रेयन्ते। तथा च भक्तिमुक्तिदानां दर्शनभेदेन प्रोक्तानां समेषामुपायानां संग्रहोऽत्र जायते एव। शिवपुराणस्योमा संहितायामपि—

> ज्ञानयोगः क्रियायोगो भक्तियोगस्तथैव च।
> त्रयो मार्गाः समाख्याताः श्रीमातुर्भुक्तिमुक्तिदाः ॥ = ४१।७।

## साधनभेदसमीक्षा

(क) अद्वैतवेदान्तसिद्धान्तानुसारं जीवब्रह्मणोरभेदे सेव्य-सेवकभावानुपपत्त्या पादसेवनार्चादिभक्तिरेव न सम्भवतीति विरोधमूलक एवास्ति भक्तिज्ञानयोर्मार्गभेदः (ख) लीलाविग्रहस्य भगवतः श्रीरामकृष्णाद्यवतारिणः शरीररहितस्य विभो ज्ञानमार्गे एवोपयोगाश्च भक्तेर्ज्ञानिस्य च मार्गभेदः (ग) श्रद्धाप्रधानोभक्तिमार्गः, किन्तु यथाप्रकाशं विनाऽन्धकारस्य न सम्भवति निवृत्तिः तथा तत्त्वज्ञानमन्तरा न मिथ्याज्ञानस्यविद्याया वा समुच्छेदो भावीति वैज्ञानिको ज्ञानमार्गः (घ) वर्णा-

श्रमाद्यनुकूलं वेदाध्ययनादिकं क्रमशः सम्पादयता साधकाना वैदिको ज्ञानमार्गः तद्भिन्नानामुपासकाना कृते चास्ति पुराणेषु विशेषतः प्रतिपादितो भक्तिमार्ग (ङ) निर्गुणस्य ब्रह्मण उपासना हि साक्षान्मोक्षप्रदो ज्ञानमार्ग न ब्रह्मलोक गमनादिक प्रयोजयतीति समाहितचेतसैव सा साध्येत्यतिकठिना परिगण्यते, किन्तु अप्रणिहितमनस साधारणा जनाश्चित्तवृत्तिनिरोधमन्तराऽपि सुगमतया भक्तौ श्रवणकीर्तनादौ प्रवर्तन्ते। (च) स्वप्रकाशस्य चिन्मात्रस्य ब्रह्मणः साक्षात्कारे अविद्यानिवृत्या लीलाविग्रहा रामकृष्णाद्यवतारविशेषा अपि विनिवर्तन्ते, केवल विशुद्ध ब्रह्मः वावशिष्यते इति ज्ञानमार्गः, श्रवणकीर्तनाद्याराधना-भगवत्प्रसाद प्रभृतिनि रूपायै सालोक्य-सामीप्यादि प्राप्तिरूपा मुक्तिस्तदनुसार नित्यविभूतयो वैकुण्ठसाकेतगोलोकादयो लोका इत्यङ्गीकारो भक्तिमार्ग ।

एवमुपासनाया ज्ञानमार्गस्य च मार्गभेदो विद्यते। उपासना हि मानसी क्रिया सा हि कर्तृपुरुषपरतन्त्र्या, पुरुषेण कर्तुमकर्तुमन्यथाकर्तुं शक्या, ज्ञानन्तु विषयाधीनं न पुरुष परतन्त्रमित्युपासनाज्ञानयो स्तात्त्विको भेदः। इत्य वैदं श्रौत स्मार्त पौराणिक च कर्मापि भगवदुपलब्धिसाधकमित्येते त्रयोऽप्युपाया मुख्यतया शास्त्रेषु मानवाना नै श्रेयस साधका उक्ताः सन्ति।

एव गीतायामपि त्रयाणां कर्म-भक्ति-ज्ञानाना निरूपण जातमस्ति। अतो विभिन्नैराचार्यैः स्व-स्वसम्प्रदायानुसार प्रमाणानि युक्तीश्चोपस्थाय गीतायास्त्रिविध तात्पर्यं निर्णीतम्। तत्र

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। २।४७
योगस्थ कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय। २।४८
कुरु कर्मैव तस्मात्त्व पूर्वं पूर्वतरं कृतम्। ४।१५

इत्यादि पद्यद्वारा कर्मणः कर्तव्यता समुद्दिष्टाऽस्ति। नित्यकर्मानुष्ठानकाले जायमानैः क्लेशैः सञ्चितकर्मणाक्षये कर्मानुष्ठाने प्रवृतः पुमान् शरीरावसाने स्वत एव मोक्षस्यितावुपतिष्ठते। अत एव बालगङ्गाधरतिलकेन ज्ञानमूलको भक्तिप्रधान कर्मयोग एव गीताया. प्रतिपाद्योऽभिमत।

तथा च

पुरुषः सपरः पार्थ ! भक्त्या लभ्यस्त्वनन्यया । ८।२२

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । १८।५५

मत्किमचिरात् कृत्वा मामेवेष्यस्यसंशय. । १८।६८

भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन ।

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप । ११।५४

इत्यादि पद्येषु भक्तेः परमेश्वरप्रापकत्वेन प्राशस्त्यमुक्तमस्ति। अतो गीताया मुख्यप्रतिपाद्या भगवद्भक्तिरेव, तत्रापि शरणागतिभक्तिरिति वैष्णवाचार्याः ।

एव मेव

सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । ४।३३

सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि । ४।३६

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन । ४।३७

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । ४।३८

ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति । ४।३९

इत्यादिवचनैर्ज्ञानस्य साक्षाद्भगवदुपलब्धिसाधकत्वेनोत्कृष्टत्व निर्देशाद् ज्ञाननिष्ठैव गीतायाः प्रतिपाद्यो विषय. । इति श्रीशङ्कराचार्यपादाः गीतायां त्रिषु षट्केषु क्रमशः कर्म-भक्ति-ज्ञानानामेकैवस्थिधा-शृङ्खलास्ति यत्र परस्परं विरोधस्य कल्पनावसर एव नोपतिष्ठते ।

अर्थात् द्रष्टा जीवो न ब्रह्मणोऽतिरिक्तोऽस्ति किन्तु ब्रह्मणो माया शक्त्या तस्य ज्ञानमाच्छन्नं भवति । यावन्मायाजन्यभ्रान्तिरवतिष्ठते तावद् जीवो मायिकं प्रपञ्चं सत्यं मन्यमानस्तत्र बद्धस्तिष्ठति भ्रान्तिनिवृत्त्यास स्वस्वकीयां ब्रह्मरूपतामापद्यते । इयमवस्थैवास्ति मुक्तिः । कर्मभिः चित्तशुद्धौ आवरणापनोदे ज्ञानमुदेति । मुक्तिमुपदिशति । अनस्तया मुख्यः प्रतिपाद्यो गीता हि विषयः कर्मसंन्यासपूर्वकं ज्ञानमेवास्ति ।

वस्तुतो मार्गत्रयव्यतिरिक्तो नान्यः कोऽपि पन्था विद्यते येन त्रयी-परमतत्त्वमानन्दाच्चिरमुहृदो भगवतो विमुखोऽनन्तेभ्यः कालेभ्योऽनन्तासु योनिषु सम्भ्रममाणो जन्मजरामरणानामवर्जनीयक्लेशानश्नाति सन् मानो जीवोऽनन्तानन्दमयस्य करुणावरुणालयस्य प्रभोश्चरणशरणमधिगन्तुमर्हेत् ।

एतेषु त्रिषु साधनेषु ज्ञानस्य कृपाणधारासत्त्वेन सर्वसुलभत्वाभावाद् निष्कामकर्मणश्च कष्टसाध्यत्वाद् भगवद्भक्तिरेव सर्वसाध्या सुगमा सुलभा निःश्रेयसकरी च प्रतीयते। मानवानां कल्याणाय सत्ययुगादौ ज्ञान-वैराग्ययोर्मोक्षसाधकत्वेऽपि कलियुगे भक्तेरेव प्राधान्यमस्ति। तदुक्तं पद्मपुराणीयश्रीमद्भागवतमाहात्म्ये—

सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ।
कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी॥ = २।४।

भक्तौ न तपस आवश्यकता, न वेदाध्ययनमनिवार्यमस्ति, न च योगानुष्ठानमपेक्षितमस्ति, न वा ज्ञानमनिवार्यतया कारणमस्ति, किन्तु भगवत्यनन्यानुरागमात्रमेवापेक्षितं विद्यते। तथा चोक्तं पद्मपुराणे श्रीमद्भागवतमाहात्म्ये—

न तपोभिर्न वेदैश्च न ज्ञानेन नापि कर्मणा।
हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः॥ = २।१८।

तथा च गुरूपदेशाद्—विधिनिषेधानुकूलं साधनं कुर्वतो भक्तस्य हृदये प्रथमं या भक्तिरुदेति सा वैधी भक्तिरुच्यते। ततो निरन्तरम् भगवच्चरणारविन्दविषयिणी रागात्मिका भक्तिरुदेति, यया भक्तहृदये आनन्दशान्तिसञ्चारो भवति। तस्य मनोमधुपः प्रभुपादपद्ममकरन्द-पानमत्तः सर्वत्रप्रभुमेव पश्यन्नानन्दनिमग्नस्तिष्ठति। अस्यामवस्थायामेव भगवन्त-श्रीकृष्णमुक्तवत्यो व्रजबालाः रासलीलायाः समये—

चित्तं सुखेन भवतापहृतं गृहेषु
यन्निर्विशत्युत करावपि गृह्यकृत्ये।

पादौ पदं न चलतस्तवपादमूलात्
यामः कथं व्रजमथो करवाम किम्वा। =१०।२९।३४

रागात्मिकायां भक्त्यां भगवत्प्रेमविह्वलो भूत्वा भक्तः उन्मत्तवन्नृत्यति रोदिति गायति हसति च। तथाचोक्तम्—

वाग् गद्गदा द्रवते यस्य चित्तम्

रुदत्यभीक्ष्णं हसति क्वचिच्च ।

निर्लज्ज उद्गायति नृत्यते च

मद्भक्तियुक्तो भुवनं पुनाति ॥ = ११।१४।२४

एवं गुरुशास्त्राज्ञानुसारं वैधीं भक्तिमभ्यस्यतो भक्तस्य हृदये सा रागात्मिका भक्तिरुदेति, यस्यां भक्तहृदयं सांसारिकविषयेभ्य उपरतं भूत्वा भगवति लीनं भवति। एतत् परिपक्वदशाया परिणामः पराभक्ति तं प्रापुः। सुदामा केवलैः पृथक्तण्डुलकणैः, गजेन्द्रः केवलेन पुष्पेण, सबरी च वदरीफलैरेव भगवन्त सन्तोष्य स्वीयां स्वीयामभिलाषां पूरितवन्तः, प्राप्तवन्तश्च तत्कृपया परमं पदम्।

एतत्सर्वं पर्यालोच्येदं वक्तुं शक्यते यत्सत्यमुक्तं भगवंता गीतायाम् —

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।

तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥

अनन्यया भक्त्या सन्तुष्टो भगवान् भक्तस्य सर्वविधां विपदं वारयति मनोरथं च सर्वं पूरयति। तथाचोक्तं श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लवम्,

महत्पदं पुण्ययशो मुरारे।

भवाम्बुधिर्वत्सपदं परं पदम्,

पदं पदं यद्विपदा न तेषाम् ॥

भगवति समासक्तो भक्तो मुक्ति लब्ध्वा न च पुनः जन्ममरणचक्रे चंक्रमितो भवति। तथाचोक्तं श्रीमद्भागवते—

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्

नामानि रूपाणि च मंगलानि ते।

क्रियासु यावच्चरणारविन्दयोः

राविष्टचेता न पुनर्भवाय ॥

## भक्तेर्भेदाः

भक्तिस्तावद् द्विविधा गौणीपराभेदात्। गौणी पुनर्द्विधा—वैधी[1] रागात्मिका[2] च। तत्र वैधी श्रवणादिभेदेन नवधा[3] सा पुनर्द्विविधा, एकाङ्गा अनेकाङ्गा च[4]। रागात्मिका हि वात्सल्याद्यासक्तिभेदाच्चतुर्दशधा विभज्यते, परा चैकविधैवास्ति। द्विविधापि सा भक्तिः साधनावस्थायां गौणी प्रोच्यते, सिद्धावस्थायां च पराभिधीयते। गौण्या भक्तेरङ्गसाधनद्वारा साधकोऽभ्यासवृद्धिं कुर्वाण आत्मानं जगत् परमेश्वरं च पृथक् पृथक् निभालयति। अवसानेऽभ्यासपूर्णतायां सत्यां भक्तिपारावारे निमग्नो द्वैतभावरहितो भक्तः सर्वत्रैव स्वकीयं प्रियतमं परमेश्वरमेवावलोकयति। इयमेव भक्तेरद्वैतावस्था परा भक्तिरुच्यते। अस्यामवस्थायां भक्तः आनन्दमयं परमात्मानं परिपश्यन् परमानन्दसागरे निमज्जति। तथा चोक्तं श्रीमद्भागवतस्य सप्तमस्कन्धे सप्तमाध्याये—

> तदा पुमान् मुक्तसमस्तबन्धनः तद्भाव-भावानुकृताशयाकृतिः।
> निर्दग्धबीजानुशयो महीयसा भक्तिप्रभावेण समेत्यधोक्षजम् ॥३६॥

एकाङ्गाभक्तिर्यथा—भक्तिरसामृतसिन्धौ रूपगोस्वामी—

> श्रीविष्णोः श्रवणे परीक्षिदभवद् वैयासकिः कीर्तने
> प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने।
> अक्रूरस्त्वभिवादने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
> सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परम् ॥

---

१. यत्र रागानवाप्तत्वात् प्रवृत्तिरुपजायते।
शासनेनैव शास्त्रस्य सा वैधी भक्तिरुच्यते ॥ = भ० र० सि० २।३

२. विराजन्तीमभिव्यक्तं व्रजवासिजनादिषु।
रागात्मिकामनुसृता या सा रागानुगोच्यते ॥ = भ० र० सि० २।७६

३. श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥ = श्री० भा० ७।५।२३

४. सा भक्तिरेकमुख्याङ्गाश्रितानैकाङ्गिकाथवा।
स्ववासनानुसारेण निष्ठातः सिद्धिकृद्भवेत् ॥

अनेकाङ्गा यथा राज्ञोऽम्बरीषस्य दिनचर्यायां श्रीमद्भागवते—

> स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
> करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ = ९।४।१८

एवं च गुरुशास्त्राज्ञानुसारं वैधीं भक्तिमभ्यस्यतो भक्तस्य हृदये सा रागात्मिका भक्तिरुदेति, यस्यामहङ्कार-देहात्मभावौ नश्यतः, ततः सर्वात्मदृष्टिश्चोपजायते । तथा चोक्तं श्रीस्वामिशङ्कराचार्यपादैः—

> सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमाः
> गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः ।
> वाचः प्राकृतसंस्कृता श्रुतिगिरो वाराणसी मेदिनी
> सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि ॥

## पराभक्तिः स्वरूपज्ञानयोरैक्यम्

यथाग्निना सुवर्णं निर्मलं सत् स्वीयं स्वाभाविकं स्वरूपं प्रतिपद्यते, तथैव जीवोऽपि भगवद्भक्त्या मलिनसंस्कारपरिच्युतोऽध्यात्ममार्गेऽग्रेसरन् स्वकीयं वास्तविकं स्वरूपमासादयति ।

परमात्मनः स्वरूपज्ञानं पराभक्तिश्चैकमेव तत्त्वम् । तटस्थस्वरूपभेदेन ज्ञानं द्विविधम् । तटस्थे ज्ञाने ज्ञातृज्ञेयज्ञानरूपिणी त्रिपुटी तिष्ठति । दशायामस्यां ज्ञेयस्य परमात्मनः, ज्ञातुः साधकस्य, ज्ञानरूपव्यापारस्य च सत्त्व एवात्मन उपलब्धिर्जायते, किन्तु स्वरूपज्ञानदशायां ज्ञातृज्ञेयज्ञान-रूपिण्यास्त्रिपुट्याः पूर्णतो विलयेनैकमात्रमद्वितीयं सच्चिदानन्दस्वरूपं परं ब्रह्मैवावशिष्यते । सच्चिदानन्दभावनिमग्नचेताः साधको भक्तः प्रकृष्टायामस्यां दशायां सर्वत्रैवानन्दरूपस्य परमात्मनः साक्षात्कारं कुर्वन् तमेवाद्वैतभावमधिगच्छति ।

यथा ब्रह्मसद्भावस्योदयेन स्वरूपज्ञाने जाते कार्यकारणब्रह्मणोरैक्यपाद अद्वैतभाव उदेति, तथैव परायाः भक्तेरुदयेन भक्तः केवलं परमात्मान-मेवानुभवति, न तदपृथक्येऽपरः कश्चन पदार्थः परिस्फुरति । तदानीं भक्तः कार्यब्रह्मस्वरूपं जगत्प्रपञ्चं कारणब्रह्मस्वरूपे परमात्मन्येव विलीन-मनुभवति । दशायमत्र जलाशये जलबिन्दुरिव भक्तमानसं रससागरे परमात्मनि विलीयरूपतां प्रतिपद्यते ।

तदानीं साधकस्य चेतसि ब्रह्मव्यतिरिक्तं न किमप्यवभासते। अस्यामेव परिस्थितौ तत्त्वमस्यादिमहावाक्यानां भवति चरितार्थता।

इयमेव परा भक्तिः भक्तैः काम्यते, इयमेव हि जीवनमुक्तावस्था प्रोच्यते। एवं भक्तेर्ज्ञानरूपतया भक्त्यैव मुक्तिमभीप्सवो भक्तप्रवरा ऋते ज्ञानान्न मुक्तिः, इत्यादिविरोधं न कलयन्ति।

पुराणानुसारेण भगवतो भक्तिर्भक्तान् दुःखबहुलादस्मात् संसार-सागराद् आनन्दपूर्णपरिस्थितौ समुपस्थापयतीतीदमेकमात्रं सुगमं साधनं निर्दिष्टमस्ति। तत्त्वस्यास्य प्रतिपादनं तु प्रतिपुराणं प्राप्यत एव। अथापि पुराणमूर्धन्ये सर्ववेदान्तसारे वैष्णवकुलतिलके श्रीमद्भागवते महापुराणे भक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। तदनुसारेण प्रेमपयोधावखिलात्मनि सकलरसामृतसिन्धौ भगवति संसक्तया भक्त्या समः कल्याणकारी कश्चिदन्यो मार्गो नास्ति—

न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥ = ३।२५।२६।

श्रुत्यनुसारं भगवानस्ति, रसरूपः प्रेममयो वा, तदंशत्वाज्जीवोऽपि तदभिन्न एव, परन्त्वविवेकेन मानवः स्वीयान्तःकरणप्रेमरसं सांसारिके पुत्रकलत्रस्वजनादौ नियोजयति। तत्समागमेन सुखी, तद्वियोगेन च दुःखी जाजायते। यदा जन्मान्तरीयपुण्योपचयेन मानव आत्मीयजन-सम्बन्धमसारं मत्वा नैजमन्तःकरण परमप्रेमास्पदे आनन्दघनसच्चिदा-नन्दरससागरे परमात्मनि प्रवाहयति, यत्तदा तदेव भक्तिशब्दवाच्यतां प्रपद्यते। भक्त्यैव भक्तो भगवन्तं याथातथ्येन विज्ञातुं प्रभवति। विशेषतः कलिकालेऽल्पप्राणायुर्मेधसां मानवानां भगवद्भक्तिरेवैकं सरलं सुगमं सुखसाध्यं चावलम्बनमस्ति। भक्त्या भगवतो वास्तविक स्वरूपं विज्ञाय परमपुरुषार्थं निर्वाणपदं प्राप्तुं शक्यते। अत एव भगवता श्रीकृष्णेन विश्वरूपदर्शनावसरे वेदाध्ययन-तपो यज्ञदानादिभिः साधनैः मम विश्वरूपदर्शनयोग्यता न सम्भवति, अपितु अनन्यया भक्त्यैव सा सम्पद्यते इति स्पष्टं प्रोक्तम्—

भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥ = गीता ११।५४

## भक्तिदर्शनयोः फलैक्यम्

अतो दार्शनिकतत्त्वज्ञानोदयेन यत् फलमवाप्यते, तदेव फलं परया भक्त्यापि प्राप्यत इति निर्विवादम् । 'रसो वै सः, रसं लब्ध्वा ह्यानन्दी भवति' इति श्रुत्यनुसारेण भगवतो रसरूपत्वाद् ब्रह्मानन्दप्रदायिने भक्तिरसमेव द्वारीकृत्य रसरूपस्य भगवतः सान्निध्यमवाप्तुं शक्यते ।

यथा पदार्थवादिनी न्यायवैशेषिकदर्शने पदार्थज्ञानद्वारा निःश्रेयसाधिगममवगमयतः, योगदर्शनं च जीवेश्वरयोरेकत्वप्रतिपादनपूर्वकं समाधिना कैवल्यपथं प्रदर्शयति, सांख्यदर्शनं तु त्रिविधदुःखात्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषयोर्विवेकज्ञानेन मुक्तिमार्गमुपदिशति, मीमांसादर्शनमपि वैदिककर्मभिः संस्कारशुद्धया निर्वाणोपलब्धि निर्दिशति । वेदान्तदर्शनं वाङ्मयब्रह्मज्ञानेन मोक्षप्राप्तिमुद्घोषयति, तथैव भगवत्सान्निध्योपलब्धिभूतां भक्तिदर्शनमपि भगवत्तत्त्वसाक्षात्कारद्वाराऽपवर्गद्वारमुद्घाटयतीत्यत्र नास्ति कश्चन सन्देहः । स्थावरजङ्गमात्मके विशालेऽस्मिन् भूमण्डले उच्चावचेषु संख्यातीतेषूद्भिज्जस्वेदजाण्डजजरायुजेषु शरीरेषु परिभ्रमन् प्रकृतिमातुरनुकम्पया जीवः क्रमोन्नतिं लभमानोऽन्ते मानवदेहमाश्रयति । मानवशरीरमधिगत्यापि वासनाजालनिगडितो जन्ममृत्युप्रवाहेऽनारतं प्रवहन् तावद् दुःखचक्रे चङ्क्रमति, यावद् भगवद्भक्त्या आत्मसाक्षात्कारमनुष्ठायासौ न परमानन्दस्वरूपं मुक्तिपदमधिगच्छति ।

यत्तु श्रीमद्भागवतस्य कपिलदेवहूतिसंवादे भगवद्भक्ता मुक्तिमपि नेच्छन्ति[1], तन्न विचारसहम्, तस्य भगवद्भक्तप्रशंसामात्रपरत्वात्, भक्तिमोक्षयोः समानार्थत्वे मोक्षेच्छाया अप्रसङ्गान्निषेधस्यासङ्गत्यापत्तेः । यद्वा मुक्तावपेक्षितः सर्वो दुरितक्षयो, भोगनिवृत्तिः, आत्मज्ञानादि वा भक्तिप्रभावादेव निष्पद्यन्ते । अर्चनपादसेवनयोर्मोक्षस्वरूपे भगवत्सान्निध्येऽपि सम्भवेन मुक्ता अपि भक्ता भवन्तीति बाधकाभावः ।

---

१. सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ — ३।२९।१३

पाञ्चरात्रमपि एकं स्वतन्त्रदर्शनरूपेण विकसितमागमशास्त्राणां मुख्योऽस्ति विषयः। पाञ्चरात्रस्य सिद्धान्ता अप्यनेकेषु पुराणेषूपलभ्यन्ते वैष्णवपुराणेषु पाञ्चरात्रपम्परा धार्मिकविकासरूपेण प्रस्तुता विद्यते। महाभारतान्तर्गतस्य शान्तिपर्वणो नारायणीपर्वणि पाञ्चरात्रस्य व्यापकानां सिद्धान्तानां दर्शनं भवति। कूर्मपुराणे पाञ्चरात्रं पूर्णतो विकसितावस्थायां दृष्टिगोचरी भवति (४१।६५) ब्रह्मपुराणपद्मपुराणयोः चतुर्व्यूहपरम्परायाः पालनं दृश्यते। श्रीमद्भागवतेऽक्रूरद्वारा कृतायां श्रीकृष्णस्तुतावपि चतुर्व्यूहस्योल्लेखो विद्यते।

> नमस्ते वासुदेवाय नमः सङ्कर्षणाय च।
> प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः॥ = १०।४०।२१

निष्कर्ष :—

एवं पुराणेतिहासयोर्दर्शनस्य प्रमुखानां त्रयाणामङ्गानां ज्ञानमीमांसा-तत्त्वमीमांसा-आचारमीमांसानां सामान्यं समीक्षणं जातमस्ति। तत्र स्पष्टास्पष्टरूपेण ज्ञानोपकरणेषु प्रमा-प्रमातृ-प्रमेय-प्रमाणानां तत्त्वसम्बन्धिनां सर्वेश्वरवाद-सृष्टि-प्रलय-कालमानादीनां, वर्णाश्रमधर्माचारविचाराष्टाङ्गयोगादीनां विवरणमुपलभ्यते। येनापेक्षितं तात्त्विकं ज्ञानं सिद्धान्तरूपेण जायते एवेतिनिश्चप्रचम्। अतएव मोक्षादिसर्वकामनया भगवद्भजनस्यावश्यकत्वममलात्मना वैयासकिना श्रीमता शुकदेवेन स्पष्टतया सिद्धान्तितं श्रीमद्भागवते—

> अकामः सर्वकामो वा मोक्षकाम उदारधीः।
> तीव्रेण भक्तियोगेन भजेत पुरुषं परम्॥ = २।३।१०

तस्मात् सर्वदर्शनानां लक्ष्यभूता आनन्दघनसच्चिदानन्दपरमात्मतत्त्वोपलब्धिरिव भक्तिदर्शनद्वारा परमतत्त्वपुरुषोत्तमप्राप्तिरेव पुराणानां परम प्रयोजनमवसीयते।

अपि च महाभारतस्य शान्तिपर्वणि मोक्षधर्मे धर्मराजं प्रति भीष्मपितामहेन भगवदाराधनाद् महर्षीणां मुक्तिनिर्देशपूर्वकं तच्छ्रणागतये उपदेशो दत्तः। किञ्चनादि भगवान् विष्णुरेवास्ति परं ब्रह्म परमं च धाम, तं प्राप्य प्राणिनः कालगतेर्मुक्ताः सन्तो मोक्षं लभन्ते नूनम्—

समाराधय गोविन्दं गता मुक्तिं महर्षयः ।
तस्माद् भज हृषीकेशं कृष्णं देवकिनन्दनम् ॥ = २७७।४६

तद् ब्रह्म परमं प्रोक्तं तद् धाम परमं पदम् ।
तद् गत्वा कालविषयाद् विमुक्ता मोक्षमाश्रिताः ॥ = २०६।१४

शिवपुराणानुसारं तु निष्कामकर्मणा भगवति भक्तिर्जायते, भक्त्या च ज्ञानसूर्यस्योदयान्मुक्तिर्भवतीति निश्चप्रचम् ।

कर्मणा जायते भक्ति र्भक्त्या ज्ञानं प्रजायते ।
ज्ञानात् प्रजायते मुक्तिरिति शास्त्रेषु निर्णयः ॥ = उ० सं० ११।१०

अत. पुराणेतिहासयोर्भारतीयदर्शनविषयकविवेचनीयतत्त्वानामुपलब्धौ न काचिदस्ति संशीतिः ।

यथा तस्मादेतस्माद्वा आत्मन आकाशः सम्भूत इत्यादिश्रुत्या वेदान्तिनो मायासम्वलितस्य ब्रह्मण. प्रथममाकाशस्योत्पत्तिमङ्गीकृत्य तस्मात् सर्वः प्रपञ्चो जायते इति विवर्तवादं स्वीकुर्वन्ति तथैव पौराणिका अपि मायाया माध्यमेन जगत ईश्वरकर्तृत्वं मन्यन्ते इत्युभयोः साम्ये न कश्चन विद्यते विरोधः ।

## विरोधपरिहारविवेचनम्

यद्यपि तत्तत्पुराणेषु साम्प्रदायिकभावनाया प्रतीतिर्भवति । यथा शिवपुराणे शिवः विष्णुब्रह्मणोः स्रष्टा, विष्णुपुराणे विष्णु शिवब्रह्मणोः निर्माता, ब्रह्मपुराणे ब्रह्मैव तयोः कर्ता, देवीभागवते भगवती आद्याशक्तिः ब्रह्मविष्णुमहेशानां प्रसवित्री, सूर्यपुराणे च सूर्यस्यैव सर्वसवितृत्वं दृश्यते । किञ्च वहुषु स्थलेषु कथायामपि परस्परं भेदो दृश्यते, येन अष्टादशपुराणानां व्यासकर्तृत्वं न प्रतिभाति, तथापि कल्पभेदाद्भेदप्रत्ययव्यवस्थया निर्वाहात् न कापि विप्रतिपत्तिः सम्भवति । तथा चोक्तमभियुक्तैः—

क्वचित् क्वचित्पुराणेषु विरोधो यदि दृश्यते ।
कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥

वस्तुतो "नमोऽस्त्वनन्ताय सहस्रमूर्तये" "सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्" इत्यादिवचनैरेक एव परमात्मा भक्तानां भावनानुसारम्

अनेकनामरूपभावादिभिर्वर्णितोऽस्ति। अतएव श्वेताश्वतरोपनिषदि "एको देवः सर्वभूतेषु गूढः:" ऋग्वेदे च—

इन्द्रं मित्रं वरुणाग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः॥

इत्यादिना स्पष्टतया एक एवेश्वरोऽनेकरूपै र्वर्णितो वर्तते। अत एव च महिम्नःस्तोत्रे पुष्पदन्ताचार्यः शिवं स्तुवन् ब्रवीति—

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्,
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

केवलेनोपासनाभेदेन एक एवेश्वरः ब्रह्मविष्णुशिवशक्तिसूर्यादि-नाम्ना निरूपितोऽस्ति, न तेषु वास्तविको भेदोऽस्ति। ये च तेषु वास्त-विकं भेदं मन्यन्ते, न ते विचारवन्तः सन्ति। तथाचोक्तम्—

ब्रह्माणं केशवं रुद्रं भेदभावेन मोहिताः।
पश्यन्त्येकं न जानन्ति पाखण्डोपहता जनाः॥

अतएव श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णः स्पष्टमुद्घोषितवान्—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥

तस्मात्—"अष्टादशपुराणानां कर्ता सात्यवतीसुतः।" इति वचनानुसारम् अष्टादशपुराणनिर्माता व्यासदेव एवास्ति। तेनैव समन्वयात्मकदृष्ट्या विभिन्नसम्प्रदायोपासकानां भक्तानामिष्टदेवतासु श्रद्धोपपादनाय तत्त-त्पुराणेषु तत्तद्देवानामुत्कृष्टता प्रदर्शितास्ति। विचारपूर्वकं पुराणा-नामध्ययनेनेदं प्रतीयते यद् एकस्यैव परमात्मनो ब्रह्मविष्णुशिवशक्ति-सूर्यादीनि विभिन्नानि सगुणानि रूपाणि सन्ति, यतो हि सृष्टौ एषां कार्यं भिन्नं भिन्नमस्ति। तथा च—उपासकानां विभिन्नत्वात् पुराणानि विभिन्नदेवताभक्तिपोषकानि सन्ति। यथाह स्कन्दपुराणे सृष्टिखण्डे—

अष्टादशपुराणेषु दशभिर्गीयते शिवः।
चतुर्भिर्भगवान् ब्रह्मा द्वाभ्यां देवी तथा हरिः॥

यो हि मनुष्यो यस्य देवस्य भक्तो भवति, स तस्य देवस्य महत्त्व-प्रकाशकं पुराणं विशेषतः समाद्रियते, श्रद्दधाति च तत्र। अष्टादशसु महा-

पुराणेषूपपुराणेषु च भिन्नभिन्नसम्प्रदायसामग्रीसत्त्वेऽपि ब्राह्मवैष्णव-शैव-शाक्त पुराणेषु, अष्टादशानां पुराणानां पाठश्रवणयोः फलस्य वर्णनं सर्वेषां कृते समानमेवास्ति, न तत्र किमपि वैमत्यं विलोक्यते–

> अष्टादशपुराणानां नामधेयानि यः पठेत्।
> त्रिसन्ध्यं लभते नित्यं सोऽश्वमेधफलं लभेत्॥
> ये त्वेतानि समस्तानि पुराणानि च जानते।
> भारतं च महाबाहो! ते सर्वज्ञा मता नृणाम्॥

अयंभावः यथाकाष्ठ-धूम्र-वह्निषूत्तरोत्तरमौत्कर्ष्यमालोक्यते तथैव तमोगुणाद् रजोगुणस्तस्माच्च सत्त्वगुणः श्रेष्ठोऽभिमतोऽस्ति। एतदनुसारमेव त्रिदेवेषूत्तरोत्तरं श्रेष्ठत्वं वर्णितं वर्तते। रुद्रो हि तमोगुणप्रधानो ब्रह्मा च रजोगुणमुख्यः स्तः। अतस्तयोः क्रमश आवरणशक्तेर्विक्षेपशक्तेश्च विद्यमानत्वात्ताभ्यां प्राणिनां सुखोपलब्धिरसंभवा। अतः सत्त्वमयशरीराद् भगवतो विष्णोरेव वास्तविकस्य श्रेयसः प्राप्तिरुक्ता श्रीमद्भागवते[1]। नानेन रुद्रब्रह्मणोरपकर्षः सम्भवति, यतो हि एकस्यापकर्षप्रदर्शनं विनाऽपरस्योत्कर्षस्थापनं न सम्भवति। यदि रुद्रस्तमोगुणी विद्यते तर्हि तेन सृष्टि-पालनयोरसम्भवः, यदि वा ब्रह्मा रजोगुणी तर्हि तेन पालन-संहारौ न संभवतः, यदि च विष्णुः सत्त्वगुणी तर्हि तेन सृष्टिसंहारौ कथं भवितुमर्हतः? एषु त्रिदेवेषु पृथक्-पृथक् कार्यस्य प्रतिपादनं पुराणेषु प्रसिद्धमेव। एष्वन्यतमो लीलार्थमेकस्मिन् कल्पेऽन्यौ सृजति तर्हि द्वितीयो द्वितीयस्मिन् कल्पे इतरौ निर्माति, कल्पान्तरे च तृतीयोऽन्यतरौ जनयति[2]।

इत्थमन्योऽन्यमुत्पादकोत्पाद्यत्वाद् विभिन्नकल्पानुसारमेतेषामुत्कर्षापकर्षयोः परस्परमुपासकोपास्यभावस्य च वर्णनं विद्यते। अतस्तेषु न्यूनाधिक्यकल्पनाऽज्ञानमूलिकैव।

---

१. सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः॥

२. ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत्।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः॥
विष्णुश्च भगवान्रुद्रं [illegible] ब्रह्माणमसृजत्।

यस्योद्वाहस्तस्यैव गीतगानं समुचितमितिरीत्या ब्रह्मपुराणे ब्रह्मणः प्राधान्यमुक्तमस्ति, शिवपुराणे शिवस्य प्राशस्त्यं निर्दिष्टं वर्तते, विष्णुपुराणे च भगवतो वासुदेवस्यैवोत्कर्षः प्रदर्शितोऽस्ति। तत्र न न्यूनाधिक्ये कल्पनीये, अपितु भिन्नभिन्नकल्पकथाश्रयणाद् महर्षिभिः तेषां तेषां देवाना तानि तानि चाद्भुतानि चरितानि प्रणीतानीति मत्वा-त्रिदेवेषु सुसामञ्जस्य विधेयम्[1]।

वस्तुतः मूलतत्त्वमेकमेवास्ति। तत्र त्रयाणां गुणानामाविर्भावतिरोभावौ भवतः। दृष्ट्यानया ब्रह्मरुद्रावपि सत्त्वमूर्ती स्त.। अतएनयोरुपासनयापि नूनं श्रेय. सम्पद्यते एव। त्रिदेवेषु वास्तविकी एकता वर्तते, तेषूत्कर्षताऽपकर्षता चोपाधिरस्ति। अत· सर्वः सर्वोऽस्तीति निश्चप्रचम्[2]।

## विविध-विद्याविलासः

पुराणेष्वाख्यानाना प्रसङ्गे आश्चर्यकारिणीनामनेकासामेवम्विधाना विद्यानामुल्लेखो विद्यते, या आकर्ण्य सहसा चित्तं चमत्कृतं भवति प्रसीदति च मनोनिरन्तरम्।

### अनुलेपविद्या

मार्कण्डेयपुराणे एकस्यैवम्विधस्य विशिष्टस्य पादलेपस्य सङ्केतो वर्तते, यस्य पादयोर्लेपाद् मनुष्यस्य गतिरप्रतिहता जायते, दिनार्द्धे एव सहस्रयोजनयात्रायाः सामर्थ्यमागच्छति। तत्प्रयोक्तुरेकस्य मन्त्रौषधिविदो ब्राह्मणातिथेः चर्चा विद्यते, येनैकस्मै वेदवेदाङ्गपारगायाग्निहोत्रिणे ब्राह्मणाय पादलेप प्रदाय प्रोक्तम्[3]। ततो जातकौतुक सः दिनस्य पूर्वार्द्धेन परावर्तिष्ये इति मनसि निश्चित्य कृतनित्यक्रियो हिमालय द्रष्टु-

---

१. क्वचिद् रुद्र क्वचिद् ब्रह्मा क्वचिद् विष्णु प्रशस्यते।
नान्येन तेषामाधिक्यं न्यूनत्व वा कथंचन॥
तत्तत्कल्पान्समुद्भूतान्समधिकृत्य महर्षिभिः।
तानि तानि प्रणीतानि विद्वास्तत्र न मुह्यति॥ = कू० पु०

२. यो विष्णुः स तु वै रुद्रो यो रुद्रः स पितामहः।
एका मूर्तिस्त्रयो देवा रुद्रविष्णुपितामहा.॥ = ह० गा०

३. मन्त्रौषधि प्रभावेण विप्राप्रतिहता गतिः।
योजनाना सहस्रं हि दिनार्द्धेनं व्रजाम्यहम्॥ = ६१।१२

कामनया प्रातस्तमतुलेपं पादयोरनुलिप्य तत्प्रभावेण तत्रोपस्थितः। तत्र मध्याह्ने दिनकरकिरणसन्तप्ते हिमे भ्रमतस्तस्य पादलेपो विलीनः, येन सहस्रयोजनगमनशक्तिविनष्टा[1]। तदनु विभ्रष्टपादलेपो जडमतिः स ब्राह्मणः सायंकालीनक्रियालोपात् चिन्तयामास[2]। परमं वैकल्यमुपगतः स गार्हपत्यमग्निं संस्तुत्य तत्कृपया स्वगृहमुपेत्य विधिवत् सायंतनं कृत्यं सम्पादयामास[3]।

## पद्मिनीविद्या

अस्या विद्यायाः प्रभावेण निधयो वशीक्रियन्ते, येन तज्ज्ञातुर्जनस्य कदापि धनस्य न्यूनता न भवति। मार्कण्डेयपुराणे भगवतीपार्वतीद्वारा कलावत्यै अस्या विद्याया दानस्य कथा वर्णितास्ति[4]। ततः सा राज्ञे स्वारोचिषाय तां विद्यां प्रदाय तेन साकं पाणिग्रहणं कृतवती। तदनु पद्मिनीविद्यावशीभूता निधयः स्वदर्थं विविधां भोगसामग्रीमुपस्थापयामासुः[5]।

## सर्वभूतरुतविद्या

विद्याया अस्या महिम्ना मनुष्यः सर्वेषां जीवजन्तूनां ध्वनेरर्थं ज्ञातुं प्रभवन्ति। विद्याधरस्य मन्दारस्य कन्यया विभावर्या विद्येयं स्वारोचिषे

---

१. पादाक्रान्तेन तस्याथ तुहिनेन विलीयता।
प्रक्षालितः पादलेपः परमौषधिसम्भवः॥ = ६१।१९

२. यदि प्रलेपो नष्टो मे विलीनो हिमवारिणा।
शैलोऽतिदुर्गमश्चायं दूरश्चाहमुपागतः॥
प्रधास्यामि क्रियाहानिमग्निशुश्रूषणादिकम्।
कथमत्र करिष्यामि सङ्कटं महादागतम्॥ = ६१।२८.२९

३. ततः क्षणेनैव तदा निजगेहमवाप्य सः।
यथा प्रोक्तं द्विजश्रेष्ठश्चकार सकलाः क्रियाः॥ = ६२।१

४. आज्ञा च निधयः सर्वे करिष्यन्ति तवाहताः।
यथाभिलषितं वित्तं प्रदास्यन्ति च ते शुभे॥
यस्या वत्से प्रभावेण विद्यायास्तां गृहाण मे।
पद्मिनीनाम विद्येयं महापद्माभिपूजिता॥ = ६४।१४.१५

५. सर्वोपभोगरत्नानि मधूनि मधुराणि च।
निधयः समुपाजह्रुः पद्मिन्या वशवर्तिनः॥=६५।२

दायरूपेण प्रदत्ताऽऽसीदिति मार्कण्डेयपुराणतोऽवगन्तव्यम्[1]। मत्स्यपुराणानुसारं राजा ब्रह्मदत्तो भगवतः शिवस्यानुग्रहेणास्या विद्याया ज्ञानेन पिपीलिकादम्पत्योः परस्परं मनोरञ्जकं प्रेमालापं बुबोध[2]।

## अस्त्रग्रामहृदयविद्या

एतद्विद्याद्वारा अस्त्राणां तद्रहस्यं ज्ञायते, येन शत्रूणां पराजयो जायते। एतद्विद्याविज्ञाया एकस्या मनोरमानाम्न्या विद्याधर्याः कथा मार्कण्डेयपुराणे प्रपञ्चिताऽस्ति, यया आक्रमकारिणो राक्षसाद् मुक्तये जलस्पर्शं विधाय राज्ञे स्वारोचिषे विद्यामेतां प्रदाय प्रोक्तम्।[3]

## रक्षोघ्नविद्या

यज्ञानपवित्रीकर्तुमुद्यतानां राक्षसानामुच्चाटनपूर्वकं दूरीकरणायेयं विद्या विख्याताऽस्ति। मार्कण्डेयपुराणे वलाननामकस्य राक्षसस्योच्चाटनमनया विद्यया वर्णितमस्ति[4]।

---

१. किञ्च तुभ्यं प्रदास्यामि सर्वभूतरुतानि ते।
यथाऽभिव्यक्तिमेष्यन्ति प्रसादप्रणवो भव ॥=६४।३

२. ब्रह्मदत्तोऽभिषिक्तः सन् पुरोहितविपश्चिता।
योगवित् सर्वजन्तूनां रुतवेत्ताऽभवत्तदा ॥ = २०।२४
ब्रह्मदत्तोऽप्यशेषं तं ज्ञात्वा विस्मयमागमत्।
सर्वसत्त्वरुतज्ञत्वात् प्रसादाच्चक्रपाणिनः ॥= २०।३७

३. अस्त्रग्रामस्य सर्वस्य हृदयज्ञाहमद्य ते।
तं प्रयच्छामि मा रक्ष रक्षसोऽस्मान् महामते ॥
हृदयं सकलशास्त्राणामशेषरिपुनाशनम्।
तदिदं गृह्यतां शीघ्रमशेषास्त्रपरायणम् ॥
तथेत्युक्ते ततस्तेन वार्युपस्पृश्य तस्य तत्।
अस्त्राणां हृदयं प्रादात् सरहस्यनिवर्तनम् ॥=६३।२४-२६

४. मन्त्रवित् स द्विजश्रेष्ठो यज्ञे यजनतस्य मे।
रक्षोघ्नमन्त्रपठनात् करोत्युच्चाटनं नृप ॥
वयं बुभुक्षितास्तस्य मन्त्रोच्चाटनकर्मणा।
क्व याम. सर्वयज्ञेषु स ऋत्विग् भवति द्विज ॥= ७०।२३-२४

## युवकरणविद्या

अस्या विद्याया प्रभावात् स्पर्शमात्रेण वृद्धः पुमान् युवा भवति। एतद्विशेषज्ञो राजा शन्तनुः यं यं स्पृशतिस्म स स युवा जायतेस्म। तत्कालं परमां शान्तिं च लभतेस्म। तथाहि श्रीमद्भागवते—

> यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः।
> शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ॥ = ९।२२।१३

## देवहूतिविद्या

अनया विद्यया आहूता देवविशेषाः प्रत्यक्षमुपतिष्ठन्तेस्म। महर्षिणा दुर्वाससा कुन्त्यै प्रदत्तया एतया विद्यया स्मृताः सूर्य-धर्म-इन्द्र-वायवः सहसा समुपस्थिता अभूवन्—

> साऽऽप दुर्वाससो विद्यां देवहूतिं प्रतोषितात्।
> तस्या वीर्यं परीक्षार्थमाजुहाव रविं शुचिम् ॥
> तदैवोपागतं देवं वीक्ष्य विस्मयमानसा।
> प्रत्ययार्थं प्रयुक्ता मे याहि देवः नमोऽस्तु ते ॥ = ९।२४।३२-३३

## उल्लापनविद्या

विद्याया अस्याः प्रभावेण कुटिलमपि वस्तु मनोरमं क्रियतेस्म। भगवता श्रीकृष्णेनास्या एव विद्यायाः प्रभावाद् मथुरायां कुब्जां कोमलाङ्गीं सर्वाङ्गसुन्दरीं च चकार। तथाहि विष्णुपुराणे—

> ततस्तां चुबुके शौरिरुल्लापनविधानवित्।
> उत्पाट्य तोलयामास द्व्यङ्गुलेनाग्रपाणिना ॥
> चकर्ष पद्भ्याञ्च तदा ऋजुत्वं केशवोऽनयत्।
> ततः सा ऋजुतां प्राप्ता योषितामभवद् वरा ॥ = ५।२०।९-१०

## परावलाविद्या

इयं सर्वसिद्धिप्रदायिनी विद्या विद्यते। भगवत्या त्रिपुरसुन्दर्या विद्यामिमां सर्वप्रथमं विधिपूर्वकमर्जुनायोपदिदेश। तत्प्रभावात् स सर्वं श्रीकृष्णलीलारहस्यं ज्ञातवानीति पद्मपुराणस्य पातलखण्डे प्रपञ्चितमस्ति—

सद्य सिद्धिकरी बाला विद्या निगदिता परा।
अनेनैव विधानेन क्रियतां मदुपासनम्।
सद्यस्तु कृष्णलीलायामधिकारी भविष्यसि॥
ततश्च ममुपादिष्टो गोलोकादुपरि स्थितम्।
नित्यं वृन्दावनं धाम नित्यं रासमहोत्सवम्॥ = ७४।३६-५०

## बलातिबलाविद्या

एवं वाल्मीकिरामायणस्य बालकाण्डेऽप्यात्मनो यज्ञस्य संरक्षण-प्रसङ्गे विश्वमित्रद्वारा दीयमानायाः श्रमक्षुत्पिपासादिहरायाः बलातिबला-विद्याया चर्चा वर्त्तते। तथाहि श्रीरामं प्रति विश्वामित्रमुनिः—

मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा।
न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः॥
क्षुत्पिपासे न ते राम भविष्येते नरोत्तम।
बलामतिबलां चैव पठतस्तात राघव।
ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः॥ = २२।१३-१८-२१

लिङ्गपुराणानुसारं सर्वकार्यार्थसाधिकायाः शक्रोपकारिण्या प्रजेश्वरी विद्याया अप्युल्लेखो विद्यते, यया राज्ञां सर्वं कार्यं सिध्यति—

शुभा प्रजेश्वरी विद्या ब्राह्मी शक्रोपकारिणी।
अनया सर्वकार्याणि नृपाणामिति न श्रुतम्।
विनियोगं वदन्त्यास्या विद्याया रामहर्षण॥ = ४२।१

ब्रह्मवैवर्तपुराणस्य गणेशखण्डानुसारं जन्ममरणादिनिवर्तिकायाः हरेण साधितायाः संसारमोहिनीविद्याया अपि वर्णनं विद्यते—

संसारमोहिनीं विद्यां जन्ममृत्युहरां हरः।
स्थित्वा चिरं गुरावत्र सर्वविद्या विशेषवान्।
तीर्थं गत्वा मन्त्रसिद्धिं तां च लब्ध्वा जगाम सः॥ = १०।१२

## स्वेच्छाचारविद्या

मार्कण्डेयपुराणे स्वेच्छाचारविद्यायाः प्रसङ्गे प्रोक्तमस्ति यद् यदा मन्दर. स्वभ्रातुः कद्रुस्य वधपरिणामे विद्युद्रूपस्य राक्षसस्य वधं कृत-

वान् तदा सञ्जातसन्त्रासया तत्पत्न्या मेनकाकन्यया मदनिकया कन्धरा-यात्मसमर्पणं कृत्वा एतद्विद्याप्रभावेण स्वेच्छया यक्षिणी भूत्वा तद्गृहे चिरमतिष्ठत् –

> कन्धरस्य च सा वेश्म प्राप्येच्छारूपधारिणी ।
> मेनकातनया सुभ्रूः सौपर्णं रूपमाददे ॥ = २।३०

अपिचास्या एव विद्याया प्रभावेण दुर्गादेव्या सह युद्धावसरे महिषासुरोऽपि स्वेच्छया कदाचित् खड्गहस्तो योद्धा, कदाचित् सिंहः, कदाचिद् गजः, कदाचिच्च महिषो भूत्वा महता सरम्भेण युद्धमकार्षीत् । इति मार्कण्डेयपुराणस्य दुर्गासप्तशतीभागे वर्णितमस्ति—

> ततः सिंहोऽभवत् सद्यो यावत्तस्याम्बिकाशिरः ।
> छिनत्ति तावत् पुरुषः खड्गपाणिरदृश्यत ॥
> तत एवाशु पुरुषं देवी चिच्छेद सायकैः ।
> तं खड्गचर्मणा सार्द्धं ततः सोऽभून्महागजः ॥
> ततो महासुरो भूयो माहिषं रूपमास्थितः ।
> तथैवं क्षोभयामास त्रैलोक्यं सचराचरम् ॥ = ८।३-८०

एवं तत्तत्पुराणेषु विविधचमत्कारकारिणीनां त्वरिताविद्या-कुब्जिकाविद्या मृतसंजीवनीविद्या-स्तम्भन-मोहन-जृम्भणादिविद्यानां सङ्केत उपलभ्यते ।

## विनम्रं समुद्बोधनम्

यथा चार्वाकैः जैनैः बौद्धैश्च हिन्दुधर्मस्य समूलमुन्मूलनं कर्तुं वेदानां पुराणानां च निन्दा समारब्धाऽऽसीत्, तथैव पाश्चात्यशिक्षा-दीक्षासमीक्षासु दत्तादराः कतिपये आधुनिका भारतीया अपि 'पुराणानि पोपकथाः, उपेक्षणीयानि च मन्वाना सोपहासं हेयदृष्ट्याऽवलोकयन्ति ।

यद्यपि पाश्चात्यसमालोचकेषु प्रसिद्धाः समालोचकाः पार्जिटर-कप्तानस्पीक-बेसेन्टस्मिथप्रभृतयो विद्वांसः पुराणानामतुपमं महत्त्वं मन्यन्ते । तथापि 'मिस मेयो' लिखितस्य "मदरइण्डिया" पुस्तकस्य प्रभावेण पाश्चात्ये जगति बहवो जनाः वेदान् पुराणानि चोपेक्षन्ते । स्वामिनो दयानन्दस्य सत्यार्थप्रकाशेन तु नवशिक्षिता भारतीया अपि

युवान पुराणानि सर्वथा उपेक्षन्ते; येन सनातस्य हिन्दुधर्मस्य, सर्व-कल्याणकारिण्या हिन्दुसंस्कृतेः, अतिप्राचीनाया हिन्दुजातेश्चास्तित्वमापद्ग्रस्तमिव विलोक्यते।

साम्प्रतिकशिक्षादीक्षितै र्भारतीयै र्न केवलं वेदाना पुराणानाञ्च परित्याग एव क्रियते, अपितु तदुपदेशविपरीताचरणेन स्वशिशवः शिष्याश्च तथा क्रियन्ते यथा ते वेदपुराणशब्दश्रवणादपि समुद्विजन्ते। संस्कृताभ्यासजुषोऽपि बहवो विद्वांसो वेदाङ्गै रेव तोषमापन्ना न वेद-पुराणयोः स्वाध्याये दत्तादरा दरीदृश्यन्ते, किन्तु साम्प्रतिकभौतिक-विज्ञानचमत्कृतचेतसो भूत्वा लोकपरलोककल्याणकराणि उपदेशप्रदानि च महर्षिवचनानि उपेक्ष्य स्वकीयान् बालकान् शिष्यांश्च वेदपुराण-हीनान् पाश्चात्यशिक्षादीक्षितांश्च विधाय भारतीयसंस्कृतिविमुखान् धर्मविरोधिनो मर्यादाहीनांश्च कुर्वन्ति। यत्र तु प्रातः प्रतिगृहं पुण्यप्रदो मनोहरो वेदपाठः प्रचलतिस्म, यज्ञेष्वाहुतिप्रक्षेपपूर्वकं वेदसमुद्घोषो भवतिस्म, धर्मशास्त्राणि विचार्यन्तेस्म, प्रतिवीथि मधुरं पुराणानां प्रवचनं भवतिस्म तत्रैवाद्यत्वे नित्यकृत्यं विहाय सी, ए, टी, कैट्, आर, ए, टी, रैट् इत्यादय शब्दा श्रवणशष्कुलिं स्फोटयन्तीवोपलभ्यन्ते। किं वक्तव्यं यत्राग्रजानामस्तीदृशी गतिस्तत्रान्येषा का कथा? साम्प्रतिका नवशिक्षिता द्विजबालका परित्यक्तनित्यनैमित्तिककर्मकलापा उज्झितकुलाचार-विचारा वास्तविकसुखपराङ्मुखाः सुखाभासमृगमरीचिकाभ्यासनिरता व्याकुलतया इतस्ततो बम्भ्रम्यमाणा भूयो भूयो लोचनगोचरतामायान्ति चातुवर्ण्यस्य मान्या अपि भूदेवा विच्छिन्नशिखाः परित्यक्तयज्ञोपवीताः समधीताङ्गलभाषाकतिपयाक्षरा वर्णाश्रमधर्मे संशयानाः धनार्जनमात्रल-क्ष्या आत्मनः पूर्वजान् वेदान् पुराणानि शास्त्राणि च कुतर्कजालैराक्षिपन्तो भारतीयसंस्कृतिसम्यतोपासकानां धर्मे श्रद्धानानाञ्च जनानां मनांसि व्यथयन्ति निरन्तरमित्यहो आश्चर्यम्?

भारतीयानां सर्वस्वभूतानां मान्य सत्कर्मधर्मं शमदमादिप्रतिपादकानां वेदपुराणधर्मशास्त्रादिनामध्ययनाध्यापनयोस्तदुदितकर्मानुष्ठानस्य च प्रचार-प्रसारयोरावश्यकतामनुभूय शास्त्रदृष्ट्या वेदपुराणादिप्रतिष्ठापिनेन पथा स्ववृत्तिं सम्पादयन्त. तदुद्धाराय बद्धपरिकराः तपःपूतकलेवरा

द्विजवर्या जगदज्ञानदूरीकरणाय सदालोकभूता देदीप्यमानयशसः कदा-पुनर्दृष्टिगोचरी भविष्यन्तीति भृशं दन्दूयते चेतः। साम्प्रतं ज्ञानवन्तोऽपि अज्ञानिन इव, विद्वांसोऽपि अज्ञा इव, ज्ञातनिखिलतत्त्वा अपि मूका इव, श्रुतसकलशास्त्रा अपि बधिरा इव वैदिकमार्गप्रचारे पुराणप्रवचने शास्त्र-सारश्रवणे चोदासते। एतत् सर्वं साम्प्रतं भारतवर्षस्य दौर्भाग्यमेव मन्ये। अतो वेदशास्त्रपुराणप्रवचनप्रवीणैः विद्विद्भिर्वेदविचारपूर्वकं पुराणानां प्रवचनाय प्रचाराय प्रसाराय च बद्धपरिकरैर्भाव्यमिति मेऽस्ति पौराणिकानां विदुषां समक्षे विनम्रमभ्यर्थनम्।

यथा भगवत्पूज्यपादैः श्रीस्वामिशंकराचार्यमहोदयैः कुमारिलभट्ट-शबरस्वामिप्रभृतिभिश्च तर्कपूर्णानि प्रमाणपुष्टानि शास्त्रलोकसम्मतानि चानेकानि ग्रन्थरत्नानि लिखित्वा चार्वाकबौद्धजैनानां पाखण्डमयं प्रलापं खण्डयित्वा वेदस्य वैजयन्ती समस्ते देशे प्रासार्यत, यैरद्यत्वेऽपि हिन्दुधर्मस्य संस्कारः अस्माकं धमनीषु सञ्चरति, तथैव वास्तविकशास्त्ररहस्य-मर्मज्ञैर्विशिष्टैः विद्वद्भिः वेद पुराणनिन्दकानामनर्गलैः प्रलापैर्दुष्यमाणां भारतीयसंस्कृतिम्, वैदिकमनादिसनातनधर्मम्, हिन्दूजातिं च संरक्षितुं पुराणनिहितानि सर्वेषां हितकारीणि सर्वोपयोगीनि वैज्ञानिकतत्त्वानि सर्वेषां समक्षे उपस्थापनीयानि, येन वास्तविकस्थितिमवगम्य जनाः सांप्रतमपि सन्मार्गे प्रवर्तेरन्, विरमेयुश्चासन्मार्गात्, प्रसरेच्च संस्कृत-सेवकानां महदौदार्यम्। समस्ते च भूमण्डले सम्यक् शान्तिसञ्चारद्वारा शाश्वतं सुखं समुपतिष्ठेत, राष्ट्रस्य च वास्तविकं कल्याणं स्यात्।

स्वस्ति प्रजाभ्यः परिपालयन्तां न्यायेन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु॥
शान्तिः! शान्तिः!! शान्तिः!!!



# परिशिष्टम्

## (१) सुकन्या-च्यवनचरितम्

वैवस्वतमनोः पुत्रो राजा शर्यातिः महान् ब्रह्मिष्ठो विद्वान् बभूव। तस्यैका कमललोचना सुकन्यानाम्नी कन्याऽऽसीत्। एकदा सपरिजनो राजा वने वम्भ्रम्यमाणो महर्षेश्च्यवनस्याश्रमे समुपतस्थे। तत्र सुकन्या स्वसखीभिः साकमरण्यस्य सुषुमामवलोकयन्ती एकत्र वल्मीकरन्ध्रे खद्योते इव देदीप्यमाने ज्योतिषी दृष्टवती। दैवप्रेरणया तया बालसुलभचापल्यात् कण्टकेनैकेन ते ज्योतिषी विद्धे, येन ताभ्यामधिकं रुधिरं सुस्राव। ततः शर्यातेः सैनिकानां मलमूत्रनिरोधोऽजायत। तेनाश्चर्यचकितो राजा तानपृच्छत्-किं भो युष्माभि र्महर्षि च्यवनं प्रति कश्चन दुर्व्यवहारो विहितः ?। ततः सुकन्या भीता सती पितरमुवाच-तात ! अजानन्त्या मया कण्टकेन ज्योतिषी द्वे भिन्ने। दुहितुस्तद्वचो निशम्य जातसाध्वसः शर्यातिः वल्मीकान्तर्गतं च्यवनमुनिं स्तुतिभिः प्रसादयामास। तदनन्तरं तस्याभिप्रायं ज्ञात्वा स सेवार्थं स्वतनयां सुकन्यां तस्मै समर्प्य तदनुमत्या स्वनगरं प्रत्याजगाम। सुकन्या च सुलभकोपं तं मुनिं पतित्वेनावाप्य सावधानेन मनसा तदनुकूलवृत्या सेवमानाऽसन्तोषयत्।

किञ्चित्कालानन्तरं स्वाश्रमे समागतौ स्वर्वैद्यावश्वनीकुमारौ ज्ञात्वा च्यवनमुनिना तयो र्यथोचितं सत्कारं कृत्वा तौ प्रार्थितौ-भवन्तौ समर्थौ स्तोऽतो मह्यं प्रमदाजनयोग्यं यौवनं प्रदातुमनुग्रहं कुरुथ। अहं हि यज्ञेषु युवां सोमयागाधिकारिणौ विधास्ये। ततस्तौ वैद्यशिरोमणी बाढमित्युक्त्वा महर्षिमाहतुः- मुने ! इदं सिद्धै र्निर्मितं कुण्डमस्ति। भवानत्र स्नात्वित्यादिश्य च तेन सह तस्मिन् कुण्डे प्रविष्टौ। तत्क्षणमतिसुन्दराकृतयः समानरूपवयसः त्रयः पुरुषाः कुण्डान्निर्गताः। साध्वी सुकन्या तान् त्रीनप्येकरूपानवलोक्य स्वं पतिमपरिचिन्वाना अश्विनोः शरणं गतवती, तस्याः पातिव्रत्येन सन्तुष्टौ तौ तस्याः तत्पतिं निर्दिश्य मुनेःआज्ञामादाय त्रिविष्टपं जग्मतुः। ततो मुनिस्तया सार्द्धं सुखेन समयं यापयामास।

कियद्दिनानन्तरं यज्ञं कर्तुकामनया राजा शर्यातिः च्यवनमुनेराश्रमे गत्वा दुहितुः पार्श्वे दिव्यमेकं पुरुषमवलोक्य सन्दिहानस्तामवोचत्-

चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ।
यत्त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम् ॥
कथं मतिस्तेऽवगताऽन्यथा सतां कुलप्रसूते: कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः ॥
(श्रीमद्भागवते ९।३।२०,२१)

एवं ब्रुवाण पितरं स्मयमानमुखाम्बुजा सुकन्या तात! एष ते जामाता भृगुनन्दनो महर्षिश्च्यवन एवास्त्युक्त्वा तद्रूपवय:प्राप्तिकारण कथयामास। तत् सर्वमाकर्ण्य राजा विस्मयमान. गले गृहीत्वा प्रशंसन् प्रेम्णा-तां परिषस्वजे—विस्मित. परमः प्रीतस्तनयां परिषस्वजे । ९।३।२॥

ततश्च्यवनेन महर्षिणा राज्ञः शर्याते यज्ञानुष्ठाने असोमपावपि अश्विनौ स्वप्रभावेण सोमपायिनौ कृतौ, तेन रुष्टो महेन्द्रः शर्यातिं हन्तुं हस्ते वज्रं गृहीतवान्, ततो महर्षिश्च्यवनश्च वज्रेण सहैवेन्द्रस्य बाहुं स्तम्भयामास—

हन्तुं तमाददे वज्रं सद्यो मन्युरमर्षितः ।
सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः॥९।३।२४

ततस्ते देवा यज्ञेषु अश्विभ्यामपि सोमभागं दातु स्वीकृतवन्तो यैः पूर्वं वैद्याविति मत्वा सोमपानाद् बहिष्कृतौ कृतावास्ताम् ।

## (२) अम्बरीषचरितम्

वैवस्वतमनोः पौत्रस्य नाभागस्य पुत्रो राजाऽम्बरीषः सप्तद्वीपवतीं महीमव्ययां श्रियमतुलमैश्वर्यञ्च लब्ध्वापि सर्वं स्वप्नतुल्यं मन्यतेस्म। भगवति श्रीकृष्णे तद्भक्तेषु च तस्य परमा प्रीतिरासीत्। स हि भगवतः प्रसन्नतायै मनोवाक्कायकर्मभि. कार्यं कुर्वन् भगवद्भक्तानां ब्राह्मणाना-माज्ञानुसारं पृथिवीं प्रशशास, प्रजाश्च पालयामास। तपोमयेन भक्तियोगेन स्वधर्मेण च भगवन्तं प्रसादयितुं सर्वा आसक्तीः परित्यज्य व्यवहरतिस्म। तस्यानन्यया प्रेममय्या भक्त्या प्रसन्नो भगवान् तद्रक्षायै स्वं सुदर्शनचक्रं नियुक्तवानासीत्।

एकदा स धर्मशीलया भक्तिपरायणया स्वभार्यया सह भगवतः श्रीकृष्णस्य आराधनायै वार्षिकं द्वादशीप्रधानमेकादशीव्रतं कर्तुं नियमं कृतवान्। व्रतान्ते कार्तिके मासि निराहारमुपोष्य कालिन्द्यां स्नात्वा मधुवने हरिम-र्चयित्वा ब्राह्मणान् सम्पूज्य तेभ्यो गवादिकं प्रदाय च तदाज्ञया यावद्

व्रतपारणं कर्तुमुद्यतस्तावदेव दुर्वासा मुनिरतिथित्वेनोपतस्थे। राजा तमवलोक्योत्थायाभिनन्द्यासने समुपवेश्य च तस्य विधिवत्सपर्यां विधाय भोजनाय प्रार्थितवान्। तत् स्वीकृत्य मुनिरावश्यककर्मनिवृत्तये यमुनातटे जगाम। तत्र स्नाने ब्रह्मध्याने च विलम्बो जातः।

इतो द्वादशीपारणे घटिकामात्रेऽवशिष्टे धर्मज्ञो नृपो ब्राह्मणैः साकं परामृश्य प्रोक्तवान्–विप्राः! निमन्त्रितं ब्राह्मणमभोजयित्वा स्वयं भोजनकरणं द्वादश्यामपारणं वेतिद्वयमस्ति दोषावहम्। अत इदानीं यदनुष्ठानेन मे कल्याणं स्याद् यथा वा पापं मां मास्पृशेत् तथैवाज्ञेयम्। श्रुतावब्भक्षणं भोजनमभोजनं चेत्युभयमप्युक्तमस्ति। अतो मया केवलेन जलेनैव पारणं कर्तव्यम्। इत्येवं निश्चित्य स मनसा हरिं चिन्तयन् चरणोदकं पीत्वा दुर्वाससं प्रतीक्षमाणोऽतिष्ठत्। कृतावश्यककृत्यो मुनिः कालिन्दीकूलात् परावृत्य राजानं प्रसन्नं वीक्ष्यानेन पारणं कृतमित्यनुमीय क्रोधात् कम्पमानो भृकुटीकुटिलाननः सन् राजानमुवाच—मामातिथ्येन निमन्त्र्य त्वं स्वयं भुङ्क्त्वा धर्मव्यतिकरं कृतवानसि। अतः सद्यस्तत्फलं दर्शयिष्ये। ततः शिरस एकां जटामुत्कृत्य तया तं निहन्तुं कृत्यामुत्पादयामास। सा च अम्बरीषं दग्धुं यदा प्राद्रवत्, तदा तद्रक्षणार्थं पूर्वतो नियुक्तं सुदर्शनं चक्रं तां भस्मसात् कृत्वा दुर्वाससमेवान्वधावत्। आत्मन्यनुधावता तेन चक्रेण भयभीतः स आत्मरक्षार्थं पलाययामास। गिरिगुहासु, आकाशे, पाताले, स्वर्लोके वा, यत्र यत्र गच्छतिस्म, तत्र तत्रासह्यतेजसं सुदर्शनं पश्चात् प्रधावदपश्यत्। यदा तेन कुत्रापि कश्चन रक्षको न लब्धस्तदा ब्रह्मलोकमुपेत्य ब्रह्मा प्रार्थितः। स चोवाच-मुने! भवादयो वयं यस्याज्ञां शिरोधार्यं कृत्वा विश्वस्य हितं कुर्मः तस्य द्रोहिणं त्रातुं न समर्थाः स्मः–

> अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः।
> सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः॥९।४।५४

एवमुक्त्वा विरञ्चिना प्रत्याख्यातो विष्णुचक्रोपतापितो दुर्वासा मुनिः कैलासवासिनं भगवन्तं शिवं शरणं ययौ। सोऽप्यात्मनोऽसामर्थ्यं प्रकटयन् विष्णोः शरणमेवोपायमुपादिशत्—

> अहं सनत्कुमारश्च नारदो भगवानजः।
> मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शिनः॥
> विदामो न वयं सर्वे यन्मायां माययावृताः।
> तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः।
> तमेव शरणं याहि हरिस्ते शं विधास्यति॥९।४।५७-५९

ततोऽपि निराशीभूय दुर्वासा मुनि वैकुण्ठमुपेत्य भगवतो लक्ष्मीपतेश्चरणयोः पतित्वा—

> अजनता ते परमानुभावं कृतं मयाऽघं भवतः प्रियाणाम् ।
> विधेहि तस्यापचितिं विधात र्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥९।४।६२

ततो भगवता प्रोक्तम्-महर्षे ! अहं हि परतन्त्रः पक्षीव सर्वथा भक्तानामधीनोऽस्मि साधुभि र्भक्तै र्ममहृदयमाकृष्टं विद्यते । भक्तानामहमेकमात्रमाश्रयोऽस्मि । साधुस्वभावान् भक्तान् विहायाहमर्द्धाङ्गिनीं लक्ष्मीमपि न वाञ्छामि । ये पुत्र-कलत्रधनधान्यादिकं विहाय मे शरणमागतास्तान् त्यक्तुं कथमहमुत्सहे । मुने ! किमधिकमहं वच्मि प्रेमिणो भक्ता मे हृदयं सन्ति, तेषां च हृदयमहमस्मि । ते यथा मदतिरिक्तं किमपि न जानन्ति तथैवाहमपि तदतिरिक्तं किमपि न जानामि । अतो भवतः कल्याणायोपायं निर्दिशामि-यस्यानिष्टेच्छया तवेदं सङ्कटमुपस्थितं तस्यैव नाभागनन्दनस्याम्बरीषस्यान्तिके गत्वा क्षमां प्रार्थय तदैव ते शान्तिर्भविष्यति, नान्यथा तेऽस्ति कल्याणम्—

> ब्रह्म तद् गच्छ भद्रं ते नाभागतनयं नृपम् ।
> क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥९।४।७१

ततो भगवदाज्ञानुसार पुनः सोऽम्बरीषमुपेत्य दुःखितः सन् तच्चरणौ जग्राह । तेन लज्जितो दयाविष्टश्च राजा सुदर्शनं संस्तुवन्नवोचत्-चक्र ! विश्वम्भरेण विश्वरक्षार्थमेव त्वं धृतमसि । भवन्तं न कोऽपि विजेतुं शक्नोति । अतः कृपया मम कुलस्य कल्याणाय दुर्वाससः कल्याणं कृत्वा मय्यनुग्रहं कुरुष्व । यदि मया किञ्चिद्दानं दत्तम्, यज्ञोऽनुष्ठितः, धर्मो वा विहितः स्यात्, यदि वा मे वंशजा ब्राह्मणानेवात्मन आराध्यान् मन्यन्ते तर्हि त्वत्तो महर्षेः दुर्वाससो ज्वलनं शान्तं भवेत्—

> स त्वं जगत्त्राण खलप्रहाणये निरूपितः सर्वसहो गदाभृता ।
> विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥९।५।६

एवं प्रार्थनया यदा सुदर्शनं शान्तमजायत तदा मुनिरम्बरीषायाशीर्वादं दत्वा तं प्रशंसन्नुवाच-राजन् ! अद्याहं भगवद्भक्तानां महिमानं व्यलोकयम्, त्वं धन्योऽसि, तव हृदयं विशालं करुणापूर्णञ्चास्ति, मया तेऽपराधः, कृतः, त्वयाच मे प्राणान् संरक्षता मयि महाननुग्रहो विहितः । इदानीं यावद् मुनेः प्रत्यागमनं प्रतीक्षमाणः स भोजनं न कृतवानासीत् । दुर्वासः

चरणावुपगृह्य तं प्रसाद्य विधिवद् भोजनेनातर्पयत्। ततो भवताऽपि भुज्यतामित्यादिश्य तदनुमत्या ब्रह्मलोकं गते मुनौ राजाऽपि तदत्रशिष्टं पवित्रमन्नं भुङ्क्त्वा परमः प्रसन्नो जातः।

## (३) हरिश्चन्द्रोपाख्यानम

त्रिशङ्कुपुत्रो राजा हरिश्चन्द्रोऽनपत्यत्वाद् विषण्णवदन आसीत्। स देवर्षेर्नारदस्योपदेशाद् वरुणस्य शरणं गत्वा प्रार्थयत्-प्रभो! मम पुत्रो जायताम्। यदि मे वीरः पुत्रो भविष्यति, तर्हि तेनैव त्वां यक्ष्यामि। बाढमित्युक्त्वाङ्गीकृतवतो वरुणस्य कृपया हरिश्चन्द्रस्य रोहितनामकः पुत्रोऽजायत। पुत्रोत्पत्त्यनन्तरं वरुणेनागत्येदानीं यजस्वेति प्रेरितो हरिश्चन्द्रोऽब्रवीत्-यदायं ते यज्ञपशुर्दशदिनेभ्योऽधिको भविष्यति, तदा यज्ञयोग्यो भविष्यति। दशदिनानन्तरं पुनरागत्य वरुण.—इदानीं मम यज्ञो-विधीयतामित्युक्तवान्। राज्ञा प्रोक्तम् पशुमुखे यदा दन्ता निर्गमिष्यन्ति तदा यक्ष्यामि। निःसृतेषु दन्तेषु भूय उपेत्य वरुणेन दन्ता निर्गता, अतो मां यजस्वेत्युक्तो राज्ञा कथितम्-यदा ते दन्ताः पतिष्यन्ति तदायं पशुः यज्ञयोग्यो भविष्यति। पतितेषु दन्तेषु पुनरुपेत्य वरुणः-पतिता दन्ता यजस्वेति प्रैरयत् तदा राज्ञा प्रोक्तम्, यदा पुनर्दन्ता उत्पत्स्यन्ते तदायं पशुः मेध्यो भविष्यन्ति। पुनर्जातेषु दन्तेषूपेत्य यदा वरुणः पुनर्जाता दन्ता यजस्वेत्यकथयत्, तदा राज्ञा प्रोक्तम्-कवचधारी यज्ञीयपशुः योग्यः पवित्रश्च भवतीत्येव पुत्रस्नेहपाशनियन्त्रितो हरिश्चन्द्रः भूयो भूयो वरुणस्य समयं व्यतियापयामास।

यदा रोहितः पित्रा क्रियमाणमात्मबलिदानं ज्ञातवान् तदाऽऽत्मप्राण-रक्षणार्थं धनुष्पाणिररण्यमाशिश्रिये। कियद्दिनानन्तरं तेन श्रुत यद् वरुणेनाक्रान्तः पिता जलोदररोगेण व्यथते। यदासौ गृहं प्रति प्रचलित-स्तदा देवेन्द्रेण प्रतिषेधं विधाय प्रोक्तम्-वत्स! यज्ञपशुर्भूत्वा मरणापेक्षया पवित्रतीर्थक्षेत्रादिसेवनपूर्वकं पृथिव्यां पर्यटनं श्रेयस्करमस्ति। एवमि-न्द्रवचो मत्वा स वर्षपर्यन्तं वनेऽवसत्। द्वितीये, तृतीये, चतुर्थे, पञ्चमे वा वर्षे रोहितः पितुरन्तिके गन्तुं यदा यदा विचारं कृतवान् तदा तदा वृत्रहा वृद्धब्राह्मणरूपेणोपस्थाय निषिद्धवान्। एवं षड्वर्षाणि वने उषित्वा सप्तमे वर्षे गृहे परावर्तमानो रोहितोऽजीगर्तस्य मध्यम पुत्रं शुन शेपं क्रीत्वा

यज्ञपशुनिर्माणाय पित्रे समर्प्य तच्चरणयोः प्रणनाम। ततो यशस्वी राजा हरिश्चन्द्रो जलोदररोगान्मुक्तः पुरुषमेधयज्ञद्वारा वरुणादीन् देवानयजत्। तस्मिन् यज्ञे विश्वामित्रो होता, जमदग्निरध्वर्युः, वसिष्ठो ब्रह्मा, अयास्यश्च सामगोऽभवत्। तेन प्रसन्न इन्द्रो हरिश्चन्द्राय स्वर्णमयमेकं रथं दत्तवान्—

> शुनः शेप पशुं पित्रे प्रदाय समवन्दत।
> ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः॥
> मुक्तोदरोऽयजद् देवान् वरुणादीन् महत्कथः।
> विश्वामित्रोऽभवत्तस्मिन् होता चाध्वर्युरात्मवान्॥
> जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्य सामगः।
> तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम्॥९।७।२१-२३

## (४) सौदासचरितम्

एकदा सुदासपुत्रेण राज्ञा सौदासेन मृगयार्थं वनमुपेत्य एको राक्षसो निहतस्तद्भ्राता च परित्यक्तः। स हि प्रतिचिकीर्षया सूदरूपधरस्तद्गृहे स्थितः। यदा वसिष्ठो भोक्तुं राजगृहे गतस्तदा तेन सूदेन मानवमांसं पक्त्वा भोजने पर्यवेपयत्। यदा वसिष्ठेन तन्नितान्तमभक्ष्यं दृष्टं तदा क्रुद्धेन तेन राक्षसो भवितुं शापो दत्तः। पश्चाद् रक्षःकृतं तद् विदित्वा केवलं द्वादशवार्षिकं चक्रे। तदा सौदासोऽपि अञ्जलौ जलं गृहीत्वा वसिष्ठाय शाप दातुमुद्यतः, किन्तु तत्पत्न्या मदयन्त्या निषिद्धः। तदा तेन सर्वं जीवमयं विचार्य तत्तीक्ष्णं जलं स्वपादयोः प्रक्षिप्तं तेन तत्पादौ कृष्णवर्णौ जातौ, अतस्तन्नाम कल्माषपादोऽप्यजायत। ततः स राक्षसो भूत्वैकस्मिन् दिने सहवासायोद्यतौ द्विजदम्पती दृष्ट्वा तयोर्मध्ये यदा ब्राह्मणमगृह्णात् तदा ब्राह्मण्या प्रोक्तम्-राजन्! न त्वं राक्षसोऽसि, त्वं हि मदयन्त्याः पतिरिक्ष्वाकुवंशीयो वीरोऽसि, त्वया नैवमधर्मो विधेयः। आवयोः सन्ततिकामना साम्प्रतमपूर्णैवास्ते। अतो मह्यं मे ब्राह्मणं पतिं देहि। एनं विनाहं क्षणमात्रमपि न जीविष्यामि। एवं करुणापूर्णवाण्याऽनाथवद् विलपन्ती सा मुक्तकण्ठ रुरोद, किन्तु शापग्रस्तत्वात् स किमपि ध्यानमदत्वा व्याघ्रः पशुमिव ब्राह्मणमभक्षयत्। गर्भाधानाय प्रस्तुतं पतिं तेन भक्षितं दृष्ट्वा क्रुद्धा ब्राह्मणी तमशपत्—अरे पापिन्! अपूर्णकामाया मे पतिस्त्वया भक्षितः। अतो यदा त्वं स्त्रीसहवासं करिष्यसि, तदा ते मृत्युर्भविष्यति।

एवं शप्त्वा सा समिद्धतमेऽग्नौ पत्युः शरीरं प्रक्षिप्य स्वयमपि तत्र सती बभूव—

> एवं मित्रसहं शप्त्वा पतिलोकपरायणा।
> तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ॥९।९।३६

द्वादशवर्षान्ते शापविमुक्तोऽसौ सौदासो यदा सहवासाय स्वां पत्नीं मदयन्तीमुपतस्थे, तदा सा ब्राह्मणीशापं जानन्ती तं निवारयामास। ततः स्त्रीसुखवञ्चितः सौदासः स्वकर्मफलस्वरूपेणानपत्यो बभूव। तदा तदनुमतेन कुलगुरुणा वसिष्ठेन नियोगविधिना मदयन्त्यां गर्भाधानमकरोत्। यदा सप्तवर्षपर्यन्तं गर्भं बिभ्राणायास्तस्याः सन्ततिर्नोत्पन्ना तदा, वशिष्ठेनाश्मना तदुदरे आघातः कृतः। ततो बालक उत्पन्नः। अश्मन आघातेनोत्पद्यमानत्वात्तस्य नामाश्मको जातः—

> तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणा प्रजा.।
> वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥
>
> स वै सप्त समाः गर्भमबिभ्रन्न व्यजायत।
> जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥९।९।३८-३९

## (५) सौभरिचरितम्

राज्ञो युवनाश्वस्य पुत्रो मान्धाता चक्रवर्ती राजा बभूव। स भगवत्तेजसातितेजस्वी भूत्वा सप्तद्वीपां पृथ्वीं प्रशशास। यतः सूर्य उदेति, यत्र चास्तमेति, स सर्वो भूभागो मान्धातुरधिकारे आसीत्—

> यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः।
> सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥
>
> यावत् सूर्य उदेतिस्म यावच्च प्रतितिष्ठति।
> तत् सर्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥९।६।३४-३७

मान्धातुर्भार्यायां शशबिन्दोः पुरुकुत्साम्बरीषमुचुकुन्दनामानस्त्रयः तनयाः, पञ्चाशत् कन्यकाश्चाभूवन्। ताभिः सर्वाभिरेक एव सौभरिऋषिः पतित्वेन वृत आसीत्। तद्यथा परमतेजस्वी सौभरिर्मुनिर्यमुनाजले स्नात्वा तत्तटे तपस्यतिस्म। स्वपत्नीभिः सह सुखेन भ्रमन्तमेकं

मत्स्यमवलोक्य तस्य मनस्यपि विवाहेच्छा जागृता, ततः स राज्ञो मान्धातुः समीपमुपत्यैकां कन्यामजाचत। तदुत्तरे राज्ञा कथितम्—ब्रह्मन्! या भवन्तं स्वेच्छया वृणुयात्तां कन्यां भवान् गृह्णातु। ततः ऋषिणा मनसि विचारितं यद्रजा मां वृद्धं वलीपलितशिरस्कञ्चावलोक्यैवमुक्तवान्। अस्तु—अहमात्मानमेवं सुन्दरं निर्मास्यामि, येन का राजकन्यकाः प्रत्युत देवाङ्गना अपि मुग्धा भविष्यन्ति। एवं विचार्य स तथैव कृत्वाऽन्तःपुररक्षकेन साकं कन्यान्तःपुरे समुपस्थितः। दृष्टमात्रमेवैकं तं समा अपि राजकन्यकाः पतित्वेन वृतवत्यः। तद्गतचेतसां तासां सौहार्दमपोह्यायं ममैव योग्यः, न तवेति वदन्तीनां परस्परं कोलाहलः समजनि। सौभरिणा च तासां सर्वासां पाणिग्रहणं कृत्वा स्वतपःप्रभावेण सम्यक् सुसज्जितेपु गृहेपु रमणीयेपूपवनेपु गिरिगुहासु निर्मलेपु जलाशयेपु सौगन्धिकेपु काननेपु च अनर्घ्यशय्यासनवस्त्रालंकारस्नानानुलेपनपुष्पमालादिद्वारा ताभिः सह बहुतिथं कालं निनाय। तदनन्तरं स्वकन्या द्रष्टुकामो मान्धाता वनमुपेत्य सौभरेरेतद् गृहस्थसुखमवलोक्य विस्मितो जातः।

अथैकस्मिन् दिने सौभरिः ऋषिः स्वस्थेन चेतसोपविष्टश्चिन्तयामास-अहो! अहं महान् तपस्वी आसम्, मया सम्यग्व्रतानुष्ठानमपि कृतम्, पश्यत, ममाधःपातम्। मया दीर्घकालात् स्वतेजोऽक्षुण्णं रक्षितमासीत्, परन्तु जले विहरतां मत्स्यानां संसर्गेण मे तद् ब्रह्मतेजो विनष्टम्। अतोमोक्षेच्छुना पुंसा भोगिना प्राणिनां सङ्गः सर्वथा वर्जनीयः—

> अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य।
> अन्तर्जले वारिचरप्रसङ्गात् प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥९।६।५०

इत्येवं विचार्य विरक्तो भूत्वा सन्यासं च गृहीत्वा स वनं जगाम। पतिमेव सर्वस्वं मन्यमानाः तस्य पत्न्योऽपि तेन सहैव वनयात्रामकार्षुः। तत्र संयमपूर्वकं सौभरिर्घोरं तपस्तप्त्वाऽऽत्मानं परमात्मनि विलयाञ्चकार। ततस्तत्पत्न्योऽपि पञ्चाशत् राज्ञो मान्धातुः पुत्र्योः मुनेराध्यात्मिकीं गतिं विलोक्य तस्मिन्नेव विलीना अभूवन्।

## (६) उर्वशी-पुरूरवसोराख्यानम्

इन्द्रसभायामेकदा देवर्षिणा नारदेन वर्ण्यमानान् राज्ञः पुरूरवसोरूपगुणोदार्यशीलसम्पत्तिपराक्रमादीनाकर्ण्योर्वशीहृदये कामभावस्योदयो

जातः। ततः स्मरार्दिता सा यदा तदन्तिकमुपेयाय तदा तां विलोक्य हर्षोत्फुल्ललोचनः स मधुरया वाचाऽवोचत्—देवि ! ते स्वागतमस्ति, इहास्यताम्, कथय कां ते सेवां कुर्याम् ? त्वं मया सह शाश्वतीः समा विहारं कुरु। तत उर्वश्या अभिहितम्—राजन् ! भवान् सौन्दर्यस्य मूर्तिमत् स्वरूपमस्ति, कस्या वा कामिन्या मनोदृष्टिः भवति न सक्ते। सौम्य ! यो हि पुरुषो रूपगुणशीलादिद्वारा प्रशंसनीयो भवति, स एव भवति कामिनीनामभीष्टः, किन्तु ममैकोऽस्ति पणवन्धो महान्—एतौ मे प्रियावुरणकौ भवते समर्पयामि, भवतैनौ न कदापि विस्मरणीयौ, अहं हि केवलं घृतं भक्ष्ये तथा मैथुनादन्यत्र भवन्तं नग्नं नेक्षिष्ये। मनस्विना पुरूरवसा तथेत्युक्त्वा स्वीकृतमुक्तञ्च—सुन्दरि ! तवेदमपूर्वं सौन्दर्यं लोकविमोहनमलौकिकं भावं चावलोक्य को वा मानवः स्वयमागतां त्वां न सेवेत। ततः पद्मकिञ्जल्कगन्धा सोर्वशी कामशास्त्रोक्तपद्धत्या सुरविहारेषु स्थलेषु, चैत्ररथनन्दनवनादिषु च तेन सह बहुवर्षपर्यन्तं स्वच्छन्दं सानन्दं च रेमे।

इत इन्द्र उर्वशीमनवलोक्य गन्धर्वानादिशद् यत्तां विना स्वर्गो उदास्ते। अतो युष्माभिः तामानेतुं प्रयत्यताम्। ततस्ते निशीथे महान्धकारे तत्रोपस्थाय राज्ञः समीपे न्यासीकृतावुर्वश्या उरणकौ जह्रुः। उर्वशी गन्धर्वैर्नीयमानयोः पुत्रसमयोर्मेषयोराक्रन्दितं श्रुत्वा प्रोक्तवती—हा, एनं वीरमानिनं कुनाथं स्वपतिं मत्वाऽहं हताऽस्मि। अस्मिन् विश्वासात्मे मेषौ दस्युभिः ह्रियेते। अयं दिवाऽऽत्मानं पुमांसं मन्यते, निशि चनारीव सन्त्रस्तः शेते। एवमङ्कुशेन कुञ्जर इव वाग्बाणैर्विद्धः क्रुद्धश्च पुरूरवा हस्तेऽसिं गृहीत्वा नग्नावस्थायामेवताननुधावन्। गन्धर्वैस्तत्र मेषौ त्यक्त्वा स्वयं विद्युत इव व्यद्योतन्त। मेषावादाय परावर्तमानं पुरूरवसमुर्वशी तत्र प्रकाशे नग्नं निरीक्ष्य तत्क्षणमेव तं त्यक्त्वा स्वर्जगाम।

परावृतः पुरूरवाः यदा स्वशयनागारे तामुर्वशीं न व्यलोकयत्तदा तदर्थं शोकविह्वलो जातस्तयोन्मत्तवन्महीं बभ्राम। एकदा कुरुक्षेत्रे सरस्वत्यास्तटे पञ्चसखीभिः साकं दृष्ट्वा प्रहृष्टहृदयस्तामुवाच—प्रिये ! तिष्ठ,तिष्ठ, मां त्यक्तुं नार्हसि, त्वां विना मदीयमिदं सुन्दरं शरीरं तव परयन्त्या एव पतिष्यति। तत उर्वशी प्रोवाच—राजन् ! त्वं पुरुषोऽसि मैव कृथाः।

स्त्रियो हि अकरुणाः क्रूराः प्रियसहसाश्च भवन्ति। अल्पेऽप्यर्थे विरसाः सत्यो विश्रब्धं पतिं भ्रातरं वा घ्नन्ति। धैर्यं धारय, त्वं राजेश्वरोऽसि प्रतिवर्षान्ते एकस्यां निशि आवयोः नूनं सङ्गमो भविष्यति। तदा अन्या अपि सन्ततयो भविष्यन्ति—

> स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः।
> घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ।।
>
> संवत्सरान्ते हि भवानेकरात्रं मयेश्वर।
> वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि च ते ।।६।१४।३७-३९

ततः स तां गर्भवतीं ज्ञात्वा स्वराजधान्यां परावृत्तः। वर्षान्तरं स पुनस्तत्र गतः तावत् सा वीरपुत्रवती जाताऽऽसीत्। उर्वश्याः सङ्गमेन तस्य महत् सुखं जातम्, स तया सहैकां निशामुवास। प्रातर्गन्तुमुद्यतं विरहातुरं तमुर्वशी प्राह—प्रियतम! त्वं गन्धर्वान् स्तुहि प्रसन्नास्ते तुभ्यं मां दातुं शक्नुवन्ति। ततः स तानस्तौषीत् प्रसन्नास्ते तस्मै एकामग्निस्थालीं ददुः। स हि तामेवोर्वशीं मन्यमानो वनाद् वनान्तरे बभ्राम। यदा तस्य वास्तविकं ज्ञानं जातं तदा स तामग्निस्थालीं परित्यज्य स्वगृहं परावृत्योर्वशीं ध्यायन् समयं यापयामास।

एवं यदा त्रेतायुगस्यारम्भोऽभवत्तदा तस्य हृदये त्रयोवेदा आविर्भूताः, पुनः स तत्र गतवान् यत्र तेनाग्निस्थाली परित्यक्ताऽऽसीत्। तत्रोद्भूतं शमीगर्भमश्वत्थं दृष्ट्वा तेन द्वे अरणी कृत्वा उर्वशीलोककामनया अधरारणिमुर्वशीमुत्तरारणिमात्मानमुभयोर्मध्ये काष्ठञ्च पुत्ररूपेण विचिन्तयन् अग्निप्रज्वालकेन मन्त्रेण मन्थनं कृतवान्। तस्य मन्थनाद् जातवेदानामकोऽग्निः प्रकटितः। ततस्तेन राज्ञा पुरूरवसाऽग्निदेवः त्रयीविद्याद्वारा-आहवनीय-गार्हपत्य-दक्षिणाग्निरूपेण विभज्य पुत्रत्वेन कल्पितः। पुनरुर्वशीलोकमिच्छन् स तैस्त्रिभिरग्निभिः सर्वदेवमयस्येन्द्रियातीतस्य यज्ञपतेर्भगवतो हरेर्यजनं कृतवान्।

त्रेतायुगात् पूर्वं सत्ययुगे एकमात्रं प्रणव एव वेदः आसीत्, एकमात्रं नारायण एव देवताऽऽसीत्, अग्निरपि केवल एक एवासीत्, किन्तु त्रेतारम्भे पुरूरवोद्वारैव वेदत्रय्या अग्नित्रय्या आविर्भावो जातः। एवं राज्ञा पुरूरवसाऽग्निं सन्ततिरूपेण स्वीकृत्य गन्धर्वलोकमुपेयिवान्—

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः।
देवो नारायणो नान्यः एकोऽग्निर्वर्ण एव च।

पुरूरवस एवासीत् त्रयी त्रेतामुखे नृपः॥
अग्निना प्रजया राजा लोकं गान्धर्वमीयिवान् ॥९।१४।४८-४९

## (७.८) मान्धातृ-विदर्भयोरुत्पत्तिवर्णनम्

(१) सेनजित्पुत्रो राजा युवनाश्वः सन्ततिहीन आसीत्। अतः स दुःखीभूय स्वस्त्रीभिः साकं वनमुपगतः। तत्र कृपालवो महर्षयः पुत्रप्राप्तये तेनैन्द्रीमिष्टिमकारयन्। एकस्मिन् दिने निशि पिपासितो युवनाश्वो यज्ञशाला प्रविश्य शयानानृषीनवलोक्योपायान्तराभावात् पुंसवनमन्त्रैरभिमन्त्रितं कलशजलमपिवत्। यदा प्रातःकाले उत्थाय ऋषयो जलहीन कलशमवलोक्य कस्येदं कर्म केनेदं पुंसवनंजलं पतिमिति पप्रच्छुः तदा तृषार्तेन राज्ञा पतिमिति ज्ञात्वा ते दैवबलं प्रवलं मत्वेश्वरस्य चरणयो र्नमश्चक्रुः। प्रसवसमये समागते दक्षिणं कुक्षिं निर्भिद्य युवनाश्वस्य चक्रवर्ती पुत्रोऽजायत। भृशं रुदन्तं तं बालकं विलोक्य ऋषयः प्रोचुःबालकोऽयं कस्य दुग्धं पास्यति? तदेन्द्र उक्तवान्, मम पास्यति। ततो वत्स! मा रोदीरित्युक्त्वा स्वां तर्जनीमङ्गुलिं तस्य मुखे निचिक्षेप—

कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम्।
मां धाता वत्स! मारोदीरितीन्द्रो देशिनीमदात्॥ ९।६।३१

देवद्विजप्रसादस्य बालकस्य पितु र्युवनाश्वस्य मृत्युर्नाभवत्, किन्तु स तपस्तप्त्वा मुक्तो बभूव। इन्द्रस्तस्य बालकस्य नामकरणं त्रसद्दस्युरिति चक्रे, यतोहि रावणादयो दस्यवस्तेनोद्विग्ना आसन्। त्रसद्दस्योरेव नामान्तरं मान्धाताऽप्यासीत्।

त्रसद्दस्युरितीन्द्रोऽङ्ग! विदधे नाम तस्य वै।
यस्मात् त्रस्यन्ति ह्युद्विग्ना दस्यवो रावणादयः॥ ९।६।३३

(२) राज्ञो रुचकस्य पञ्चसु पुत्रेषु ज्यामघः कनिष्ठ आसीत्। तस्य भार्याया नामासीत् शैव्या। ज्यामघस्य काचिन् सन्तति र्नासीत्। शैव्याभयेन तेनान्यो विवाहोऽपि न कृतः। एकदा स शत्रुगेहाद् भोज्यानाम्नीमेकां कन्यामपहृत्य तां रथे उपवेश्य स्वगृहेऽनयत्। शैव्यास्यपत्यू

रथे समुपविष्टां तां निरीक्ष्यामर्षिता सती स्वं पतिं प्राह अरे कपटिन् ! मत्स्थाने रथे केयं समारोपिता ? तदा ज्यामघेनोक्तम्- इयं तव पुत्रवधू- र्विद्यते। ततः स्मयन्ती सा प्रोवाच-अहं तु वन्ध्याऽस्मि, न मे काऽपि सन्ततिः विद्यते, तर्हि कथमिय मे पुत्रवधूः ? ततो राज्ञाभिहितम्-राज्ञि ! जनिष्यमाणस्य ते पुत्रस्येयं वधूर्भविश्री। राज्ञ एतद् वचनं विश्वेदेवाः पितरश्चान्वमोदन्त। किञ्चित्कालान्तरं शैव्या गर्भमाधात्, समये सुकुमारं कुमार च सुपुवे, यस्य नाम विदर्भ इति जातः। स हि शैव्यायाः साध्वीं पुत्रवधूं भुजिष्यामुपयेमे—

> शैव्या गर्भमधात् काले कुमारं सुपुवे शुभम्।
> स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम्॥ ६।६।३६

## (६.१०) शशाद - ककुत्स्थयोरुपाख्यानम्

(क) एकदा मनुपत्रेणेक्ष्वाकुणाऽष्टकाश्राद्धे मेध्यं मांसमानेतुं स्वकीयं ज्येष्ठं पुत्रं विकुक्षिमादिशत्। तेन बाढमित्युक्त्वा वनयात्रा कृता। तत्र स श्राद्धयोग्यान् पशून् हत्वा श्रान्तो बुभुक्षितश्च भूत्वैकं शशं भक्षयित्वा शेषं मांसं नीत्वा पित्रे निवेदयामास। इक्ष्वाकुणा यदा तस्य मांसस्य प्रोक्षणाय गुरुर्वसिष्ठोऽभ्यर्थितस्तदा तेनोक्तं यदयं मांसो दूषितः श्राद्धस्यायोग्यश्च विद्यते। एवं गुरुणाऽभिहिते इक्ष्वाकुः पुत्रस्य तत्कार्यं ज्ञात्वा शास्त्रीयविधेरुल्लङ्घनकरिणं तं देशान्निःसारयामास। अनन्तरमिक्ष्वाकुणा गुरुदवेन सार्कं ज्ञानस्य चर्चां विधाय योगद्वारा स्वं शरीरं परित्यज्य परमं पदं प्राप्तम्। पितर्युपरते विकुक्षिः स्वां राजधानी-मुपेत्य धर्मेण प्रजाः पालयन्निमां पृथ्वीं प्रशशास। तेन बहुभिर्विशालै यज्ञै र्हरिराराधितः शशाद इतिनाम्ना च प्रसिद्धिं गतः—

> पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम्।
> शासदीजे हरिं यज्ञैः शशाद इति विश्रुत.॥ ६।६।११

(ख) राज्ञो विकुक्षेः पुत्रस्य नामासीत् पुरञ्जयः, एनमेव केचिदिन्द्र-वाहं केचन च ककुत्स्थमिति कथयन्ति। तद्यथा—सत्ययुगस्यान्ते देवानां दानवैः सह घोरः सङ्ग्रामो बभूव। तत्र यदा सर्वे देवा दैत्यैः पराजिता-स्तदा तैः साहाय्याय पुरञ्जयो मित्रत्वेन स्वीकृतः। ततः पुरञ्जयेनोक्तं

यदेन्द्रो मे वाहनं भवेत्तदाऽहं युद्धं कर्तुं शक्नुयाम्। पूर्वं तु अस्वीकृतवान् परं पश्चादिन्द्रः सर्वशक्तिमतो विश्वात्मनो भगवतो वचनादेको महान् बलीवर्दो बभूव। सर्वान्तर्यामिना भगवता विष्णुना स्वशक्त्या पुरञ्जयः परिपूरितः। ततः कवचं परिधाय दिव्यं धनुरादाय तीक्ष्णं बाणं च गृहीत्वा महावृषभरूपमिन्द्रमारुह्य स तस्य ककुत्पार्श्वे समुपविश्य देवैः सार्द्धं प्रतीच्यां दिशि दैत्यानां नगरं न्यरुणत्। वीरवरस्य पुरञ्जयस्य दैत्यैः सार्द्धं महारोमाञ्चकारी सङ्ग्रामो बभूव। समरे यो यो दैत्यस्तस्य समक्षे समागतः, पुरञ्जयेन स स यमलोकं प्रापितः। उल्वणं युगान्ताग्निमिव अभिमुखं तस्येषुं वीक्ष्य दैत्या रणाङ्गणं त्यक्त्वा पलायिताः। पुरञ्जयेन तेषां नगरं धनमैश्वर्यञ्च जीत्वा महेन्द्राय प्रददौ।

अतः स राजर्षिः शत्रूणां पुरजयकारणात् पुरञ्जयः, इन्द्रवाहनत्वादिन्द्रवाहनः, तस्य ककुद्युपवेशनाच्च ककुत्स्थः कथ्यते—

> जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये।
> प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः॥ ९।६।१९

## (११) शकुन्तलोपाख्यानम्

चन्द्रवंशे समुत्पन्नस्य राज्ञो नहुषस्य पुत्रस्य ययातेः पञ्चसु पुत्रेषु कनिष्ठात् पितुराज्ञाकारिणः स्नेहभाजनात् पुरोः पौरववंशः प्रचलितः। तत्परम्परायां रैभ्यस्य पुत्रो महाप्रतापी राजा दुष्यन्तोऽभवत्। स एकदा आखेटकं कुर्वन् दैवात् महर्षेः कण्वस्याश्रमे समुपतस्थे। स तत्राद्भुतसौन्दर्यसम्पन्नां स्वप्रभया तपोवनं प्रकाशयन्तीं ललनाललामभूतामतिमनोहरामेकां सुकुमारीं कुमारीमवलोक्य तत्र मुग्धो भूत्वा प्रहसन् मधुरया गिरा पप्रच्छ। आर्ये कमललोचने! त्वं काऽसि, अस्मिन् निर्जने वने कथं भ्रमसि? मदीयं मनः त्वयि आसज्जते। अतः प्रतीयते यत्त्वं नूनं क्षत्रियकन्यकाऽसि, यतो हि पुरुवंशीयानां मनो न कदाप्यधर्मे प्रवर्तते—

> व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे।
> न हि चेतः पौरवाणामधर्मे रमते क्वचित्॥ ९।२०।१२

एतन्निशम्य तया प्रोक्तम्-राजन्! अहं राजर्षेः विश्वामित्रात् मेनकायामप्सरसि समुत्पन्नाऽस्मि। जन्मानन्तरं तत्क्षणमेव मम माता मेनका मां परित्यज्य स्वर्जगाम। सा हि महेन्द्रस्यादेशेन मुनिं तपस्यातः

प्रच्यावयितुं समागताऽऽसीत्। तदनन्तरं दयया शकुन्तैः परिवारितां मां विलोक्य स्नानार्थं गच्छता कृपालुना कुलपतिना कण्वेनाहं स्वाश्रमे समानीता पालिता वर्द्धिता चात्र तिष्ठामि। शकुन्तैः लालितत्वान्मम नाम शकुन्तलास्ति। महाराज! कुलपति र्बहिर्गतोऽस्ति। आज्ञाप्यतां को हि भवतां सत्कारो मया कार्यः? राजन्! आसने उपविश्य पाद्यमर्घ्यंच गृह्णातु भवान्, मुन्यन्नं नीवारं च भुङ्क्त्वा यदीच्छा स्यात्तर्हि भवता कियत्कालं विश्रामो विधेयः—

आस्यतामरविन्दाक्ष! गृह्यतामर्हणं च नः।
भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥६।२०।१४

ततो दुष्यन्तः प्रोवाच-सुमुखि! त्वमसि उत्तमस्य कुलस्य कन्यका, मदीयमनुमान सत्यं जातम्। राजकन्यका अनुकूलं वरं प्राप्य स्वयमेव तस्य वरणं कुर्वन्ति—

उपपन्नमिदं सुभ्रु! जातायाः कुशिकान्वये।
स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥६।२०।१५

गान्धर्वेण च मां भीरु! विवाहेनेहि सुन्दरि!
विवाहानां हि रम्भोरु! गान्धर्वः श्रेष्ठ उच्यते ॥

क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥

ततस्तस्याः स्वीकृतिं लब्ध्वा राजा दुष्यन्तो धर्मपूर्वकं गान्धर्वविवाहविधिना तत्पाणिग्रहणं चकार—

ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम्।
गान्धर्वविधिना राजा देशकालविधानवित् ॥६।२०।१६

ततो रात्रावेकान्तवासेऽमोघवीर्यः स तस्यां गर्भाधानं विधाय ताश्वाश्वास्य प्रातः स्वनगरं ययौ। कियद्दिनानन्तरं शकुन्तला एकं सुकुमारं कुमारमसूत, यस्य विधिवत् संस्कारं कृत्वा कुलपतिः कण्वो भरत इति नामकरणं चकार। सोऽर्भकः शैशवादेवं तेजस्वी बलिष्ठश्चासीत् यत् सिंहशावकान् सहसा बद्ध्वा तैः सह क्रीडतिस्म। अनन्तर कण्वस्याज्ञया यदा शकुन्तला दुष्यन्तस्य समीपे गतवती तदा स दुर्वाससः शापात् न तां पर्यचिनोत्। तेनातिविव्हलां तां विलोक्याकाशवाणी बभूव-राजन्!

अस्या अनादरो न विधेयः, त्वं पुत्रस्य च पालनं पोषणं कुरुष्व । पुत्रो हि पुन्नाम्नो नरकात् त्रायते । त्वमेवास्यासि जनकः । इयं साध्वी शकुन्तला सत्यं ब्रवीति—

> माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
> भरस्व पुत्रं दुष्यन्त ! मावमंस्थाः शकुन्तलाम् ॥
> रेतोधाः पुत्रो नयति नरदेव ! यमक्षयात् ।
> त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥९।२०।२१,२२

एवं जाताया आकाशवाण्या विश्वासं कृत्वा धर्मज्ञो राजा दुष्यन्तः शकुन्तलां भरतं च सहर्षं स्वीचकार । तदनन्तरं प्रजाः पालयन् ताभ्यां सह सुखेन बहुतिथं कालं विनाय ।

## (१२) राज्ञोरन्तिदेवस्य चरितम्

पुरुवंशपरम्परायां रन्तिदेवनामकः एकोऽतिथिसेवको महादानी धार्मिको धीरश्च राजा बभूव, यस्य कीर्तिः विभिन्नेषु पुराणेषु महता गौरवेण गीताऽस्ति । एष राजा दीनानां दुःखनिवारणं स्वकीयं परमं कर्त्तव्यं मन्यतेस्म । एतस्य दानशीलता निशम्य याचकाः प्रत्यहमुपतिष्ठन्तेस्म । आर्तजनेभ्यो निरन्तरं सर्वस्व वितरतोऽस्य दैवाद् दैन्यमुपगतम्, कुटम्बेन सह कष्टमनुभवतोऽस्य ४८ दिनानि व्यतीयुः—

> निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ।
> व्यतीयुरष्टचत्वारि शदहान्यपिबतः किल ॥ ९।२१।३

अथ ४९ दिने यदाऽयं किञ्चिदन्नं विभज्य भोक्तुमुद्यतस्तदा कश्चन ब्राह्मणोऽतिथिरुपगम्य भोजनमयाचत् । तच्छ्रुत्वाऽनेन भोजनस्य स्वकीयो भागस्तस्मै प्रदत्तः । तस्मिन् गते यदा स्वधर्मपत्न्या भागं भोक्तुं प्रवृत्तः तदा पुनरपि द्वितीयो बुभुक्षितः शूद्रः उपस्थाय भोजनमयाचत् । ततस्तं शूद्रातिथिं भगवन्तं मत्वा तदप्यन्नं तस्मै दत्तवान् । ततः केवलं पुत्रस्य भागोऽवशिष्ट आसीत् । तमपि विभज्य यावदेव भोक्तुमुपविष्टः तावदेव कुकुरैः साकं तृतीयोऽतिथिरागत्य भोजनमयाचत् । ततः आदरपूर्वकं तदप्यन्नं तस्मै समर्प्य नमस्कारं कृतवान्—

> राजन् ! मे दीयतामन्नं सगणाय बुभुक्षिते ।
> स आदृत्यावशिष्टं यत् बहुमानपुरःसरम् ॥
> तच्च दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥९।२१।९

एवं स्वभाग-स्त्रीभाग पुत्रभागवितरणानन्तरं यावदवशिष्टं जलं पातुं विचारयति तावदेव चतुर्थोऽतिपिपासितो व्याकुलेन्द्रियः चाण्डालः उपस्थाय प्रोक्तवान्-राजन् ! अहमतिपिपासितोऽस्मि । पानीयं विना मे प्राणा निःसरन्ति । अतः कृपया एतज्जलं मह्यं देहि, येन मम प्राणः न निःसरेयुः । एवं सकरुणं तद्वचनं निशम्य पुत्रपत्नीभ्यां सह मरणासन्नो राजा रन्तिदेवः तज्जलमपि तस्मै ददद्उवाच--

न कामयेऽहं गतिमीश्वरात् परामष्टर्द्धि युक्तामपुनर्भवं च ।
आर्ति प्रपद्येऽखिलदेहभाजामन्तः स्थितो येन भवन्त्यदुःखाः ॥

इति प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः ॥ ९।२१।११,१२

ततस्तस्य दानशीलतया औदार्येण धैर्येण च परमः प्रसन्नो नारायणः साक्षादाविर्भूय सस्नेहं तमाश्वासयन् तस्मै दिव्यलोकप्राप्तये वरं प्रदायान्तर्हितो जातः ।

एतानि सर्वाणि चरितानि श्रीमद्भागवते नवमस्कन्धस्याधारेण संक्षेपतो लिखितानि सन्ति । विस्तारस्तु तत्र पुराणान्तरेषु च द्रष्टव्यः ।